तीर्थानामवगाहनानि च गजध्यानं विना यत् पद-
द्वन्द्वाम्भोरुहसंस्मृतिं विजयते देवः स नारायणः ॥ २० ॥

आनन्द गोविन्द मुकुन्द राम
नारायणानन्त निरामयेति ।
वक्तुं समर्थोऽपि न वक्ति कश्चिद्
अहो जनानां व्यसनानि मोक्षे ॥ २१ ॥

क्षीरसागरतरङ्गशीकरासारतारकितचारुमूर्तये ।
भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः ॥२२॥

इति श्रीकुलशेखरेण राज्ञा विरचिता
मुकुन्दमाला समाप्ता ।

---

## व्रजविहारः ।

---

गायन्तीनां गोपसीमन्तिनीनां
श्रोताकाङ्क्षामर्पिरोलम्बमालाम् ।
निःश्वासश्वासमाम्लवक्त्रारविन्दे
कुर्वन्नव्याद्देवकीनन्दनो वः ॥ १ ॥

सुपर्णस्कन्धाद्री रचितमणिशृङ्गो जलधिजा
मुखाम्भोजे भृङ्गो निगमविलसत्पञ्जरशुकः ।
त्रिलोकीकस्तूरीतिलककमनीयो व्रजवधू-
विहारी श्रीकृष्णो दिशतु भवतां शर्म सततम् ॥२॥

कस्त्वं बाल ? बलानुजस्त्वमिह किं ? मन्मन्दिराशङ्कया
बुद्धं तत् नवनीतकुम्भविवरे हस्तं कथं न्यस्यसि ?
कर्त्तुं तत्र पिपीलिकापनयनं सुप्ताः किमुद्बोधिताः ?
बाला वत्सगतिं विवेक्तुमिति संजल्पन् हरिः पातु वः ॥ २ ॥

जीर्णा तरिः सरिदतीवगभीरनीरा
बाला वयं सकलमित्यमनर्थहेतुः ।
निस्तारबीजमिदमेव कृशोदरीणां
यन्माधवस्त्वमसि सम्प्रति कर्णधारः ॥ ४ ॥

श्रीश्रीकृष्णो जयति जगतां जन्मदाता च पाता
हर्त्ता चान्ते हरति भजतां यश्च संसारभीतिम् ।
राधानाथः सजलजलदश्यामलः पीतवासा
वृन्दारण्ये विहरति सदा सच्चिदानन्दरूपः ॥ ५ ॥

ज्योतीरूपं परमपुरुषं निर्गुणं नित्यमेकं
नित्यानन्दं निखिलजगतामीश्वरं विश्वबीजम् ।
गोलोकेशं द्विभुजमुरलीधारिणं राधिकेशं
वन्दे वृन्दारकहरिहरब्रह्मवन्द्यांघ्रिपद्मम् ॥ ६ ॥

येषां श्रीमद्यशोदासुतपदकमले
नास्ति भक्तिर्नराणां
येषामाभीरकन्याप्रियगुणकथने
नानुरक्ता रसज्ञा ।
येषां श्रीकृष्णलीलाललितगुणकथा
सादरौ नैव कर्णौ

धिक् तान् धिक् तान् धिगेतान् कथयति नितरां
कीर्त्तनस्थो मृदङ्गः ॥ ७ ॥

केचिद् वदन्ति धनहीनजनो जघन्यः,
केचिद् वदन्ति गुणहीनजनो जघन्यः।
व्यासो वदत्यखिलवेदविशेषविज्ञो
नारायणस्मरणहीनजनो जघन्यः ॥ ८ ॥

वृन्दावने वृक्षलताप्रताने
वृन्दावनेशस्य विहारहेतोः।
पुरा विधात्रा रचितान् सुकुञ्जान्,
जगाम कृष्णः सह राधया सः ॥ ९ ॥

नवीनमेघोपमनीलदेहः,
सुपीतपट्टाम्बरयुग्मधारी।
स्मिताननः कुण्डलवान् किरीटी,
वंशीधरो मालतिमाल्यधारी ॥ १० ॥

नवीननीलाम्बुदकान्तिमद्वपुः,
सस्मेरवक्राम्बुजवेणुवादनः।
अनेकरत्नाभरणै र्विभूषितः,
स सुन्दराङ्गो महसा महोज्ज्वलः ॥ ११ ॥

गोपीजनानन्दकरो मुरारिः
वृन्दावनेन्द्रो वनमाल्यशोभी।
वंशीनिनादेन व्रजाङ्गनानां
मनांसि सम्मोहितवान् स कामी ॥ १२ ॥

नाशाय बालकगणान् सहि कंसराजः,
तां पूतनां मानुषराक्षसीञ्च ।
संप्रेषयामास यदा तदा तां,
मायाशिशुः प्राणसमं शुशोष ॥ १३ ॥

जिघांसया समायान्तीं पूतनां राक्षसीवराम् ।
क्रोड़े कृत्वा स्तन्यदात्रीं जघान बालको हरिः ॥१४॥

गोपीगणो तमिह कामदृशा भजन्ते,
यं भक्तिभाज इह केवलभक्तिभावैः ।
यं योगिनो हृदि धिया परिचिन्तयन्ति,
तं केवलं कमललोचनमाश्रयेऽहम् ॥ १५ ॥

कृष्णे कारुण्यपूर्णे शशधरवदने पीतकौषेयवस्त्रे
रत्नालङ्कारभूषे सजलजलधरश्यामले सुन्दराङ्गे ।
वंशीवाद्यप्रमोदे व्रजजनयुवतीजीवने यादवेन्द्रे
भूयाद्भक्तिर्दृढ़ा मे सकलसुरवरैः सेव्यमाने मुरारौ ॥१६॥

वृन्दारण्ये विहरति सदा वासुदेवो दयालु,
र्गोपस्त्रीभिः स्मरशरहतैर्भिन्नहृत्कामुकीभिः ।
गोपैर्बालैरपि सहचरैः सार्द्धमानन्दयुक्तै,
र्योऽसौ कृष्णः परमकरुणस्तं सदा चिन्तयेऽहम् ॥ १७ ॥

वृन्दावनस्थानविहारहेतो,
राधासमं कुञ्जगृहप्रवेशम् ।
चकार गोपीजनवल्लभोऽसौ,
पायादपायादपि मां मुरारिः ॥ १८ ॥

वने वने कुञ्जवने मुरारि
र्भ्रमन् भ्रमन् भ्राजति राधिका च।
सहैव कुञ्जे रमते च राधया,
पायादपायादिह कृष्ण एकः॥ १९ ॥
अनन्त! विश्वम्भर! वासुदेव!
समस्तदेवैरपि वन्द्यपाद!
निरामय! त्राणपते! मुरारे!
हरे! हराशेषमहाघसङ्घम्॥ २० ॥

इति श्रीधरस्वामिना विरचितं व्रजविहारकाव्यं
समाप्तम्।

---

## अपराधभञ्जनस्तोत्रम्।

---

शान्तं पद्मासनस्थं शशधरमुकुटं पञ्चवक्त्रं त्रिनेत्रम्।
शूलं वज्रञ्च खड्गं परशुमपि वरं दक्षिणाङ्गे वहन्तम्।
नागं पाशञ्च घण्टां डमरुकसहितं चाङ्कुशं वामभागे
नानालङ्कारदीप्तं स्फटिकमणिनिभं पार्वतीशं भजामि॥१॥
वन्दे देवमुमापतिं सुरगुरुं वन्दे जगत्कारणं
वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनां पतिम्।
वन्दे सूर्य्यशशाङ्कवह्निनयनं वन्दे मुकुन्दप्रियं
वन्दे भक्तजनाश्रयञ्च वरदं वन्दे शिवं शङ्करम्॥२॥

आदौ कर्मप्रसङ्गात् कलयति कलुषं मातृकुक्षौ स्थितः सन्,
विण्मूत्रामेध्यमध्ये व्यथयति नितरां जाठरो जातवेदाः ।
यद्यद्वा तत्र दुःखं विषयति विषमं शक्यते केन वक्तुं
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो ! ॥३॥
बाल्ये दुःखातिरेको मललुलितवपुः स्तन्यपाने पिपासा,
नो शक्यं चेन्द्रियेभ्यो भवगुणजनिता जन्तवो मां तुदन्ति ।
नानारोगोत्थदुःखादुदरपरिवशः शङ्करं न स्मरामि,
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो ! ॥४॥
प्रौढोऽहं यौवनस्थो विषयविषधरैः पञ्चभिर्मर्मसन्धौ
दष्टो नष्टो विवेकः सुतधनयुवतीस्वादुसौख्ये निषण्णः ।
शैवे चिन्ताविहीनं मम हृदयमहो ! मानगर्वाधिरूढं,
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो ! ॥५॥
वार्द्धक्ये चेन्द्रियाणां विगतगतमतेराधिदैवादितापैः
पापै रोगैर्वियोगैरसद्दृशवपुषं प्रौढहीनञ्च दीनम् ।
मिथ्यामोहाभिलाषैर्भ्रमति मम मनो धूर्जटेर्ध्यानशून्यं
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो ! ॥६॥
नो शक्यं स्मार्त्तकर्म प्रतिपदगहनं प्रत्यवायाकुलाख्यं
श्रौते वार्त्ता कथं मे द्विजकुलविहिते ब्रह्ममार्गे च सारे ।
नष्टो धर्मो विचारः श्रवणमननयोः को निदिध्यासितव्यः
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो ! ॥७॥
स्नात्वा प्रत्यूषकाले स्नपनविधिविधौ नाहृतं गाङ्गतोयं
पूजार्थं वा कदाचिद् बहुतरगहनात् खण्डबिल्वैकपत्रम् ।

नानीता पद्ममाला सरसि विकसिता गन्धपुष्पे त्वदर्थं
चन्तव्योमेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो !॥८
दुग्धैर्मध्वाज्ययुक्तैर्घटशतसहितैः स्नापितं नैव लिङ्गं
नो लिप्तं चन्दनाद्यैः कनकविरचितैः पूजितं न प्रसूनैः।
धूपैः कर्पूरदीपैर्विविधरसयुतैर्नैव भच्योपहारैः
चन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो !॥९॥
नग्नो निःसङ्गशुद्धस्त्रिगुणविरहितो ध्वस्तमोहान्धकारो
नासाग्रे न्यस्तदृष्टिर्विहरभवगुणैर्नैव दृष्टं कदाचित्।
उन्मत्तावस्थया त्वां विगतकलिमलं शङ्करं न स्मरामि,
चन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो !॥१०॥
ध्यानं चित्ते शिवाख्यं प्रचुरतरधनं नैव दत्तं द्विजेभ्यो,
हव्यं ते लचसंख्यं हुतवहवदने नार्पितं वीजमन्त्रैः।
नो जप्तं गाङ्गतीरे व्रतपरिचरणैरुद्रजप्यैर्न वेदैः,
चन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो ! ॥११॥
स्थित्वास्थाने सरोजे प्रणवमयमरुत् कुम्भके सूक्ष्ममार्गे,
शान्ते स्वान्ते प्रलीने प्रकटितगहने ज्योतिरूपे पराख्ये।
लिङ्गं त्वद्ब्रह्मवाच्यं सकलमभिमतं नैव दृष्टं कदाचित्,
चन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो !॥१२॥
आयुर्नश्यति पश्यतां प्रतिदिनं, याति चयं यौवनं,
प्रत्यायान्ति गताः पुनर्न दिवसाः, कालो जगद्भचकः।
लच्मीस्तोयतरङ्गभङ्गचपला, विद्युत्-चलं जीवनं,
तस्मान्मां शरणागतं शरणद ! त्वं रच रचाधुना ॥ १३ ॥

चन्द्रोद्भासितशेखरे स्मरहरे गङ्गाधरे शङ्करे
सर्पैर्भूषितकण्ठकर्णविवरे नेत्रोत्थ-वैश्वानरे।
दन्तित्वक्कृतिसुन्दराम्बरधरे त्रैलोक्यसारे हरे
मोक्षार्थं कुरु चित्तवृत्तिममलामन्यैस्तु किं कर्मभिः॥१४॥

किं दानेन धनेन वाजिकरिभिः प्राप्तेन राज्येन किं?
किं वा पुत्रकलत्रमित्रपशुभिर्देहेन गेहेन किम्।
ज्ञात्वैतत् क्षणभङ्गुरं सपदि रे! त्याज्यं मनो दूरतः
स्वात्मार्थं गुरुवाक्यतो भज भज श्रीपार्व्वतीवल्लभम्॥१५॥

करचरणकृतं वा कायजं कर्मजं वा
श्रवणनयनजं वा मानसं वापराधम्।
विदितमविदितं वा सर्व्वमेतत् क्षमस्व
जय जय करुणाब्धे श्रीमहादेव शम्भो!॥१६॥

गात्रं भस्मसितं सितञ्च हसितं हस्ते कपालं सितं
खट्वाङ्गञ्च सितं सितश्च वृषभः कर्णे सिते कुण्डले।
गङ्गाफेनसितं जटापयसि तच्चन्द्रः सितो मूर्द्धनि
सोऽयं सर्वसितो ददातु विभवं पापक्षयं शङ्करः॥१७॥

इति श्रीपरमहंसपरिव्राजकाचार्य्य-श्रीशङ्कराचार्य्य-
भगवत्कृतमपराधभञ्जनस्तोत्रं समाप्तम्।

# शृङ्गारतिलकम्।

बाहू द्वौ च मृणालमास्यकमलं लावण्यलीला जलं
श्रोणी तीर्थशिला च नेत्रसफरं धम्मिल्लशैवालकम्।
कान्तायाःस्तनचक्रवाकयुगलं कन्दर्पबाणानलै-
र्दग्धानामवगाहनाय विधिना रम्यं सरो निर्मितम्॥१॥

आयाता मधुयामिनी यदि पुनर्नायात एव प्रभुः
प्राणा यान्तु विभावसौ यदि पुनर्जन्मग्रहं प्रार्थये।
व्याधः कोकिलबन्धने विधुपरिध्वंसे च राहुग्रहः
कन्दर्पे हरनेत्रदीधितिरियं प्राणेश्वरे मन्मथः॥ २ ॥

इन्दीवरेण नयनं मुखमम्बुजेन
कुन्देन दन्तमधरं नवपल्लवेन।
अङ्गानि चम्पकदलैः स विधाय धाता
कान्ते! कथं घटितवानुपलेन चेतः॥ ३ ॥

एको हि खञ्जनवरो नलिनीदलस्थो
दृष्टः करोति चतुरङ्गबलाधिपत्यम्।
किं मे करिष्यति? भवद्वदनारविन्दे
जानामि नो नयनखञ्जनयुग्ममेतत्॥ ४ ॥

ये ये खञ्जनमेकमेव कमले पश्यन्ति दैवात् क्वचित्
ते सर्वे मनुजा भवन्ति सुतरां प्रख्यातभूमीभुजः।
त्वद्वक्त्राम्बुजनेत्रखञ्जनयुगं पश्यन्ति ये ये जना-
स्ते ते मन्मथबाणजालविकला मुग्धे! किमित्यद्भुतम्!॥५॥

झटिति प्रविश गेहं मा बहिस्तिष्ठ कान्ते !
ग्रहणसमयवेला वर्त्तते शीतरश्मेः ।
अयि ! सुविमलकान्तिं वीक्ष्य नूनं स राहु-
र्ग्रसति तव मुखेन्दुं पूर्णचन्द्रं विहाय ॥ ६ ॥

कस्तूरीवरपत्रभङ्गनिकरो भ्रष्टो न गण्डस्थले
नो लुप्तं सखि ! चन्दनं स्तनतटे धौतं न नेत्राञ्जनम् ।
रागो न स्खलितस्तवाधरपुटे ताम्बूलसंवर्द्धितः
किं रुष्टासि गजेन्द्रमन्दगमने ! किं वा शिशुस्ते पतिः ? ॥७॥

समायाते कान्ते कथमपि च कालेन बहुना
कथाभिर्देशानां सखि ! रजनिरर्द्धं गतवती
ततो यावल्लीलाकलहकुपितास्मि प्रियतमे
सपत्नीव प्राची दिगियमभवत् तावदरुणा॥ ८ ॥

श्लाघ्यं नीरसकाष्ठताडनशतं श्लाघ्यः प्रचण्डातपः
क्लेशः श्लाघ्यतरः सुपङ्कनिचयैः श्लाघ्योऽतिदाहोऽनलैः ।
यत् कान्ताकुचपार्श्वबाहुलतिकाहिल्लोललीलासुखं
लब्धं कुम्भकर ! त्वया ; न हि सुखं दुःखैर्विना लभ्यते॥९

किं मे वक्त्रमुपेत्य चुम्बसि बलात् निर्लज्ज ! लज्जा न ते
वस्त्रान्तं शठ ! मुञ्च मुञ्च शपथैः किं धूर्त्त ! निर्वञ्चसे ।
खीणाहं तव रात्रिजागरवशात् तामेव याहि प्रियां
निर्माल्योज्झितपुष्पदामनिकरे का षट्पदानां रतिः॥१०॥

वाणिज्येन गतः स मे गृहपतिर्वार्त्तापि न श्रूयते
प्रातस्तज्जननी प्रसूततनया जामातृगेहं गता ।

बालाहं नवयौवना निशि कथं स्थातव्यमस्मद्गृहे
सायं सम्प्रति वर्त्तते पथिक हे! स्थानान्तरं गम्यताम्॥११॥
यामिन्येषा बहुलजलदैर्बद्धभीमान्धकारा
निद्रां यातो मम पतिरसौ क्लेशितः कर्मदुःखी।
बाला चाहं मनसिजभयात् प्रासगाढ़प्रकम्पा
ग्रामश्चोरैरयमुपहतः पान्थ! निद्रां जहीहि॥१२॥
क भ्रातश्चलितोऽसि? वैद्यकगृहं,किं तव? शान्त्यै रुजां
किं ते नास्ति सखे! गृहे प्रियतमा सर्वं गदं हन्ति या?।
वातञ्चेत् कुचकुम्भमर्दनवशात् पित्तञ्च वक्त्रामृतात्
श्लेष्माणं विनिहन्ति हन्त! सुरतव्यापारकेलिश्रमात्॥१३

दृष्टिं देहि पुनर्बाले! कमलायतलोचने!।
श्रूयते हि पुरा लोके विषस्य विषमौषधम्॥१४॥
अन्तर्गता मदनवह्निशिखावली या
सा बाधते किमिह चन्दनलेपनेन।
यत् कुम्भकारपलनोपरिपङ्कलेप-
स्तापाय केवलमसौ न तु तापशान्त्यै॥१५॥

दृष्ट्वा यासां नयनसुभगं वङ्गवाराङ्गनानां
देशत्यागः परमकृतिभिः कृष्णसारैरकारि।
तासामेव स्तनयुगजिता दन्तिनः सन्ति मत्ताः
प्रायो मूर्खः परिभवविधौ नाभिमानं तनोति॥१६॥
अपूर्वो दृश्यते वह्निः कामिन्याः स्तनमण्डले।
दूरतो दहते गात्रं हृदि लग्नस्तु शीतलः॥१७॥

कुसुमे कुसुमोत्पत्तिः श्रूयते न तु दृश्यते ।
बाले तव मुखाम्भोजे कथमिन्दीवरद्वयम् ॥ १७ ॥

अयि मन्मथचूतमञ्जरि ! श्रवणायतचारुलोचने !
अपहृत्य मनः क्व यासि मे किमराजकमत्र राजते ॥ १८॥

कोपस्त्वया यदि कृतो मयि पङ्कजाक्षि !
सोऽस्तु प्रियस्तव किमत्र विधेयमन्यत् ।
आश्लेषमर्पय मदर्पितपूर्व्वमुच्चै-
रुच्चैः समर्पय मदर्पितचुम्बनञ्च ॥ २० ॥

इति श्रीकालिदासकृतं शृङ्गारतिलकं समाप्तम् ।

---

## ऋतुसंहारः ।

### ग्रीष्मवर्णना ।

प्रचण्डसूर्य्यः स्पृहणीयचन्द्रमाः
सदावगाहक्षमवारिसञ्चयः ।
दिनान्तरम्योऽभ्युपशान्तमन्मथो
निदाघकालः समुपागतः प्रिये ! ॥ १ ॥

निशाः शशाङ्कः क्षतनीरराजयः
क्वचिद्विचित्रं जलयन्त्रमन्दिरम् ।
मणिप्रकाराः सरसञ्च चन्दनं,
शुचौ प्रिये ! यान्ति जनस्य सेव्यताम् ॥ २ ॥

सुवासितं हर्म्यतलं मनोरमं,
प्रियामुखोच्छ्वासविकम्पितं मधु ।

सुतन्त्रिगीतं मदनस्य दीपनं,

शुचौ निशीथेऽनुभवन्ति कामिनः ॥ ३ ॥

नितम्बबिम्बैः सुदुकूलमेखलैः

स्तनैः सहाराभरणैः सचन्दनैः ।

शिरोरुहैः स्नानकषायवासितैः

स्त्रियो निदाघं शमयन्ति कामिनाम् ॥ ४ ॥

नितान्तलाक्षारसरागलोहितै-

र्नितम्बिनीनां चरणैः सनूपुरैः ।

पदे पदे हंसरुतानुकारिभि-

र्जनस्य चित्तं क्रियते समन्मथम् ॥ ५ ॥

पयोधराश्चन्दनपङ्कशीतला-

स्तुषारगौरार्पितहारशेखराः ।

नितम्बदेशाश्च सहेममेखलाः

प्रकुर्वते कस्य मनो न सोत्सुकम् ॥ ६ ॥

समुद्गतस्वेदचिताङ्गसन्धयो,

विमुच्य वासांसि गुरूणि सांप्रतम् ।

स्तनेषु तन्वंशुकमुन्नतस्तना

निवेशयन्ते प्रमदाः सयौवनाः ॥ ७ ॥

सचन्दनाम्बुव्यजनोद्भवानिलैः

सहारयष्टिस्तनमण्डलार्पणैः ।

सवल्लकी-काकलि-गीतनिस्वनैः

प्रबुध्यते सुप्त इवाद्य मन्मथः ॥ ८ ॥

सितेषु हर्म्येषु निशासु योषितां
सुखप्रसुप्तानि मुखानि चन्द्रमाः ।
विलोक्य निर्यन्त्रणमुत्सुकश्चिरं
निशाक्षये याति ह्रियैव पाण्डुताम् ॥ ९ ॥

असह्यवातोद्धतरेणुमण्डला
प्रचण्डसूर्य्यातपतापिता मही ।
न शक्यते द्रष्टुमपि प्रवासिभिः
प्रियावियोगानलदग्धमानसैः ॥ १० ॥

मृगाः प्रचण्डातपतापिता भृशं
तृषा महत्या परिशुष्कतालवः ।
वनान्तरे तोयमिति प्रधाविता
निरीक्ष्य भिन्नाञ्जनसन्निभं नभः ॥ ११ ॥

सविभ्रमैः सस्मितजिह्मवीक्षितै-
र्विलासवत्यो मनसि प्रवासिनाम् ।
अनङ्गसन्दीपनमाशु कुर्वते
यथा प्रदोषाः शशिचारुभूषणाः ॥ १२ ॥

रवेर्मयूखैरभितापितो भृशं
विदह्यमानः पथि तप्तपांशुभिः ।
अवाङ्मुखो जिह्मगतिः श्वसन् मुहुः
फणी मयूरस्य तले निषीदति ॥ १३ ॥

तृषा महत्या हतविक्रमोद्यमः
श्वसन् मुहुर्भूरि विदारिताननः ।

न हन्त्यदूरेऽपि गजान् मृगाधिपो
विलोलजिह्वश्चलिताग्रकेशरः ॥ १४ ॥
विशुष्ककण्ठोद्गतशीकराम्भसो
गभस्तिभिर्भानुमतोऽभितापिताः ।
प्रवृद्धतृष्णोपहता जलार्थिनो
न दन्तिनः केशरिणोऽपि बिभ्यति ॥ १५ ॥
हुताग्निकल्पैः सवितुर्मरीचिभिः
कलापिनः क्लान्तशरीरचेतसः ।
न भोगिनं घ्नन्ति समीपवर्त्तिनं
कलापचक्रेषु निवेशिताननम् ॥ १६ ॥
सभद्रमुस्तं परिपाण्डुकर्द्दमं
सरः खनन्नायतपोत्रमण्डलैः ।
प्रदीप्तभासा रविणाभितापितो
वराहयूथो विशतीव भूतलम् ॥ १७ ॥
विवस्वता तीव्रतरांशुमालिना
सपङ्कतोयात् सरसोऽभितापितः ।
उत्प्लुत्य भेकस्तृषितस्य भोगिनः
फणातपत्रस्य तले निषीदति ॥ १८ ॥
समुद्धृताशेषमृणालजालकं
विपन्नमीनं द्रुतभीतसारसम् ।
परस्परोत्पीड़नसंहतैर्गजैः
कृतं सरः सान्द्रविमर्द्दकर्द्दमम् ॥ १९ ॥

रविप्रभोद्भिन्नशिरोमणिप्रभो
विलोलजिह्वाद्वयलीढमारुतः ।
विषाग्निसूर्य्यातपतापितः फणी
न हन्ति मण्डूककुलं तृषाकुलः ॥ २० ॥

सफेणलालावृतवक्त्रसंपुटं
विनिर्गतालोहितजिह्वमुन्मुखम् ।
तृषाकुलं निःसृतमद्रिगह्वराद्
गवेषमाणं महिषीकुलं जलम् ॥ २१ ॥

पटुतरवनदाहात् प्लुष्टशस्यप्ररोहाः
परुषपवनवेगात् क्षिप्तसंशुष्कपर्णाः ।
दिनकरपरितापात् क्षीणतोयाः समन्ताद्
विदधति भयमुच्चैर्वीक्ष्यमाणा वनान्ताः ॥ २२ ॥

श्वसिति विहगवर्गः शीर्णपर्णद्रुमस्थः
कपिकुलमुपयाति क्लान्तमद्रेर्निकुञ्जम् ।
भ्रमति गवययूथः सर्वतस्तोयमिच्छन्
शरभकुलमजिह्मं प्रोद्धरत्यम्बु कूपात् ॥ २३ ॥

विकचनवकुसुम्भस्वच्छसिन्दूरभासा
परुषपवनवेगोद्भूतवेगेन तूर्णम् ।
तरुविटपलताग्रालिङ्गनव्याकुलेन
दिशि दिशि परिदग्धा भूमयः पावकेन ॥ २४ ॥

ध्वनति पवनविद्धः पर्वतानां दरीषु
स्फुटति पटुनिनादः शुष्कवंशस्थलीषु ।

प्रसरति तृणमध्ये लब्धवृद्धिः क्षणेन
क्षपयति मृगयूथं प्रान्तलग्नो दवाग्निः ॥ २५ ॥
बहुतर इव जातः शाल्मलीनां वनेषु
स्फुटति कनकगौरः कोटरेषु द्रुमाणाम् ।
परिणतदलशाखादुत्पतत्याशु वृक्षाद्
भ्रमति पवनधूतः सर्वतोऽग्निर्वनान्ते ॥ २६ ॥
गजगवयमृगेन्द्रा वह्निसन्तप्तदेहाः
सुहृद इव समेता द्वन्द्वभावं विहाय ।
हुतवहपरिखेदादाशु निर्गत्य कक्षाद्
विपुलपुलिनदेशान् निम्नगामाश्रयन्ते ॥ २७ ॥
कमलवनचिताम्बुः पाटलामोदरम्यः
सुखसलिलनिषेकः सेव्यचन्द्रांशुजालः ।
व्रजतु तव निदाघः कामिनीभिः समेतो
निशि सुललितगीतैर्हर्म्यपृष्ठे सुखेन ॥ २८ ॥

इति कालिदासकृतावृतुसंहारे काव्ये
ग्रीष्मवर्णना समाप्ता ।

---

## वर्षावर्णना ।

---

ससीकराम्भोधरमत्तकुञ्जर-
स्तडित्पताकोऽशनिशब्दमर्दलः ।

समागतो राजवदुन्नतध्वनि
र्घनागमः कामिजनप्रियः प्रिये ! ॥ १ ॥
नितान्तनीलोत्पलपत्रकान्तिभिः
क्वचित् प्रभिन्नाञ्जनराशिसन्निभः ।
क्वचित् सगर्भप्रमदास्तनप्रभैः
समाचितं व्योम घनैः समन्ततः ॥ २ ॥
तृषाकुलैश्चातकपक्षिणां कुलैः
प्रयाचितास्तोयभरावलम्बिनः ।
प्रयान्ति मन्दं नववारिवर्षिणो
बलाहकाः श्रोत्रमनोहरस्वनाः ॥ ३ ॥
बलाहकाश्चाशनिशब्दभूषणाः
सुरेन्द्रचापं दधतस्तडिद्गुणम् ।
सुतीक्ष्णधारापतनोग्रसायका
स्तुदन्ति चेतो ध्वनिभिः प्रवासिनाम् ॥ ४ ॥
प्रभिन्नवैदूर्य्यनिभैस्तृणाङ्कुरैः
समाचिता प्रोत्थितकन्दलीदलैः ।
विभाति शुक्लेतररत्नभूषिता
वराङ्गनेव क्षितिरिन्द्रगोपकैः ॥ ५ ॥
सदा मनोज्ञाम्बुदनादसोत्सुकं
विभाति विस्तीर्णकलापशोभितम् ।
सविभ्रमालिङ्गनचुम्बनाकुलं
प्रवृत्तनृत्यं कुलमद्य वर्हिणाम् ॥ ६ ॥

विपाटयन्त्यः पतितस्तटद्रुमान्
प्रवृद्धवेगैः सलिलैरनिर्मलैः।
स्त्रियः प्रकामा इव जातविभ्रमाः
प्रयान्ति नद्यस्त्वरितं पयोनिधिम् ॥ ७ ॥

तृणोद्गमैरुद्गतकोमलाङ्कुरैश्चितानि नीलैर्हरिणीमुखक्षतैः।
वनानि रम्याणि हरन्ति मानसं विभूषितान्युद्गतपल्लवद्रुमैः॥८॥
विलोलनेत्रोत्पलशोभिताननैर्मृगैः समन्तादुपजातसाध्वसैः।
समाचिता सैकतिनी वनस्थली समुत्सुकत्वं प्रकरोति चेतसः॥९॥

सुतीक्ष्णमुच्चैर्ध्वनतां पयोमुचां
घनान्धकारावृतशर्वरीष्वपि।
तडित्प्रभादर्शितमार्गभूमयः
प्रयान्ति रागादभिसारिकाः स्त्रियः ॥ १० ॥
पयोधरैर्भीमगभीरनिस्वनै-
र्ध्वनद्भिरुद्वेजितचेतसो भृशम्।
कृतापराधानपि योषितः प्रियान्
परिष्वजन्ते शयने निरन्तरम् ॥ ११ ॥
विलोचनेन्दीवरवारिबिन्दुभि-
र्निषिक्तबिम्बाधरचारुपल्लवाः।
निरस्तमाल्याभरणानुलेपनाः
स्थिता निराशाः प्रमदाः प्रवासिनाम् ॥ १२ ॥
विपाण्डवं कीटरजस्तृणान्वितं
भुजङ्गवद्वक्रगतिप्रसर्पितम्।

ससाध्वसैर्भेककुलैर्विलोकितं
प्रयाति निम्नाभिमुखं नवोदकम् ॥ १३ ॥
प्रफुल्लपत्रां नलिनीं समुत्सुकां
विहाय भृङ्गाः श्रुतिहारिनिस्वनाः ।
पतन्ति मूढाः शिखिनां प्रनृत्यतां
कलापचक्रेषु नवोत्पलाशया ॥ १४ ॥
वनद्विपानां नवतोयदस्वनै-
र्मदान्वितानां स्वनतां मुहुर्मुहुः ।
कपोलदेशा विमलोत्पलप्रभाः
सभृङ्गयूथैर्मदवारिभिः श्रिताः ॥ १५ ॥
सतोयनम्राम्बुदचुम्बितोपलाः
समाचिताः प्रस्रवणैः समन्ततः ।
प्रवृत्तनृत्यैः शिखिभिः समाकुलाः
समुत्सुकत्वं जनयन्ति भूधराः ॥ १६ ॥
कदम्बसर्जार्जुननीपकेतकी-
र्विकम्पयंस्तत्कुसुमाधिवासितः ।
सशीकराम्भोधरसङ्गशीतलः
समीरणः कं न करोति सोत्सुकम् ॥ १७ ॥
शिरोरुहैः श्रोणितटावलम्बिभिः
कृतावतंसैः कुसुमैः सुगन्धिभिः ।
स्तनैः सुपीनैर्वदनैः सशीधुभिः
स्त्रियो रतिं सञ्जनयन्ति कामिनाम् ॥ १८ ॥

तडिल्लताः शक्रधनुर्विभूषिताः
पयोधरास्तोयभरावलम्बिनः ।
स्त्रियश्च काञ्चीमणिमेखलोज्ज्वला
हरन्ति चेतो युगपत् प्रवासिनाम् ॥ १९ ॥
मालाः कदम्बनवकेशरकेतकीभि
रायोजिताः शिरसि बिभ्रति योषितोऽद्य ।
कर्णान्तरेषु ककुभद्रुममञ्जरीभिः
श्रोत्रानुकूलरचितानवतंसकांश्च ॥ २० ॥
कालागुरुप्रचुरचन्दनचर्च्चिताङ्गाः
पुष्पावतंससुरभीकृतकेशपाशाः ।
श्रुत्वा ध्वनिं जलमुचां त्वरितं प्रदोषे
शय्यागृहं गुरुगृहात् प्रविशन्ति नार्य्यः ॥ २१ ॥
कुवलयदलनीलैरुन्नतस्तोयनम्रै
र्मृदुपवनविधूतैर्मन्दमन्दं चलद्भिः ।
अपहृतमिव चेतस्तोयदैः सेन्द्रचापैः
पथिकजनवधूनां तद्वियोगव्यथानाम् ॥ २२ ॥
मुदित इव कदम्बैर्जातपुष्पैः समन्तात्
पवनचलितशाखैः शाखिभिर्नृत्यतीव ।
हसितमिव विधत्ते सूचिभिः केतकीनां
नवसलिलनिषेकाच्छान्ततापो वनान्तः ॥ २३ ॥
शिरसि वकुलमालां मालतीभिः समेतां
विकसितवनपुष्पैर्यूथिकाकुड्मलैश्च ।

विकचनवकदम्बैः कर्णपूरं वधूनां
रचयति जलदौघः कान्तवत् काल एषः॥ २४ ॥
दधति कुचयुगाग्रैरुन्नतैर्हारयष्टिं
प्रतनुसितदुकूलान्यायतैः श्रोणिबिम्बैः।
नवजलकणसेकादुद्गतां रोमराजीं
त्रिवलिवलिविभागैर्मध्यदेशैश्च नार्यः॥ २५ ॥
नवजलकणसेकाच्छीततामादधानः
कुसुमभरनतानां नाशकः पादपानाम्।
जनितसुरभिगन्धः केतकीनां रजोभि
रपहरति नभस्वान् प्रोषितानां मनांसि ॥२६॥
जलभरनमितानामाश्रयोऽस्माकमुच्चै-
रयमिति जलसेकैस्तोयदास्तोयनम्राः।
अतिशयपरुषाभिर्ग्रीष्मवह्नेः शिखाभिः
समुपजनिततापं ह्लादयन्तीव विन्ध्यम् ॥२७॥
बहुगुणरमणीयो योषितां चित्तहारी
तरुविटपलतानां बान्धवो निर्विकारः।
जलदसमय एष प्राणिनां प्राणहेतु
र्दिशतु तव हितानि प्रायशो वाञ्छितानि ॥२८

इति कालिदासकृतादृतुसंहारे वर्षावर्णना
समाप्ता।

## शरद्वर्णना।

---

काशांशुका विकचपद्ममनोज्ञवक्त्रा
सोन्मादहंसरुतनूपुरनादरम्या।
आपक्वशालिललितातनुगात्रयष्टिः
प्राप्ता शरन्नववधूरिवरम्यरूपा ॥ १ ॥

काशैर्मही शिशिरदीधितिना रजन्यो
हंसैर्जलानि सरितां कुमुदैः सरांसि।
सप्तच्छदैः कुसुमभारनतैर्वनान्ताः
शुक्लीकृतान्युपवनानि च मालतीभिः ॥ २ ॥

चञ्चन्मनोज्ञसफरीरसनाकलापाः
पर्यन्तसंस्थितसिताण्डजपंक्तिहाराः।
नद्यो विशालपुलिनोरुनितम्बबिम्बा
मन्दं प्रयान्ति समदाः प्रमदा इवाद्य ॥ ३ ॥

व्योम क्वचिद्रजतशंखमृणालगौरै
स्त्यक्ताम्बुभिर्लघुतया शतशः प्रयातैः।
उत्प्रेक्ष्यते पवनवेगचलैः पयोदै
राजेव चामरशतैरभिवीज्यमानः ॥ ४ ॥

भिन्नाञ्जनप्रचयकान्ति नभो मनोज्ञं
बन्धूकपुष्परजसारुणिता च भूमिः।
वप्राश्च पक्वकलमावृतभूमिभागा
उत्कण्ठयन्ति न मनो भुवि कस्य यूनः? ॥ ५ ॥

मन्दानिलाकुलितचारुविशालशाखः
पुष्पोद्गमप्रचयकोमलपल्लवाग्रः ।
मत्तद्विरेफपरिपीतमधुप्रसेक-
श्चित्तं विदारयति कस्य न कोविदारः ? ॥ ६ ॥

तारागणप्रचुरभूषणमुद्वहन्ती
मेघोपरोधपरिमुक्तशशाङ्कवक्त्रा ।
ज्योत्स्नादुकूलममलं रजनी दधाना
वृद्धिं प्रयात्यनुदिनं प्रमदेव बाला ॥ ७ ॥

कारण्डवाननविघट्टितवीचिमालाः
कादम्बसारसकुलाकुलतीरदेशाः ।
कुर्वन्ति हंसविरुतैः परितो जनस्य
प्रीतिं सरोरुहरजोरुणितास्तु नद्यः ॥ ८ ॥

नेत्रोत्सवो हृदयहारिमरीचिमालः
प्रह्लादकः शिशिरशीकरवारिवर्षी ।
पत्युर्वियोगविषदिग्धशरक्षतानां
चन्द्रो दहत्यनुदिनं तनुमङ्गनानाम् ॥ ९ ॥

आकम्पयन् फलभरानतशालिजालान्
आनर्तयन् कुरुवकान् कुसुमावनम्रान् ।
प्रोत्फुल्लपङ्कजवनां नलिनीं विधुन्वन्
यूनां मनो मदयति प्रसभं नभस्वान् ॥ १० ॥

सोन्मादहंसमिथुनैरुपशोभितानि
स्वच्छानि फुल्लकमलोत्पलभूषितानि ।

मत्तप्रचारपवनोन्नतवीचिमाला-
न्युत्कण्ठयन्ति हृदयं सहसा सरांसि ॥ ११ ॥
नष्टं धनुर्बलभिदो जलदोदरेषु
सौदामिनी स्फुरति नाद्य वियत्पताका।
धुन्वन्ति पक्षपवनैर्न नभो बलाकाः
पश्यन्ति नोन्नतमुखा गगनं मयूराः ॥ १२ ॥
नृत्यप्रयोगरहितान् शिखिनो विहाय
हंसानुपैति मदनो मधुरप्रगीतान्।
त्यक्त्वा कदम्बकुटजार्जुनसर्जनीपान्
सप्तच्छदानुपगता कुसुमोद्गमश्रीः ॥ १३ ॥
शेफालिकाकुसुमगन्धमनोहराणि
स्वच्छस्थिताण्डजगणप्रतिनादितानि।
पर्यन्तसंस्थितमृगीनयनोत्पलानि
प्रोत्कण्ठयन्त्युपवनानि मनांसि पुंसाम् ॥ १४ ॥
कह्लारपद्मकुसुमानि मुहुर्विधुन्वन्
तत्सङ्गमादधिकशीतलतामुपेत्य।
सोत्कां करोति वनितां पवनः प्रभाते
पत्रान्तलग्नतुहिनानि हरंस्तरूणाम् ॥ १५ ॥
सम्पन्नशालिनिचयावृतभूतलानि
सुस्थस्थितप्रचुरगोकुलशोभितानि।
हंसैश्च सारसकुलैः प्रतिनादितानि
सीमान्तराणि जनयन्ति जनप्रमोदम् ॥ १६ ॥

हंसैर्जिता सुललिता गतिरङ्गनानां
अम्भोरुहैर्विकसितैर्मुखचन्द्रकान्तिः ।
नीलोत्पलैर्मदचलानि विलोचनानि
भ्रूविभ्रमाश्च सरितां तनुभिस्तरङ्गैः ॥ १७ ॥

श्यामा लताः कुसुमभारनतप्रवालाः
स्त्रीणां हरन्ति धृतभूषणबाहुकान्तिम् ।
दन्तावभासविशदस्मितवक्त्रकान्तिं
बन्धूकपुष्परचिता नवमालती च ॥ १८ ॥

केशान्नितान्तघननीलविकुञ्चिताग्रान्
आपूरयन्ति वनिता नवमालतीभिः ।
कर्णेषु च प्रचलकाञ्चनकुण्डलेषु
नीलोत्पलानि विकचानि निवेशयन्ते ॥ १८ ॥

हारैः सचन्दनरसैः स्तनमण्डलानि
श्रोणीतटं सुविपुलं रसनाकलापैः ।
पादाम्बुजानि वरनूपुरशेखरैश्च
नार्यः प्रहृष्टमनसोऽद्य विभूषयन्ति ॥ २० ॥

स्फुटकुमुदचितानां राजहंसाश्रितानां
मरकतमणिभासा वारिणा भूषितानाम् ।
श्रियमतिशयरूपां व्योमतोयाशयानां
वहति विगतमेघश्चन्द्रतारावकीर्णम् ॥ २१ ॥

दिवसकरमयूखैर्बोध्यमानं प्रभाते
वरयुवतिमुखाभं पङ्कजं जृम्भतेऽद्य ।

कुमुदमपि गतेऽस्तं लीयते चन्द्रबिम्बे
हसितमिव वधूनां प्रोषितेषु प्रियेषु ॥ २२ ॥
शरदि कुमुदसङ्गाद्वायवो वान्ति शीता
विगतजलदवृन्दा दिग्विभागा मनोज्ञाः।
विगतकलुषमम्भः शालिपङ्का धरित्री
विमलकिरणचन्द्रं व्योम ताराविचित्रम् ॥ २३ ॥
असितनयनलक्ष्मीं लक्षयित्वोत्पलेषु
क्वणितकनककाञ्चीं मत्तहंसस्वनेषु।
अधररुचिरशोभां बन्धुजीवे प्रियायाः
पथिकजन इदानीं रोदिति भ्रान्तचित्तः ॥२४॥
स्त्रीणां निधाय वदनेषु शशाङ्कलक्ष्मीं
हास्ये विशुद्धवदने कुमुदाकरश्रीम्।
बन्धूककान्तिमधरेषु मनोहरेषु
क्वापि प्रयाति सुभगा शरदागमश्रीः ॥२५॥
विकचकमलवक्त्रा फुल्लनीलोत्पलाक्षी
कुसुमितनवकाशा व्याकुलालम्बिवासा।
कुमुदरुचिरहासा कामिनीवोन्मदेयं
उपदिशतु शरद्वश्चेतसः प्रीतिमग्र्याम् ॥ २६ ॥

इति कालिदासकृतावृतुसंहारे शरद्वर्णना
समाप्ता।

---

हेमन्तवर्णना ।

---

नवप्रबालोद्गमपुष्परम्यः
प्रफुल्ललोध्रः परिपक्वशालिः ।
विलीनपद्मः प्रपतत्तुषारो
हेमन्तकालः समुपागतः प्रिये ! ॥ १ ॥
मनोहरैश्चन्दनरागगौरै
स्तुषारकुन्देन्दुनिभैश्च हारैः ।
विलासिनीनां स्तनशालिनीनां
नालंक्रियन्ते स्तनमण्डलानि ॥ २ ॥
न बाहुयुग्मेषु विलासिनीनां
प्रयान्ति सङ्गं वलयाङ्गदानि ।
नितम्बबिम्बेषु नवं दुकूलं
तन्वंशुकं पीनपयोधरेषु ॥ ३ ॥
काञ्चीगुणैः काञ्चनरत्नचित्रै-
र्न भूषयन्ति प्रमदा नितम्बान् ।
न नूपुरैर्हंसरुतं भजद्भिः
पादाम्बुजान्यम्बुजकान्तिभाञ्जि ॥ ४ ॥
गात्राणि कालीयकचर्च्चितानि
सपत्रलेखानि मुखाम्बुजानि ।
शिरांसि कालागुरुधूपितानि
कुर्वन्ति नार्य्यः सुरतोत्सवाय ॥ ५ ॥

रतिश्रमक्षामविपाण्डुवक्त्राः
प्राप्तेऽपि हर्षाभ्युदये तरुण्यः।
हसन्ति नोच्चैर्दशनाग्रभिन्नान्
प्रभिन्नरागानधरानवेक्ष्य ॥ ६ ॥
पीनस्तनोरुस्थलभागशोभाम्
आसाद्य तत्पीड़नजातखेदः।
तृणाग्रलग्नैस्तुहिनैः पतद्भि-
राक्रन्दतीवोषसि शीतकालः ॥ ७ ॥
प्रभूतशालिप्रसवैश्चितानि
मृगाङ्गनायूथविभूषितानि।
मनोहरक्रौञ्चनिनादितानि
सीमान्तराण्युत्सुकयन्ति चेतः ॥ ८ ॥
प्रफुल्लनीलोत्पलशोभितानि।
सारिकादम्बविघट्टितानि।
प्रसन्नतोयानि सशैवलानि
सरांसि चेतांसि हरन्ति यूनाम् ॥ ९ ॥
"मार्गं समीक्ष्यातिनिरस्तनीरं
प्रवासखिन्नं पतिमुद्वहन्त्यः।
प्रवेक्ष्यमाणा हरिणेक्षणाक्ष्यः
प्रबोधयन्तीव मनोरथानि ॥ १० ॥"
पाकं व्रजन्ती हिमसङ्गशीतै-
राधूयमाना सततं मरुद्भिः।

प्रिये ! प्रियङ्गुः प्रियविप्रयुक्ता
विपाण्डुतां याति विलासिनीव ॥ ११ ॥
पुष्पासवामोदसुगन्धिवक्त्रो
निश्वासवातैः सुरभीकृताङ्गः ।
परस्पराङ्गव्यतिसङ्गशायी
शेते जनः कामशरानुविद्धः ॥ १२ ॥
दन्तच्छदैः सव्रणदन्तचिह्नैः
स्तनैश्च पाण्यग्रकृताभिलेखैः ।
संसूच्यते निर्दयमङ्गनानां
रतोपभोगो नवयौवनानाम् ॥ १३ ॥
काचिद्विभूषयति दर्पणसक्तहस्ता
बालातपेषु वनिता वदनारविन्दम् ।
दन्तच्छदं प्रियतमेन निपीतसारं
दन्ताग्रभिन्नमपकृष्य निरीक्षते च ॥ १४ ॥
अन्याः प्रकामसुरतश्रमखिन्नदेहा
नक्तं प्रजागरविपाटलनेत्रपद्माः ।
शय्यान्तदेशलुलिताकुलकेशपाशाः
निद्रां प्रयान्ति मृदुसूर्य्यकराभितप्ताः ॥ १५ ॥
निर्माल्यदामपरिभुक्तमनोज्ञगन्धं
मूर्ध्नोऽपनीय घननीलशिरोरुहान्ताः ।
पीनोन्नतस्तनभरानतगात्रयष्ट्यः
कुर्वन्ति केशरचनामपरास्तरुण्यः ॥ १६ ॥

अन्या प्रियेण परिभुक्तमवेक्ष्य गात्रं
हर्षान्विता विरचिताधरगण्डशोभा ।
रक्तांशुकं परिदधाति नवं नताङ्गी
व्यालम्बिनी विलुलितालककुञ्चिताक्षी ॥ १७ ॥

अन्याश्चिरं सुरतकेलिपरिश्रमेण
खेदं गताः प्रशिथिलीकृतगात्रयष्ट्यः ।
संपीड्यमानविपुलोरुपयोधरार्त्ता
अभ्यञ्जनं विदधति प्रमदाः सुशोभाः ॥ १८ ॥

बहुगुणरमणीयो योषितां चित्तहारी
परिणतबहुशालिव्याकुलग्रामसीमः ।
विनिपतिततुषारः क्रौञ्चनादोपगीतः
प्रदिशतु हिमयुक्तः काल एष प्रियं वः ॥ १९ ॥

इति कालिदासकृतावृतुसंहारे हेमन्तवर्णना
समाप्ता ।

---

## शिशिरवर्णना ।

प्ररूढशालीक्षुचयावृतक्षितिं
सुस्थितक्रौञ्चनिनादशोभितम् ।
प्रकामकामं प्रमदाजनप्रियं
वरोरु ! कालं शिशिराह्वयं शृणु ॥ १ ॥

निरुद्धवातायनमन्दिरोदरं
हुताशनो भानुमतो गभस्तयः ।

गुरूणि वासांस्यबलाः सयौवनाः
प्रयान्ति कालेऽत्र जनस्य सेव्यताम् ॥ २ ॥
न चन्दनं चन्द्रमरीचिशीतलं
न हर्म्यपृष्ठं शरदिन्दुनिर्मलम् ।
न वायवः सान्द्रतुषारशीतला
जनस्य चित्तं रमयन्ति साम्प्रतम् ॥ ३ ॥
तुषारसंघातनिपातशीतलाः
शशाङ्कभाभिः शिशिरीकृताः पुनः ।
विपाण्डुतारागणचारुभूषणा:
जनस्य सेव्या न भवन्ति रात्रयः ॥ ४ ॥
गृहीतताम्बूलविलेपनस्रजः
पुष्पासवामोदितवक्त्रपङ्कजाः ।
प्रकामकालागुरुधूपवासितं
विशन्ति शय्यागृहमुत्सुकाः स्त्रियः ॥ ५ ॥
कृतापराधान् बहुशोऽभितर्जितान्
सवेपथून् साध्वसमन्दचेतसः ।
निरीक्ष्य भर्तॄन् सुरताभिलाषिणः
स्त्रियोऽपराधान् समदा विसस्मरुः ॥ ६ ॥
प्रकामकामैर्युवभिः सुनिर्दयं
निशासु दीर्घास्वभिभाविताश्चिरम् ।
भ्रमन्ति मन्दं श्रमखेदितोरवः
क्षपावसाने नवयौवनाः स्त्रियः ॥ ७ ॥

पयोधरैः कुङ्कुमरागपिञ्जरैः
सुखोपसेव्यैर्नवयौवनोत्सवः।
विलासिनीनां परिपीड़ितोरसः
स्वपन्ति शीतं परिभूय कामिनः॥ ८॥
मनोज्ञकूर्पासकपीड़ितस्तनाः
सरागकौशेयविभूषितोरवः।
निवेशितान्तःकुसुमैः शिरोरुहै
र्विभूषयन्तीव हिमागमं स्त्रियः॥ ९॥
सुगन्धिनिःश्वासविकम्पितोत्पलं
मनोहरं कामरतिप्रबोधनम्।
निशासु हृष्टाः सह कामिभिः स्त्रियः
पिबन्ति मद्यं मदनीयमुत्तमम्॥ १०॥
अपगतमदरागा योषिदेका प्रभाते
कृतविनतकुचाग्रा पत्युरालिङ्गनेन।
प्रियतमपरिभुक्तं वीक्षमाणा स्वदेहं
व्रजति शयनवासाद्वासमन्यं हसन्ती॥ ११॥
अगुरुसुरभिधूपामोदितं केशपाशं
गलितकुसुममालं कुञ्चिताग्रं वहन्ती।
त्यजति गुरुनितम्बा निम्ननाभिः सुमध्या
उषसि शयनवासं कामिनी कामशोभा॥ १२॥
कनककमलकान्तैः सद्य एवाम्बुधौतैः
श्रवणतटनिषक्तैः पाटलोपान्तनेत्रैः।

उपसि वदनबिम्बैरंससंयुक्तकेशैः
श्रिय इव गृहमध्ये संस्थिता योषितोऽद्य ॥ १३ ॥

पृथुजघनभरार्त्ताः किञ्चिदानम्रमध्याः
स्तनभरपरिखेदान्मन्दमन्दं व्रजन्त्यः ।
सुरतशयनवेषं नैशमन्यत् प्रहाय
दधति दिवसयोग्यं वेषमीतास्तरुण्यः ॥ १४ ॥

नखपदङ्कितभङ्गान् वीक्षमाणाः स्तनान्तान्
अधरकिसलयाग्रं दन्तभिन्नं स्पृशन्त्यः ।
अभिमतरतवेशं नन्दयन्त्यस्तरुण्यः
सवितुरुदयकाले भूषयन्त्याननानि ॥ १५ ॥

प्रचुरगुडविकारस्वादुशालीक्षुरम्यः
प्रबलसुरतकेलिर्जातकन्दर्पदर्पः ।
प्रियजनरहितानां चित्तसन्तापहेतुः
शिशिरसमय एष श्रेयसे वोऽस्तु नित्यम् ॥ १६ ॥

इति कालिदासकृतऋतुसंहारे शिशिरवर्णना समाप्ता ।

---

## वसन्तवर्णना ।

---

प्रफुल्लचूताङ्कुरतीक्ष्णशायको
द्विरेफमालाविलसद्धनुर्गुणः ।
मनांसि भेत्तुं सुरतप्रसङ्गिनां
वसन्तयोधः समुपागतः प्रिये ! ॥ १ ॥

द्रुमाः सपुष्पाः सलिलं सपद्मं
स्त्रियः सकामाः पवनः सुगन्धिः।
सुखाः प्रदोषा दिवसाश्च रम्याः
सर्वं प्रिये! चारुतरं वसन्ते ॥ २ ॥
ईषत्तुषारैः कृतशीतहर्म्यैः
सुवासितं चारु शिरः सचम्पकैः।
कुर्वन्ति नार्योऽपि वसन्तकाले
स्तनं सहारं कुसुमैर्मनोहरैः ॥ ३ ॥
वापीजलानां मणिमेखलानां
शशाङ्कभासां प्रमदाजनानाम्।
चूतद्रुमाणां कुसुमान्वितानां
ददाति सौरभ्यमयं वसन्तः ॥ ४ ॥
स्तनेषु हाराः सितचन्दनार्द्रा
भुजेषु कम्बूवलयाङ्गदानि।
प्रयान्ति निःशङ्कमनङ्गसौख्यं
नितम्बिनीनां जघनेषु काञ्चयः ॥ ५ ॥
कुसुम्भरागारुणितैर्दुकूलै-
र्नितम्बविम्बानि विलासिनीनाम्।
तन्वंशुकैः कुङ्कुमरागगौरै-
रलंक्रियन्ते स्तनमण्डलानि ॥ ६ ॥
कर्णेषु योग्यं नवकर्णिकारं
स्तनेषु हारा अलकेष्वशोकः।

उषसि वदनबिम्बैरंससंयुक्तकेशैः
श्रिय इव गृहमध्ये संस्थिता योषितोऽद्य ॥ १३ ॥

पृथुजघनभरार्त्ताः किञ्चिदानम्रमध्याः
स्तनभरपरिखेदान्मन्दमन्दं व्रजन्त्यः।
सुरतशयनवेषं नैशमन्यत् प्रहाय
दधति दिवसयोग्यं वेषमेतास्तरुण्यः ॥ १४ ॥

नखपदचितभङ्गान् वीक्षमाणाः स्तनान्तान्
अधरकिसलयाग्रं दन्तभिन्नं स्पृशन्त्यः।
अभिमतरतवेशं नन्दयन्त्यस्तरुण्यः
सवितुरुदयकाले भूषयन्त्याननानि ॥ १५ ॥

प्रचुरगुड़विकारस्वादुशालीक्षुरम्यः
प्रबलसुरतकेलिर्जातकन्दर्पदर्पः।
प्रियजनरहितानां चित्तसन्तापहेतुः
शिशिरसमय एष श्रेयसे वोऽस्तु नित्यम् ॥ १६ ॥

इति कालिदासकृतावृतुसंहारे शिशिरवर्णना समाप्ता।

---

## वसन्तवर्णना।

---

प्रफुल्लचूताङ्कुरतीक्ष्णसायको
द्विरेफमालाविलसद्धनुर्गुणः।
मनांसि भेत्तुं सुरतप्रसङ्गिनां
वसन्तयोधः समुपागतः प्रिये! ॥ १ ॥

द्रुमाः सपुष्पाः सलिलं सपद्मं
स्त्रियः सकामाः पवनः सुगन्धिः।
सुखाः प्रदोषा दिवसाश्च रम्याः
सर्वं प्रिये! चारुतरं वसन्ते॥ २॥
ईषत्तुषारैः कृतशीतहर्म्यैः
सुवासितं चारु शिरः सचम्पकैः।
कुर्वन्ति नार्योऽपि वसन्तकाले
स्तनं सहारं कुसुमैर्मनोहरैः॥ ३॥
वापीजलानां मणिमेखलानां
शशाङ्कभासां प्रमदाजनानाम्।
चूतद्रुमाणां कुसुमानतानां
ददाति सौरभ्यमयं वसन्तः॥ ४॥
स्तनेषु हाराः सितचन्दनार्द्रा
भुजेषु कम्बूवलयाङ्गदानि।
प्रयान्ति निःशङ्कमनङ्गसौख्यं
नितम्बिनीनां जघनेषु काञ्चयः॥ ५॥
कुसुम्भरागारुणितैर्दुकूलै-
र्नितम्बबिम्बानि विलासिनीनाम्।
तन्वंशुकैः कुङ्कुमरागगौरै-
रलंक्रियन्ते स्तनमण्डलानि॥ ६॥
कर्णेषु योग्यं नवकर्णिकारं
स्तनेषु हारा अलकेष्वशोकः।

शिखासु माला नवमल्लिकायाः
प्रयान्ति शोभां प्रमदाजनस्य ॥ ७ ॥
सपत्रलेखेषु विलासिनीनां
वक्त्रेषु हेमाम्बुरुहोपमेषु ।
स्तनान्तरे मौक्तिकसङ्गजातः
स्वेदोद्गमो विस्तरतामुपैति ॥ ८ ॥
उच्छ्वासयन्त्यः श्लथबन्धनानि
गात्राणि कन्दर्पसमाकुलानि ।
समीपवर्त्तिष्वपि कामुकेषु
समुत्सुका एव भवन्ति नार्य्यः ॥ ९ ॥
तनूनि पाण्डूनि मदालसानि
मुहुर्मुहुर्जृम्भनतत्पराणि ।
अङ्गान्यनङ्गः प्रमदाजनस्य
करोति लावण्यरसोत्सुकानि ॥ १० ॥
नेत्रेष्वलोलो मदिरालसेषु
गण्डेषु पाण्डुः कठिनः स्तनेषु ।
मध्येषु नम्रो जघनेषु पीनः
स्त्रीणामनङ्गो बहुधा स्थितोऽद्य ॥ ११ ॥
अङ्गानि निद्रालसविह्वलानि
वाक्यानि किञ्चिन्मदिरालसानि ।
भ्रूक्षेपजिह्मानि च वीक्षितानि
चकार कामः प्रमदाजनानाम् ॥ १२ ॥

प्रियङ्गुकालीयककुङ्कुमानि
स्तनाङ्गरागेषु विसर्जितानि ।
आलिप्यते चन्दनमङ्गनाभि-
र्मदालसाभिर्मृगनाभियुक्तम् ॥ १३ ॥

गुरूणि वासांसि विहाय तूर्णं
तनूनि लाक्षारसरञ्जितानि ।
सुगन्धिकालागुरुधूपितानि
धत्ते जनः कामशरानुविद्धः ॥ १४ ॥

पुंस्कोकिलश्चूतरसेन मत्तः
प्रियामुखं चुम्बति सादरोऽयम् ।
गुञ्जन् द्विरेफोऽप्ययमम्बुजस्थः
प्रियं प्रियायाः प्रकरोति चाटुम् ॥ १५ ॥

ताम्रप्रवालस्तवकावनम्राः
चूतद्रुमाः पुष्पितचारुशाखाः ।
कुर्वन्ति कान्ते ! पवनावधूताः
समुत्सुकं मानसमङ्गनानाम् ॥ १६ ॥

आमूलतो विद्रुमरागताम्राः
सपल्लवं पुष्पचयं दधानाः ।
कुर्वन्त्यशोका हृदयं सशोकं
निरीक्ष्यमाणा नवयौवनानाम् ॥ १७ ॥

मत्तद्विरेफपरिचुम्बितचारुपुष्पा
मन्दानिलाकुलितचारुमृदुप्रवालाः ।

कुर्वन्ति कामिमनसां सहसोत्सुकत्वं
बालातिमुक्तलतिकाः समवेक्ष्यमाणाः ॥ १८ ॥
कान्ताननद्युतिमुषामचिरोद्गतानां
शोभां परां कुरवकद्रुममञ्जरीणाम् ।
दृष्ट्वा प्रिये ! हि पथिकस्य भवेन्न कस्य
कन्दर्पबाणनिकरैर्व्यथितं हि चेतः ? ॥ १९ ॥
आदीप्तवह्निसदृशैर्मरुतावधूतैः
सर्वत्र किंशुकवनैः कुसुमावनम्रैः ।
सद्यो वसन्तसमये समुपागते हि
रक्तांशुका नववधूरिव भाति भूमिः ॥ २० ॥
किं किंशुकैः शुकमुखच्छविभिर्न दग्धं ?
किं कर्णिकारकुसुमैर्न हृतं मनोज्ञैः ? ।
यत्कोकिलाः पुनरमी मधुरैर्वचोभि-
र्यूनां मनः सुवदने ! नियतं हरन्ति ॥ २१ ॥
पुंस्कोकिलैः फलरसैः समुपात्तहर्षैः
कूजद्भिरुन्मदकराणि वचांसि धीरम् ।
लज्जान्वितं सविनयं हृदयं क्षणेन
पर्य्याकुलं कुलगृहेऽपि कृतं वधूनाम् ॥ २२ ॥
आकम्पयन् कुसुमिताः सहकारशाखा
विस्तारयन् परभृतस्य वचांसि दिक्षु ।
वायुर्विवाति हृदयानि हरन् वधूनां
नीहारपातविगमात् सुभगो वसन्ते ॥ २३ ॥

कुन्दैः सविभ्रमवधूहसितावदातै-
रुद्योतितान्युपवनानि मनोहराणि ।
चित्तं मुनेरपि हरन्ति निवृत्तरागं
प्रायेण रागचलितानि मनांसि पुंसाम् ॥ २४ ॥

प्रालम्बिहेमरसनाः स्तनसक्तहाराः
कन्दर्पदर्पशिथिलीकृतगात्रयष्ट्यः ।
मासे मधौ मधुरकोकिलभृङ्गनादैः
रामा हरन्ति हृदयं प्रसभं नराणाम् ॥ २५ ॥

नानामनोज्ञकुसुमद्रुमभूषिताग्रान्
हृष्टान्यपुष्टनिनदाकुलसानुदेशान् ।
शैलेयजालपरिणद्धशिलागुहान्तान्
दृष्ट्वा जनः क्षितिभृतो मुदमेति सर्वः ॥ २६ ॥

नेत्रे निमीलयति रोदिति याति मोहं
घ्राणं करेण विरुणद्धि विरौति चोच्चैः ।
कान्तावियोगपरिखेदितचित्तवृत्ति-
र्दृष्ट्वाध्वगः कुसुमितान् सहकारवृक्षान् ॥ २७ ॥

समदमधुकराणां कोकिलानाञ्च नादैः
कुसुमितसहकारैः कर्णिकारैश्च रम्यैः ।
इषुभिरिव सुतीक्ष्णैर्मानसं मानिनीनां
तुदति कुसुमबाणो मन्मथोद्दीपनाय ॥ २८ ॥

रुचिरकनककान्तीन् मुञ्चतः पुष्पराशीन्
मृदुपवनविधूतान् पुष्पितांश्चूतवृक्षान् ।

अभिमुखमभिवीक्ष्य क्षामदेहोऽपि मार्गं
मदनशरनिघातैर्मोहमेति प्रवासी ॥ १९ ॥
परभृतकलगीतैर्ह्लादिभिः सद्वचांसि
स्मितदशनमयूखान् कुन्दपुष्पप्रभाभिः।
करकिसलयकान्तिं पल्लवैर्विद्रुमाभै-
रुपहसति वसन्तः कामिनीनामिदानीम् ॥ २० ॥
कनककमलकान्तैराननैः पाण्डुगण्डै-
रुपरिनिहितहारैश्चन्दनार्द्रैः स्तनान्तैः।
मदजनितविलासैर्दृष्टिपातैर्मुनीन्द्रान्
स्तनभरनतनार्य्यः कामयन्ति प्रशान्तान् ॥ २१ ॥
मधुसुरभिमुखाब्जं लोचने लोध्रताम्रे
नवकुरुवकपूर्णः केशपाशो मनोज्ञः।
गुरुतरकुचयुग्मं श्रोणिबिम्बं तथैव
न भवति किमिदानीं योषितां मन्मथाय ॥ २२ ॥
आकम्पितानि हृदयानि मनस्विनीनां
वातैः प्रफुल्लसहकारकृताधिवासैः।
सम्बाधितं परभृतस्य मदाकुलस्य
श्रोत्रप्रियैर्मधुकरस्य च गीतनादैः ॥ २३ ॥
रम्यः प्रदोषसमयः स्फुटचन्द्रभासः
पुंस्कोकिलस्य विरुतं पवनः सुगन्धिः।
मत्तालियूथविरुतं निशि शीधुपानं
सर्वं रसायनमिदं कुसुमायुधस्य ॥ २४ ॥

छायां जनः समभिवाञ्छति पादपानां
नक्तं तथेच्छति पुनः किरणं सुधांशोः।
हर्म्यं प्रयाति शयितुं सुखशीतलञ्च
कान्ताञ्च गाढमुपगूहति शीतलत्वात्॥ ३५॥
मलयपवनविद्धः कोकिलेनाभिरम्यः
सुरभिमधुनिषेकाल्लब्धगन्धप्रबन्धः।
विविधमधुपयूथैर्वेष्ट्यमानः समन्ताद्
भवतु तव वसन्तः श्रेष्ठकालः सुखाय॥ ३६॥

इति श्रीकालिदासकृतादृतुसंहारकाव्ये वसन्तवर्णना समाप्ता।

---

## मेघदूतम्।

---

कश्चित् कान्ताविरहगुरुणा स्वाधिकारप्रमत्तः
शापेनास्तङ्गमितमहिमा वर्षभोग्येन भर्त्तुः।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्य्याश्रमेषु॥ १॥
तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान् कनकवलयभ्रंशरिक्तप्रकोष्ठः।
आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श॥ २॥

तस्य स्थित्वा कथमपि पुरः केतकाधानहेतो-
रन्तर्वाष्पश्चिरमनुचरो राजराजस्य दध्यौ ।
मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥ ३ ॥
प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी
जीमूतेन स्वकुशलमयीं हारयिष्यन् प्रवृत्तिम् ।
स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै
प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥ ४ ॥
धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः
सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥ ५ ॥
जातं वंशे भुवनविदिते पुष्करावर्त्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।
तेनार्थित्वं त्वयि विधिवशाद् दूरबन्धुर्गतोऽहं
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥ ६ ॥
सन्तप्तानां त्वमसि शरणं तत् पयोद! प्रियायाः
सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य ।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां
बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥ ७ ॥
त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः
प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसत्यः ।

कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायां
न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥ ८ ॥
मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां
वामश्चायं नदति मधुरं चातकस्ते सगर्वः।
गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥ ९ ॥
तांश्चावश्यं दिवसगणनातत्परामेकपत्नी
मव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम्।
आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥ १० ॥
कर्त्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रातपत्रां
तत् श्रुत्वा ते श्रवणसुभगं गर्ज्जितं मानसोत्काः।
आकैलासाद्बिसकिसलयच्छेदपाथेयवन्तः
सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥ ११ ॥
आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं
वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु।
काले काले भवति भवतो यस्य संयोगमेत्य
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥ १२ ॥
मार्गं तावत् शृणु कथयतस्त्वत्प्रयाणानुरूपं
सन्देशं मे तदनु जलद ! श्रोष्यसि श्रोत्रपेयम्।
खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र
क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपयुज्य ॥ १३ ॥

अद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभि-
र्दृष्टोच्छ्रायश्चकितचकितं मुग्धसिद्धाङ्गनाभिः।
स्थानादस्मात् सरसनिचुलादुत्पतोदङ्मुखः खं
दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान्॥ १४॥

रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत् पुरस्तात्
वल्मीकाग्रात् प्रभवति धनुःखण्डमाखण्डलस्य।
येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते
बर्हेणेव स्फुरितरुचिना गोपवेशस्य विष्णोः॥ १५॥

त्वय्यायत्तं कृषिफलमिति भ्रूविकारानभिज्ञैः
प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः।
सद्यःसीरोत्कषणसुरभि क्षेत्रमारुह्य मालं
किञ्चित् पश्चात् व्रज लघुगतिः किञ्चिदेवोत्तरेण॥ १६॥

अध्वक्लान्तं प्रतिमुखगतं सानुमांश्चित्रकूट-
स्तुङ्गेन त्वां जलद! शिरसा वक्ष्यति श्लाघमानः।
आसारेण त्वमपि शमयेस्तस्य नैदाघमग्निं
सद्भावार्द्रः फलति न चिरेणोपकारो महत्सु॥ १७॥

त्वामासारप्रशमितवनोपप्लवं साधु मूर्ध्ना
वक्ष्यत्यध्वश्रमपरिगतं सानुमानाम्रकूटः।
न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय
प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः॥ १८॥

छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रै-
स्त्वय्यारूढे शिखरमचलः स्निग्धवेणीसवर्णे।

नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां
मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ॥ १९ ॥
स्थित्वा तस्मिन् वनचरवधूभुक्तकुञ्जे मुहूर्तं
तोयोत्सर्गाद् द्रुततरगतिस्तत्परं वर्त्म तीर्णः।
रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥ २० ॥
तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टि-
र्जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः।
अन्तःसारं घन ! तुलयितुं नानिलः शक्ष्यति त्वां
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥ २१ ॥
नीपं दृष्ट्वा हरितकपिशं केशरैरर्धरूढै-
राविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम्।
दग्धारण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम् ॥ २२ ॥
अम्भोबिन्दुग्रहणचतुरांश्चातकान् वीक्षमाणाः
श्रेणीभूताः परिगणनया निर्दिशन्तो बलाकाः।
त्वामासाद्य स्तनितसमये मानयिष्यन्ति सिद्धाः
सोत्कम्पानि प्रियसहचरीसम्भ्रमालिङ्गितानि ॥ २३ ॥
उत्पश्यामि द्रुतमपि सखे ! मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते।
शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत् ॥ २४ ॥

पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नै-
र्नीडारम्भै र्गृहबलिभुजामाकुलग्रामचैत्याः ।
त्वय्यासन्ने फलपरिणतिश्यामजम्बूवनान्ताः
सम्पत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः ॥ २५ ॥

तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीं
गत्वा सद्यः फलमतिमहत् कामुकत्वस्य लब्धा ।
तीरोपान्तस्तनितसुभगं पास्यसि स्वादुयुक्तं
सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्मि ॥ २६ ॥

नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतो-
स्त्वत्सम्पर्कात् पुलकितमिव प्रौढपुष्पैः कदम्बैः ।
यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणा-
मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥ २७ ॥

विश्रान्तः सन् व्रज नगनदीतीरजातानि सिञ्चन्
उद्यानानां नवजलकणैर्यूथिकाजालकानि ।
गण्डस्वेदापनयनरुजा क्लान्तकर्णोत्पलानां
छायादानक्षणपरिचितः पुष्पलावीमुखानाम् ॥ २८ ॥

वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशां
सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्याः ।
विद्युद्दामस्फुरणचकितैस्तत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि ॥ २९ ॥

वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः
संसर्पन्त्याः स्खलितसुभगं दर्शितावर्त्तनाभेः ।

निर्विन्ध्यायाः पथि भव रसाभ्यन्तरः सन्निपत्य
स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ ३० ॥
वेणीभूतप्रतनुसलिला तामतीतस्य सिन्धुः
पाण्डुच्छाया तटरुहतरुभ्रंशिभिः शीर्णपर्णैः।
सौभाग्यं ते सुभग! विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥ ३१ ॥
प्राप्यावन्तीमुदयनकथाकोविदग्रामवृद्धान्
पूर्व्वोद्दिष्टामनुसर पुरीं श्रीविशालां विशालाम्।
स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां
शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत् खण्डमेकम् ॥ २२ ॥
दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥ ३३ ॥
जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपै-
र्बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहारः।
हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखिन्नान्तरात्मा
त्यक्त्वा खेदं ललितवनितापादरागाङ्कितेषु ॥ ३४ ॥
भर्त्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः
पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डेश्वरस्य।
धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्या-
स्तोयक्रीड़ानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥ ३५ ॥

अप्यन्यस्मिन् जलधर ! महाकालमासाद्य काले
स्थातव्यं ते नयनविषयं यावदभ्येति भानुः।
कुर्वन् सन्ध्याबलिपटहतां शूलिनः श्लाघनीया-
मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥ ३६ ॥

पादन्यासैः क्वणितरसनास्तत्र लीलावधूतै-
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः।
वेश्यास्त्वत्तो नखपदसुखान् प्राप्य वर्षाग्रबिन्दू-
नामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान् ॥३७॥

पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सान्ध्यं तेजः प्रतिनवजवापुष्परक्तं दधानः।
नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्याः ॥ ३८ ॥

गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः।
सौदामिन्या कनकनिकषच्छायया दर्शयोर्वीं
तोयोत्सर्गस्तनितमुखरो मा स्म भूर्विक्लवास्ताः ॥ ३९ ॥

तां कस्यांचिद्भवनवलभौ सुप्तपारावतायां
नीत्वा रात्रिं चिरविलसनात् खिन्नविद्युत्कलत्रः।
दृष्टे सूर्य्ये पुनरपि भवान् वाहयेदध्वशेषं
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ ४० ॥

तस्मिन् काले नयनसलिलं योषितां खण्डितानां
शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु।

प्रालेयास्रं कमलवदनात् सोऽपि हर्त्तुं नलिन्याः
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥ ४१ ॥
गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने
छायात्मापि प्रकृतिसुभगो लप्स्यते ते प्रवेशम् ।
तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्य्यात्
मोघीकर्त्तुं चटुलसफरोद्वर्त्तनप्रेक्षितानि ॥ ४२ ॥
तस्याः किञ्चित् करधृतमिव प्राप्तवानीरशाखं
हृत्वा नीलं सलिलवसनं मुक्तरोधोनितम्बम् ।
प्रस्थानं ते कथमपि सखे ! लम्बमानस्य भावि
ज्ञातास्वादः पुलिनजघनां को विहातुं समर्थः ॥ ४३ ॥
त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्कपुण्यः
स्रोतोरन्ध्रध्वनितसुभगं दन्तिभिः पीयमानः ।
नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते
शीतो वायुः परिणमयिता काननोदुम्बराणाम् ॥ ४४ ॥
तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पासारैः स्नपयतु भवान् व्योमगङ्गाजलार्द्रैः ।
रक्षाहेतोर्नवशशिभृता वासवीनां चमूनाम्
अत्यादित्यं हुतवहमुखे सम्भृतं तद्धि तेजः ॥ ४५ ॥
ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति ।
धौतापाङ्गं हरशशिरुचा पाययेस्तं मयूरं
पश्चादद्रिग्रहणगुरुभिर्गर्ज्जितैर्नर्त्तयेथाः ॥ ४६ ॥

आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद् वीणिभिर्दत्तमार्गः।
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्त्तिम्॥ ४७॥

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात् प्रवाहम्।
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी-
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम्॥ ४८॥

तामुत्तीर्य्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णशारप्रभाणाम्।
कुन्दक्षेपानुगमधुकरश्रीयुषामात्मबिम्बं
पात्रीकुर्वन् दशपुरवधूनेत्रकौतूहलानाम्॥ ४९॥

ब्रह्मावर्त्तं जनपदमधश्छायया गाहमानः
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः।
राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा
धारापातैस्त्वमिव कमलान्यभ्यषिञ्चन् मुखानि॥ ५०॥

हित्वा हालामभिमतरसां रेवतीलोचनाङ्कां
बन्धुप्रीत्या समरविमुखो लाङ्गली याः सिषेवे।
कृत्वा तासामभिगममपां सौम्य! सारस्वतीनाम्
अन्तःशुद्धस्त्वमपि भविता वर्णमात्रेण कृष्णः॥ ५१॥

तस्माद् गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपंक्तिम्।

गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः
शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥ ५२ ॥
तस्याः पातुं सुरगज इव व्योम्नि पूर्वार्धलम्बी
त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः ।
संसर्पन्त्या सपदि भवतः स्रोतसि च्छाययासौ
स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा ॥ ५३ ॥
आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणां
तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ।
वक्ष्यस्यध्वश्रमविनयने तस्य शृङ्गे निषण्णः
शोभां शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम् ॥ ५४ ॥
तच्चेद् वायौ सरति सरलस्कन्धसंघट्टजन्मा
बाधेतोल्काक्षपितचमरीबालभारो दवाग्निः ।
अर्हस्येनं शमयितुमलं वारिधारासहस्रै-
रापन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम् ॥ ५५ ॥
ये त्वां मुक्तध्वनिमसहनाः स्वाङ्गभङ्गाय तस्मिन्
दर्पोत्सेकादुपरि शरभा लङ्घयिष्यन्त्यलंघ्यम् ।
तान्कुर्वीथास्तुमुलकरकावृष्टिहासावकीर्णान्
के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥ ५६ ॥
तत्र व्यक्तं दृषदि चरणन्यासमर्धेन्दुमौलेः
शश्वत् सिद्धैरुपचितबलिं भक्तिनम्रः परीयाः ।
यस्मिन् दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः
कल्पन्तेऽस्य स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ ५७ ॥

शब्दायन्ते मधुरमनिलैः कीचकाः पूर्य्यमाणाः
संरक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः ।
निर्ह्रादी चेन्मुरज इव ते कन्दरेषु ध्वनिः स्यात्
सङ्गीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥ ५८ ॥

प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान् विशेषान्
हंसद्वारं भृगुपतियशो वर्त्म यत् क्रौञ्चरन्ध्रम् ।
तेनोदीचीं दिशमनुसरेस्तिर्य्यगायामशोभी
श्यामः पादो बलिनियमनायोद्यतस्येव विष्णोः ॥ ५९ ॥

गत्वा चोर्द्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिशमिव त्र्यम्बकस्याट्टहासः ॥ ६० ॥

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे
सद्यःकृत्तद्विरददशनच्छेदगौरस्य तस्य ।
शोभामद्रेः स्तिमितनयनप्रेक्षणीयां भवित्रीम्
अंसन्यस्ते सति हलभृतो मेचके वाससीव ॥ ६१ ॥

तस्मिन् हित्वा भुजगवलयं शम्भुना दत्तहस्ता
क्रीड़ाशैले यदि च विचरेत् पादचारेण गौरी ।
भङ्गीभक्त्या विरचितवपुः स्तम्भितान्तर्जलौघः
सोपानत्वं व्रज पदसुखस्पर्शमारोहणेषु ॥ ६२ ॥

तत्रावश्यं वलयकुलिशोद्घट्टनोद्गीर्णतोयं
नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम् ।

ताभ्यो मोक्षस्तव यदि सखे ! घर्मलब्धस्य न स्यात्
क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भाययेस्ताः ॥ ६२ ॥

हेमाम्भोजप्रसवि सलिलं मानसस्याददानः
कुर्वन् कामात् क्षणमुखपटप्रीतिमैरावतस्य ।
धुन्वन् वातैः सजलपृषतैः कल्पवृक्षांशुकानि
च्छायाभिन्नस्फटिकविशदं निर्विशेस्तं नगेन्द्रम् ॥ ६४ ॥

तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन् ! ।
या वः काले वहति सलिलोद्गारमुच्चैर्विमाने-
र्मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम् ॥ ६५ ॥

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
सङ्गीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम् ।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ ६६ ॥

हस्ते लीलाकमलमलकं बालकुन्दानुविद्धं
नीता लोध्रप्रसवरजसा पाण्डुतामाननश्रीः ।
चूडापाशे नवकुरवकं चारु कर्णे शिरीषं
सीमन्ते ऽपि त्वदुपगमजं यत्र नीपं वधूनाम् ॥ ६७ ॥

यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि
ज्योतिश्छायाकुसुमरचितान्युत्तमस्त्रीसहायाः ।
आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतं
त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ॥ ६८ ॥

गत्युत्कम्पादलकपतितैर्यत्र मन्दारपुष्पैः
पत्रच्छेदैः कनककमलैः कर्णविभ्रंशिभिश्च ।
मुक्ताजालैः स्तनपरिसरच्छिन्नसूत्रैश्च हारै-
र्नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम् ॥ ६९ ॥
नीवीबन्धोच्छ्वसितशिथिलं यत्र बिम्बाधराणां
क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।
अर्चिस्तुङ्गानभिमुखमपि प्राप्य रत्नप्रदीपान्
ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥ ७० ॥
नेत्रानीताः सततगतिना यद्विमानाग्रभूमी-
रालेख्यानां स्वजलकणिकादोषमुत्पाद्य सद्यः ।
शङ्कास्पृष्टा इव जलमुचस्त्वादृशा यत्र जालै-
र्धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥ ७१ ॥
"यस्यां मत्तभ्रमरमुखराः पादपा नित्यपुष्पा
हंसश्रेणीरचितरसना नित्यपद्मा नलिन्यः ।
केकोत्कण्ठा भवनशिखिनो नित्यभास्वत्कलापा
नित्यज्योत्स्नाः प्रतिहततमोवृत्तिरम्याः प्रदोषाः" ॥७२॥
यत्र स्त्रीणां प्रियतमभुजोच्छ्वासितालिङ्गितानाम्
अङ्गग्लानिं सुरतजनितां तन्तुजालावलम्बाः ।
त्वत्संरोधापगमविशदैश्चन्द्रपादैर्निशीथे
व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ॥ ७३ ॥
मत्वा देवं धनपतिसखं यत्र साक्षाद् वसन्तं
प्रायश्चापं न वहति भयान्मन्मथः षट्पदज्यम् ।

सभ्रूभङ्गप्रहितनयनैः कामिलक्ष्येष्वमोघै-
स्तस्यारम्भश्चटुलवनिताविभ्रमैरेव सिद्धः ॥ ७४ ॥

तत्रागारं धनपतिगृहादुत्तरेणास्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ।
यस्योद्याने कृतकतनयः कान्तया वर्द्धितो मे
हस्तप्राप्यस्तवकनमितो बालमन्दारवृक्षः ॥ ७५ ॥

वापी चास्मिन् मरकतशिलाबद्धसोपानमार्गा
हैमैश्छन्ना कमलकुसुमैः स्निग्धवैदूर्य्यनालैः ।
यस्यास्तोये कृतवसतयो मानसं सन्निकृष्टं
नाध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥ ७६ ॥

तस्यास्तीरे रचितशिखरः पेशलैरिन्द्रनीलैः
क्रीड़ाशैलः कनककदलीवेष्टनप्रेक्षणीयः ।
मद्गेहिन्याः प्रिय इति सखे ! चेतसा कातरेण
प्रेक्ष्योपान्तस्फुरिततड़ितं त्वां तमेव स्मरामि ॥ ७७ ॥

रक्ताशोकश्चलकिशलयः केशरस्तत्र कान्तः
प्रत्यासन्नौ कुरुवकवृतेर्माधवीमण्डपस्य ।
एकः सख्यास्तव सह मया वामपादाभिलाषी
कांक्षत्यन्यो वदनमदिरां दोहदच्छद्मनाऽस्याः ॥ ७८ ॥

तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टि-
र्मूले बद्धा मणिभिरनतिप्रौढ़वंशप्रकाशैः ।
तालैः शिञ्जावलयसुभगैर्नर्त्तितः कान्तया मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥ ७९ ॥

एभिः साधो! हृदयनिहितैर्लक्षणैर्लक्षयेथाः
द्वारोपान्ते लिखितवपुषौ शंखपद्मौ च दृष्ट्वा।
मन्दच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्य्यापाये न खलु कमलं पुष्यति स्वामभिख्याम्॥ ८० ॥
गत्वा सद्यः कलभतनुतां शीघ्रसम्पातहेतोः
क्रीडाशैले प्रथमकथिते रम्यसानौ निषण्णः।
अर्हस्यन्तर्भवनपतितां कर्त्तुमल्पाल्पभासं
खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम्॥ ८१ ॥
तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद् युवतिविषये सृष्टिराद्येव धातुः॥ ८२ ॥
तां जानीयाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम्।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम्॥८३॥
नूनं तस्याः प्रबलरुदितोच्छूननेत्रं प्रियायाः
निश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम्।
हस्तन्यस्तं मुखमसकलव्यक्तिलम्बालकत्वाद्
इन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेर्बिभर्त्ति॥ ८४ ॥
आलोके ते निपतति पुरा सा बलिव्याकुला वा
मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती।

पृच्छन्ती वा मधुरवचनां सारिकां पञ्जरस्थां
कच्चिद्भर्तुः स्मरसि रसिके! त्वं हि तस्य प्रियेति ॥ ८५ ॥
उत्सङ्गे वा मलिनवसने सौम्य! निक्षिप्य वीणां
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा।
तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथञ्चिद्
भूयोभूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती ॥ ८६ ॥
शेषान्मासान् गमनदिवसस्थापितस्यावधेर्वा
विन्यस्यन्ती भुवि गणनया देहलीदत्तपुष्पैः।
मत्सङ्गं वा हृदयनिहितारम्भमास्वादयन्ती
प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः ॥ ॥ ८७ ॥
सव्यापारामहनि न तथा पीडयेन्मद्वियोगः
शङ्के रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते।
मत्सन्देशैः सुखयितुमलं पश्य साध्वीं निशीथे
तामुन्निद्रामवनिशयनां सौधवातायनस्थः ॥ ८८ ॥
आधिक्षामां विरहशयने सन्निषण्णैकपार्श्वां
प्राचीमूले तनुमिव कलामात्रशेषां हिमांशोः।
नीता रात्रिः क्षण इव मया सार्द्धमिच्छारतैर्या
तामेवोष्णैर्विरहजनितैरश्रुभिर्यापयन्तीम् ॥ ८९ ॥
"स्निग्धाः सख्यः क्षणमपि दिवा तां न मोक्ष्यन्ती तन्वीम्
एकप्रेक्ष्या भवति हि जगत्यङ्गनानां प्रवृत्तिः।
स त्वं रात्रौ जलद! शयनासन्नवातायनस्थः
कान्तां सुप्ते सति परिजने वीतनिद्रामुपेयाः" ॥ ९० ॥

निश्वासेनाधरकिसलयक्लेशिना विक्षिपन्तीं
शुद्धस्नानात् परुषमलकं नूनमागण्डलम्बम् ।
मत्सम्भोगः कथमुपनयेत् स्वप्नजोऽपीति निद्राम्
आकांक्षन्तीं नयनसलिलोत्पीड़रुद्धावकाशाम् ॥ ९१ ॥
आद्ये बद्धा विरहदिवसे या शिखा दाम हित्वा
शापस्यान्ते विगलितशुचा तां मयोद्वेष्टनीयाम् ।
स्पर्शक्लिष्टामयमितनखेनासकृत् सारयन्तीं
गण्डाभोगात् कठिनविषमामेकवेणीं करेण ॥ ९२ ॥
पादानिन्दोरमृतशिशिरान् जालमार्गप्रविष्टान्
पूर्वप्रीत्या गतमभिमुखं सन्निवृत्तं तथैव ।
चक्षुः खेदात् सलिलगुरुभिःपक्ष्मभिश्छादयन्तीं
साभ्रेऽह्नीव स्थलकमलिनीं न प्रबुद्धां न सुप्ताम् ॥ ९३ ॥
सा संन्यस्ताभरणमबला पेशलं धारयन्ती
शय्योत्सङ्गे निहितमसकृद् दुःखदुःखेन गात्रम् ।
त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यं
प्रायः सर्व्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥ ९४ ॥
जाने सख्यास्तव मयि मनः सम्भृतस्नेहमस्माद्
इत्थम्भूतां प्रथमविरहे तामहं तर्कयामि ।
वाचालं मां न खलु सुभगं मन्यभावः करोति
प्रत्यक्षं ते निखिलमचिराद् भ्रात! रुक्तं मया यत् ॥९५॥
रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं
प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम् ।

त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्याः
मीनक्षोभाकुलकुवलयश्रीतुलामेष्यतीति ॥ ९६ ॥
वामश्चास्याः कररुहपदैर्मुच्यमानो मदीयै-
र्मुक्ताजालं चिरपरिचितं त्याजितो दैवगत्या।
सम्भोगान्ते मम समुचितो हस्तसंवाहनानां
यास्यत्यूरुः कनककदलीस्तम्भगौरश्चलत्वम् ॥ ९७ ॥
तस्मिन् काले जलद ! यदि सा लब्धनिद्रासुखा स्याद्
अन्वास्यैनां स्तनितविमुखो याममात्रं सहस्व।
मा भूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथञ्चित्
सद्यः कण्ठच्युतभुजलताग्रन्थि गाढोपगूढम् ॥ ९८ ॥
तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन
प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम्।
विद्युत्कम्पस्तिमितनयनां त्वत्सनाथे गवाक्षे
वक्तुं धीरःस्तनितवचनैर्मानिनीं प्रक्रमेथाः ॥ ९९ ॥
भर्त्तुर्मित्रं प्रियमविधवे ! विद्धि मामम्बुवाहं
त्वत्सन्देशैर्मनसि निहितैरागतं त्वत्समीपम्।
यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां
मन्द्रस्निग्धैर्ध्वनिभिरबलावेणीमोक्षोत्सुकानि ॥ १०० ॥
इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य सम्भाव्य चैव।
श्रोष्यत्यस्मात् परमवहिता सौम्य ! सीमन्तिनीनां
कान्तोदन्तः सुहृदुपगतः सङ्गमात् किञ्चिदूनः ॥ १०१ ॥

तामायुष्मन् ! मम च वचनाद् आत्मनश्चोपकर्त्तुं
ब्रूया एवं तव सहचरो रामगिर्य्याश्रमस्थः ।
अव्यापन्नः कुशलमबले ! पृच्छति त्वां वियुक्तां
पूर्व्वाभाष्यं सुलभविपदां प्राणिनामेतदेव ॥ १०२ ॥
अङ्गेनाङ्गं प्रतनु ! तनुना गाढ़तप्तेन तप्तं
सास्रेणाश्रु द्रुतमविरतोत्कण्ठमुत्कण्ठितेन ।
उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्त्ती
सङ्कल्पैस्तैर्व्विशति विधिना वैरिणा रुद्धमार्गः ॥ १०३ ॥
शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्
कर्णे लोलः कथयितुमभूद् आननस्पर्शलोभात् ।
सोऽतिक्रान्तः श्रवणविषयं लोचनाभ्यामदृष्ट-
स्त्वामुत्कण्ठाविरचितपदं मन्-मुखेनेदमाह ॥ १०४ ॥
श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्मिन् क्वचिदपि न ते चण्डि ! सादृश्यमस्ति॥१०५॥
धारासिक्तस्थलसुरभिणस्त्वन्मुखस्यास्य बाले !
दूरीभूतं प्रतनुमपि मां पञ्चवाणः क्षिणोति ।
घर्म्मान्तेऽस्मिन् विगणय कथं वासराणि व्रजेयु-
र्द्दिक्संसक्तप्रविततघनव्यस्तसूर्य्यातपानि ॥ १०६ ॥
त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायाम्
आत्मानं ते चरणपतितं यावदिच्छामि कर्त्तुम् ।

अस्रैस्तावन्-मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥ १०७ ॥
मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
र्लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेषु ।
पश्यन्तीनां न खलु बहुशो न स्थली देवतानां
मुक्तास्थूलास्तरुकिशलयेष्वश्रुलेशाः पतन्ति ॥ १०८ ॥
भित्त्वा सद्यः किशलयपुटान् देवदारुद्रुमाणां
ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ।
आलिङ्गन्ते गुणवति ! मया ते तुषाराद्रिवाताः
पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥ १०९ ॥
संक्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा
सर्व्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् ।
इत्थं चेतश्चटुलनयने ! दुर्लभप्रार्थनं मे
गाढोष्माभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥ ११० ॥
नन्वात्मानं बहुविगणयन्नात्मनैवावलम्बे
तत् कल्याणि ! त्वमपि सुतरां मा गमः कातरत्वम् ।
कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ १११ ॥
शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानेतान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥ ११२ ॥

भूयश्चाह त्वमपि शयने कण्ठलग्ना पुरा मे
निद्रां गत्वा किमपि रुदती सत्वरं विप्रबुद्धा ।
सान्तर्हासं कथितमसकृत् पृच्छतश्च त्वया मे
दृष्टः स्वप्ने कितव ! रमयन् कामपि त्वं मयेति ॥ ११३ ॥
एतस्मान्-मां कुशलिनमभिज्ञानदानाद् विदित्वा
मा कौलीनादसितनयने मय्यविश्वासिनी भूः ।
स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वभोगा-
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥ ११४ ॥
आश्वास्यैवं प्रथमविरहोदग्रशोकां सखीं ते
शैलादाशु त्रिनयनवृषोत्खातकूटान्निवृत्तः ।
साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि
प्रातःकुन्दप्रसवशिथिलं जीवितं धारयेथाः ॥ ११५ ॥
कच्चित् सौम्य ! व्यवसितमिदं बन्धुकृत्यं त्वया मे
प्रत्यादेशान्-न खलु भवतो धीरतां तर्कयामि ।
निःशब्दोऽपि प्रदिशसि जलं याचितश्चातकेभ्यः
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥ ११६ ॥
एतत् कृत्वा प्रियमनुचितप्रार्थनावर्त्तिनो मे
सौहार्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या ।
इष्टान् देशान् जलद ! विचर प्रावृषा संभृतश्री-
र्मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः ॥ ११७ ॥
श्रुत्वा वार्त्तां जलदकथितां तां धनेशोऽपि सद्यः
शापस्यान्तं सदयहृदयः संविधायास्तकोपः ।

संयोज्यैतौ विगलितशुचौ दम्पती हृष्टचित्तौ
भोगानिष्टानविरतसुखान् प्रापयामास शश्वत् ॥ ११८ ॥

इति श्रीकालिदासकृतं मेघदूताख्यं काव्यं
समाप्तम् ।

---

## हंसदूतः ।

दुकूलं बिभ्राणो दलितहरितालद्युतिहरं
जवापुष्पश्रेणीरुचिरुचिरपादाम्बुजतलः ।
तमालश्यामाङ्गो दरहसितलीलाञ्चितमुखः
परानन्दाभोगः स्फुरतु हृदि मे कोऽपि पुरुषः ॥ १ ॥
यदा यातो गोपीहृदयमदनो नन्दसदनान्-
मुकुन्दो गान्धिन्यास्तनयमनुविन्दन् मधुपुरीम् ।
तदामाङ्क्षीच्चिन्तासरिति घनघूर्णापरिचयै-
रगाधायां बाधामयपयसि राधा विरहिणी ॥ २ ॥
कदाचित् खेदाग्निं विघटयितुमन्तर्गतमसौ
सहालीभिर्लेभे तरलितमना यामुनतटीम् ।
चिरादस्याश्चित्तं परिचितकुटीरावकलनाद्
अवस्थां तस्तार स्फुटमथ सुषुप्तेः प्रियसखीम् ॥ ३ ॥
तदा निष्पन्दाङ्गी कलितनलिनीपल्लवकुलैः
परीणाहात् प्रेम्नामकुशलशतार्शाङ्किहृदयैः ।

दृगम्भोगम्भीरीकृतमिहिरपुत्रीलहरिभि-
र्विलीना धूलीनामुपरि परिवव्रे परिजनैः ॥ ४ ॥

ततस्तां न्यस्याङ्गैमुरसि ललिताथाः कमलिनी-
पलाशैः कालिन्दीसलिलशिशिरैर्वीजिततनुम् ।
परावृत्तश्वासाङ्कुरचलितकण्ठीं कलयतां
सखीसन्दोहानां प्रमदभरभाली ध्वनिरभूत् ॥ ५ ॥

निधायाङ्के पङ्केरुहदलविटङ्कस्य ललिता
ततो राधां नीराहरणसरणीन्यस्तचरणा ।
मिलन्तं कालिन्दीपुलिनभुवि खेलाञ्चितगतिं
ददर्शाग्रे कश्चिन्मधुरविरुतं श्वेतगरुतम् ॥ ६ ॥

तदालोकस्तोकोच्छ्वसितहृदया सादरमसौ
प्रणामं शंसन्ती लघु लघु समासाद्य सविधम् ।
धृतोत्कण्ठा सद्यो हरिसदसि सन्देशहरणे
वरं दूतं मेने तमतिललितं हन्त ! ललिता ॥ ७ ॥

अमर्षात् प्रेमेर्ष्यां सपदि दधती कंसमथने
प्रवृत्ता हंसाय स्वमभिलषितं शंसितुमसौ ।
न तस्या दोषोऽयं यदिह विहगं प्रार्थितवती
न कस्मिन् विश्रम्भं दिशति हरिभक्तिप्रणयिता ॥ ८ ॥

पवित्रेषु प्रायो विरचयसि तोयेषु वसतिं
प्रमोदं नालीके वहसि विषदात्मा स्वयमसि ।
अतोऽहं दुःखार्ता शरणमबला त्वां गतवती
न भिक्षा सत्पात्रे व्रजति हि कदाचिद्विफलताम् ॥ ९ ॥

चिरं विस्मृत्यास्मान् विरहदहनज्वालविकलाः
कलावान् सानन्दं वसति मथुरायां मधुरिपुः ।
तदेतं सन्देशं स्वमनसि समाधाय निखिलं
भवान् क्षिप्रं तस्य श्रवणपदवीं सङ्गमयतु ॥ १० ॥
निरस्तप्रत्यूहं भवतु भवतो वर्त्मनि शिवं
समुत्तिष्ठ क्षिप्रं मनसि मुदमाधाय सदयम् ।
अधस्ताद्धावन्तो लघु लघु समुत्तानयनै-
र्भवन्तं वीक्षन्तां कुतुकतरला गोपशिशवः ॥ ११ ॥
किशोरीत्तंशोऽसौ कठिनमतिना दानपतिना
यया निन्ये तूर्णं पशुप-युवतीजीवितपतिः ।
तया गन्तव्या ते निखिलजगदेकप्रथितया
पदव्या भव्यानां तिलक ! किल दाशार्हनगरी ॥ १२ ॥
गलद्दानासारप्लुतधवलगण्डा मृगदृशो
विदूयन्ते यत्र प्रबलमदना वेशविवशाः ।
त्वया विज्ञातव्या हरिचरणसङ्गप्रणयिनी
ध्रुवं सा चक्राङ्गी रतिसखशताङ्गस्य पदवी ॥ १३ ॥
पिबन् जम्बुश्यामं मिहिरदुहितुर्वारिमधुरं
मृणालीर्भुञ्जानो हिमकरकलाकोमलरुचः ।
क्षणं हृष्टस्तिष्ठन् निविड़विटपे शाखिनि सखे !
सुखेन प्रस्थानं रचयतु भवान् वृष्णिनगरे ॥ १४ ॥
बलादाक्रन्दन्तीरथ पथिकमक्रूरमिलितं
विदूरादाभीरीततिरनुययौ येन रमणम् ।

तमादौ पन्थानं रचय चरितार्थां भवतु ते
विराजन्ती सर्वोपरि परमहंसस्थितिरियम् ॥ १५ ॥
अकस्मादस्माकं हरिरपहरन्नंशुकचयं
यमारूढो गूढप्रणयलहरीं कन्दलयितुम् ।
तव श्रान्तस्यान्तःस्थगितरविबिम्बः किसलयैः
कदम्बः कादम्ब ! त्वरितमवलम्बः स भविता ॥ १६ ॥
किरन्ती लावण्यं दिशि दिशि शिखण्डस्तवकिनी
दधाना साधीयः कनकविमलद्योतिवसनम् ।
तमालश्यामाङ्गी सरलमुरलीचुम्बितमुखी
जगौ चित्रं यत्र प्रकटपरमानन्दलहरी ॥ १७ ॥
तया भूयः क्रीडाभ्रमविकसदुल्लवलभ्रू-
वपुर्वल्लीभ्रश्यन्मृगमदकणश्यामलिकया ।
विधातव्यो हल्लीसकदलितमल्लीलतिकया
समन्तादुल्लासस्तव मनसि रासस्थलिकया ॥ १८ ॥
तदन्ते वासन्तीविरचितमनङ्गोत्सवकला
चतुःशालं शौरेः स्फुरति न दृशो तत्र विकिरेः ।
तदालोकोद्दाद्दप्रमदभरविस्मारितगति-
क्रिये जाने तावत्त्वयि वत हता गोपवनिता ॥ १९ ॥
मम स्यादर्थानां क्षतिरिह विलम्बाद् यदपि ते
विलोकेथाः सर्वं तदपि हरिकेलिस्थलमिदम् ।
तवेयं न व्यर्था भवतु शुचिता कः स हि सखे !
गुणो यस्मात्पूरद्विषि मयिनिवेशाय न भवेत् ॥ २० ॥

सन्नद्धंशीनादश्रवणमिलिताभीरवनिता-
रहःक्रीडासाक्षी प्रतिपदलतासद्मसुभगः ।
स धेनूनां बन्धुर्मधुमथनखट्टायितशिलः
करिष्यत्यानन्दं सपदि तव गोवर्द्धनगिरिः ॥ २१ ॥

तमेवाद्रिं चक्राङ्कितकरपरिष्वङ्गरसिकं
महीचक्रे शृङ्गं महि शिखरिणां शेखरतया ।
अरातिं ज्ञातीनां ननु हरिरियं यः परिभवन्
यथार्थं स्वं नाम व्यधित भुवि गोवर्द्धन इति ॥ २२ ॥

तमालस्यालोकाद्गिरिपरिसरे सन्ति चपलाः
पुलिन्द्यो गोविन्दस्मरखरभसोत्तप्तवपुषः ।
शनैस्तापं तासां क्षणमपनयन् यास्यति भवान्
अवश्यं कालिन्दीसलिलशिशिरैः पद्मपवनैः ॥ २३ ॥

तदन्ते श्रीकान्तस्मरसमरधाटी पुटकिता
कदम्बानां वाटी रसिकपरिपाटीं स्फुटयति ।
त्वमासीनस्तस्यां न यदि परितो नन्दसि ततो
बभूव व्यर्था ते घनरसनिवेशव्यसनिता ॥ २४ ॥

शरण्ये घस्रेणीप्रतिभटमरिष्टासुरशिर-
स्थिरं शृङ्गं वृन्दावनपरिसरे द्रक्ष्यति भवान् ।
यदारोढुं दूरान्मिलति किल कैलासशिखरि
भ्रमाक्रान्तस्वान्तो गिरिशसुहृदः किङ्करगणः ॥ २५ ॥

एवन् याहि स्वैरं चरमदशया चुम्बितरुचो
नितम्बिन्यो वृन्दावनभुवि सखे ! सन्ति बहवः ।

परावर्तिष्यन्ते तुलितमुरजिन्नूपुररवात्
तव ध्वानात् तासां वहिरपि गताः चिप्रमसवः ॥ २६ ॥

त्वमासीनः शाखान्तरमिलितचण्डत्विषि सुखं
दधीथा भाण्डीरे चणमपि घनश्यामलरुचौ ।
ततो हंसा विभ्रन्निखिलनभसश्चिक्रमिषया
स वर्द्धिष्णुं विष्णुं कलितदरचक्रं तुलयिता ॥ २७ ॥

त्वमष्टाभिर्नेत्रैर्विगलदमलप्रेमसलिलै-
र्मुहुः सिक्तास्तम्भां चतुर चतुरास्यस्तुतिभुवम् ।
जिहीथा विख्यातां स्फुटमिह भवद्वान्धवरथं
प्रविष्टं मंस्यन्ते विधिमटविदेव्यस्त्वयि गते ॥ २८ ॥

उदञ्चन्नेत्राम्भःप्रसरलहरीपिच्छिलपथ
स्खलत्पादन्यासप्रणिहितविलम्बाकुलधियः ।
हरौ यस्मिन्नम्ने त्वरितयमुनाकूलगमन-
स्पृहाक्षिप्ता गोप्यो ययुरनुपदं कामपि दशाम् ॥ २९ ॥

मुहुर्लास्यक्रीडाप्रमदमिलदाहोपुरुषिका
विकाशिन भ्रष्टैः फणिमणिकुलैर्धूमलरुचौ ।
पुरस्तस्मिन्नीपद्रुमकुसुमकिञ्जल्कसुरभौ
त्वया पुण्ये पेयं मधुरमुदकं कालियह्रदे ॥ ३० ॥

तृणावर्ताराते र्विरहदवसन्तापिततनोः
सदाभीरीवृन्दप्रणयबहुमानोन्नतिविदः ।
प्रणेतव्यो नव्यस्तवकभरसम्वर्द्धितरुच-
स्त्वया वृन्दादेव्याः परमविनयाद्वन्दनविधिः ॥ ३१ ॥

इति ज्ञात्वा केकाहतविरतिमेकाद्शवनीं
घनीभूतं चूतैर्व्रजभुवनं द्वादशमिदम् ।
पुरी यस्मिन्नास्ते यदुकुलभुवां निर्मलयशो-
भराणां धाराभिर्धवलितधरित्रीपरिसरा ॥ ३२ ॥
निकेतैराकीर्णा गिरिशगिरिडिम्भप्रतिभटै-
रवष्टम्भस्तम्भावलिविलसितैः पुष्पितवना ।
निविष्टा कालिन्दीतटभुवि तवाधास्यति सखे !
समन्तादानन्दं मधुरजनवृन्दा मधुपुरी ॥ ३३ ॥
वृषः शम्भोर्यस्यां दशति नवमेकत्र यवसं
विरिञ्चेरन्यस्मिन् गिलति कलहंसो बिसलताम् ।
क्वचित् क्रौञ्चारातेः कवलयति केकी विषधरं
विलीढि शक्रस्या बलरिपुकरी पल्लवमितः ॥ ३४ ॥
अबोधिष्ठाः काषायहि विघटितां प्रच्छदपटीं
विमुक्तामश्रासीः पथि पथि न मुक्तावलिमपि ।
अयि श्रीगोविन्दस्मरणमदिरामत्तहृदये
सतीति ख्यातिं ते हसति कुलटानां कुलमिदम् ॥ ३५ ॥
असव्यं बिभ्राणा पदमधृत लाक्षारसमसौ
प्रयाताहं मुग्धे ! विरम मम वेशैः किमधुना ।
अमन्दादाशङ्के सखि ! पुरपुरन्ध्रीकलकलाद्
अलिन्दाग्रे वृन्दावनकुसुमधन्वा विजयते ॥ ३६ ॥
अयं लीलापाङ्गस्नपितपुरवीथीपरिसरो
नवाशोकोत्तंसस्खलति पुरतः कंसविजयी ।

किमस्मानेतस्मात्मणिभवनपृष्ठादिनुदती
त्वमेका स्तब्धाक्षि ! स्थगयसि गवाक्षावलिमपि ॥ ३७ ॥
मुहुः शून्यां दृष्टिं वहसि रहसि ध्यायसि सदा
शृणोषि प्रत्यक्षं न परिजनविज्ञापनशतम् ।
अतः शङ्के पङ्केरुहमुखि ! ययौ श्यामलरुचिः
स यूनामुत्तंसस्तव नयनवीथीपथिकताम् ॥ ३८ ॥
विलज्जं मा रोदीरिह सखि ! पुनर्यास्यति हरि-
स्तवापाङ्गक्रीड़ां त्रिविड़परिचर्य्याग्रहिलताम् ।
इति स्वैरं यस्यां पथि पथि मुरारेरभिनव-
प्रवेशे नारीणां रतिरभसजल्पावव्रजिरे ॥ ३९ ॥

पञ्चभिः कुलकम् ।

सखे ! साक्षाद्दामोदरवदनचन्द्रावकलन-
स्फुरत्प्रेमातन्द्रप्रकरलहरीचुम्बितधियः ।
मुहुस्तत्राभीरीसमुदयशिरोन्यस्तविपद-
स्तवाक्षय्यानन्दं विदधति पुरा पौरवनिताः ॥ ४० ॥
अथ क्रामं क्रामं क्रमघटनया सङ्कटतरान्
निवासान् वृष्णीनामनुसर पुरीमध्यविशिखान् ।
मुरारातेर्यत्र स्थगितगगनाभि विजयते
पताकाभिः सन्तर्पितभुवनमन्तःपुरवरम् ॥ ४१ ॥
यदुत्सङ्गे तुङ्गस्फटिकरचिताः सन्ति परितो
मराला माणिक्यप्रकरघटितत्रोटिचरणाः ।
सुहृद्वृन्दं हंसाः कलितमधुरस्याम्बुजभुवः

समर्थ्यादा येषां सपदि परिचर्य्यां विदधति ॥ ४२ ॥

चिरान्मृग्यन्तीनां पशुपरमणीनामपि कुलै-
रलब्धं कालिन्दीपुलिनविपिने लीनमभितः ।
मदालोकोल्लासिस्मितपरिचितास्यं प्रियसखि !
स्फुरन्तं वीक्षिष्ये पुनरपि किमग्रे मुरभिदम् ॥ ४३ ॥

विषादं माकार्षीर्द्रुतमवितथव्याहृतिरसौ
समागन्ता राधे ! धृतनवशिखण्डस्तव सखा ।
इति ब्रूते यस्यां शुकमिथुनमिन्द्रानुजकृते
यदाभीरीवृन्दैरुपहृतमभूदुद्धवकरे ॥ ४४ ॥

युग्मकम् ।

घनश्यामा भ्राम्यत्युपरि हरिहर्म्यस्य शिखिभिः
कृतस्तोत्रा मुग्धैरगुरुजनिता धूमलतिका ।
तदालोकाद्धीर स्फुरति तव चेन्मानसरुचि-
र्जितं तर्हि स्वैरं जनसहनिवासप्रियतया ॥ ४५ ॥

ततोमध्येकक्ष्यं प्रतिनवगवाक्षस्तवकितं
चलन्मुक्तालम्बस्फुरितममलस्तम्भनिवहम् ।
भवान् द्रष्टा हेमोल्लिखितदशमस्कन्धचरितै-
र्लसद्भित्तिप्रान्तं मुरविजयिनः केलिनिलयम् ॥ ४६ ॥

अलिन्दे यस्यास्ते मरकतमयी यष्टिरमला
ययालुर्य्यां रात्रौ मदकलकलापी कलयति ।
निरातङ्कस्तस्याः शिखरमधिरुह्य श्रमनुदं
प्रतीक्षेथा भ्रातर्वरमवसरं यादवपतेः ॥ ४७ ॥

निविष्टः पल्यङ्के मृदुलतरतूलीधवलिते
त्रिलोकीलक्ष्मीणां ककुदि दरसाचीकृततनुः ।
अमन्दं पूर्णेन्दुप्रतिममुपधानं प्रमुदितो
निधायाग्रे तस्मिन्नुपहितकपोलिद्वयभरः ॥ ४८ ॥

उदञ्चत्कालिन्दीसलिलसुभगं भावुकरुचिः
कपोलान्ते प्रेङ्खन्मणिमकरमुद्रामधुरिमा ।
वसानः कौषेयं जितकनकलक्ष्मीपरिमलं
मुकुन्दस्ते साक्षात् प्रमद सुधया सेक्ष्यति दृशौ ॥ ४९ ॥

विकट्ठः पौराणैरखिलकुलवृद्धो यदुपते-
रदूरादासीनो मधुरभणितिर्गास्यति तदा ।
पुरस्तादाभीरीगणभयदनामा स कठिनो
मणिस्तम्भालम्बी कुरुकुलकथां सङ्कलयिता ॥ ५० ॥

शिलीनामुत्तंसः स किल कृतवर्माप्युभयतः
प्रणेष्यते बालव्यजनयुगलान्दोलनविधिम् ।
स जानुभ्यामष्टापदभुवमवष्टभ्य भविता
गुरोः शिष्यो नूनं पदकमलसम्बाहनरतः ॥ ५१ ॥

विहङ्गेन्द्रो युग्मीकृतकरसरोजो भुवि पुरः
कृताधक्को भावी प्रजविनि निदेशेऽर्पितमनाः ।
छदद्वन्द्वे यस्य ध्वनति मथुरावासिवटवो
व्युदस्यन्ते सामस्वरकलितमन्योन्यकलहम् ॥ ५२ ॥

न निर्वक्तुं दामोदरपदकनिष्ठाङ्गुलिनख-
द्युतीनां लावण्यं भवति चतुरास्योऽपि चतुरः ।

तथापि स्तोप्रग्रामुलभतरलत्वादहमसौ
प्रवृत्ता तस्य स्तुतिं स्तवरतिमहासाहसरसे ॥ ५३ ॥
विराजन्ते यस्य व्रजशिशुकुलस्तेयविकल-
स्वयम्भूचूड़ाग्रैर्लुलितशिखराः पादनखराः।
क्षणं यानालोक्य प्रकटपरमानन्दविरसः
स देवर्षिर्मुक्तानपि तनुभृतः शोचति भृशम् ॥ ५४ ॥
सरोजानां व्यूहः श्रियमभिलषन् यस्य पदयो-
र्ययौ रागाढ्यानां विधुरमुदवासव्रतविधिम्।
हिमं वन्दे नीचैरनुचितविधानव्यसनिनां
यदेषां प्राणान्तं दमनमनुवर्षं प्रणयति ॥ ५५ ॥
रुचीनामुल्लासैर्मरकतमयस्थूलकदली-
कदम्बाहङ्कारं कवलयति यस्योरुयुगलम्।
यदालानस्तम्भद्युतिमवललम्बे बलभृतां
मदादुद्दामानां पशुपरमणीचित्तकरिणाम् ॥ ५६ ॥
सखे! यस्याभीरीनयनसफरीजीवनविधौ
निदानं गाम्भीर्य्यप्रसरकलिता नाभिसरसी।
यतः कल्पस्यादौ सनकजनकोत्पत्तिवड़भी-
गभीरान्तःकक्षाधृतभुवनमम्भोरुहमभूत् ॥ ५७ ॥
द्युतिं धत्ते यस्य त्रिवलिलतिका सङ्कटतरं
सखे! दामश्रेणीचरणपरिचयाभिज्ञमुदरम्।
यशोदा यस्यान्तः सुरनरभुजङ्गैः परिवृतं
मुखद्वारावारद्वयमवलु लोके त्रिभुवनम् ॥ ५८ ॥

उरो यस्य स्फारं स्फुरति वनमालावलयितं
वितन्वानं तन्वीजनमनसि सद्यो मनसिजम् ।
मरीचीभिर्यस्मिन् रविनिवहतुल्योऽपि वहते
सदा खद्योताभां भुवनमधुरः कौस्तुभमणिः ॥ ५९ ॥

समन्तादुन्मीलद्दलभिदुपलस्तम्भयुगल-
प्रभाजैत्रं केयूरद्विजलुलितकेयूरललितम् ।
स्मरक्ष्माभृद्दोर्पीपटलहठकण्ठग्रहपरं
भुजद्वन्द्वं यस्य स्फुटसुरभिगन्धं विजयते ॥ ६० ॥

जिहीते साम्राज्यं जगति नवलावण्यलहरी
परीपाकस्यान्तर्मुदितमदनावेशमधुरम् ।
नटद्भ्रूवल्लीकं स्मितनवसुधाकेलिसदनं
स्फुरन्मुक्तापङ्क्तिप्रतिमरदनं यस्य वदनम् ॥ ६१ ॥

किमेभिर्व्याहारैः कलय कथयामि स्फुटमहं
सखे ! निःसन्देहं परिचयपदं केवलमिदम् ।
परानन्दो यस्मिन्नयनपदवीभाजि भविता
त्वया विज्ञातव्यो मधुरख ! सोऽयं मधुरिपुः ॥ ६२ ॥

विलोकेथाः कृष्णं मदकलमरालीरतिकला-
विदग्धव्यामुग्धं यदि पुरवधूविभ्रमभरैः ।
तदा नास्मान् ग्राम्याः श्रवणपदवीं तस्य गमयेः
सुधापूर्णं चेतः कथमपि न तक्रं मृगयते ॥ ६३ ॥

यदा वृन्दारण्यस्मरणलहरीहेतुरमलं
पिकानां वेवेष्टि प्रतिहरितमुच्चैः कुहुरुतम् ।

वहन्ते वा वाताः स्फुरितगिरिमल्लीप्रविमला
स्तदैवास्माकीनां गिरमुपहरेथा मुरभिदि ॥ ६४ ॥
पुरा तिष्ठन् गोष्ठे निखिलरमणीभ्यः प्रियतया
भवान् यस्यां गोपीरमण ! विदधे गौरवभरम् -
सखी तस्या विज्ञापयति ललिता धीरललित !
प्रणम्य श्रीपादाम्बुजकनकपीठोपरिसरे ॥ ६५ ॥
प्रयत्नादाबाल्यं नवकमलिनीपल्लवकुलै-
स्त्वया भूयोयस्याः कृतमहह सम्वर्द्धनमभूत् ।
चिराद्धूधीभारास्फुरणगरिमाक्रान्तजघना
बभूव प्रष्ठौही मुरमथन ! सेयं कपिलिका ॥ ६६ ॥
समीपे नीपानां त्रिचतुरदला हन्त गमिता
त्वया माकन्दस्य प्रियसहचरी भावनियतिम् ।
इयं सा वासन्ती गलदमलमाध्वीकपटली-
मिषादग्रे गोपीरमण ! रुदती रोदयति नः ॥ ६७ ॥
प्रसूतो देवक्या मुरमथन यः कोऽपि पुरुषः
स जातो गोपालाभ्युदयपरमानन्दवसतिः ।
धृतो यो गान्धिन्या कठिनजठरे सम्प्रति ततः
समन्तादेवास्तं शिव शिव गता गोकुलकथा ॥ ६८ ॥
अरिष्टेनाक्रान्ताः पशुपसुदृशो यान्ति विपदं
तृणावर्त्ताक्रान्त्या रचयति भयं चत्वरचयः ।
अमी व्योमीभूता व्रजवसतिभूमीपरिसरा
वहन्ते नस्तापं मुरहर ! विदूरं त्वयि गते ॥ ६९ ॥

त्वया नागन्तव्यं कथमिह हरे ! गोष्ठमधुना
लताश्रेणी वृन्दावनभुवि यतोऽभूद्विषमयी ।
प्रसूनानां गन्धं कथमितरथा वातनिहितं
भजन् सद्यो मूर्च्छां वहति निवहो गोपसुदृशाम् ॥ ७० ॥
कथं सङ्गोऽस्माभिः सह समुचितः सम्प्रति हरे !
वयं ग्राम्या नार्य्यस्त्वमसि नृपकन्यार्चितपदः ।
गतः कालो यस्मिन् पशुपरमणीसङ्गमकृते
भवान् व्यग्रस्तस्थौ तमसि गृहवाटीविटपिनः ॥ ७१ ॥
वयं त्यक्ताः स्वामिन् ! यदिह तव किं दूषणमिदं
निसर्गः श्यामानामयमतितरां दुष्परिहरः ।
कुहूकण्ठैरण्डावधिसहनिवासात् परिचिता
विसृज्यन्ते सद्यः कलितनवपक्षैर्बलिभुजः ॥ ७२ ॥
अयं पूर्वो रङ्गः किल विरचितो यस्य तरसा
रसादाख्यातव्यं परिकलय तन्नाटकमिदम् ।
मया प्रष्टव्योऽसि प्रथममिति वृन्दावनपते !
किमाहो राधेति स्मरसि कृपणं कर्णयुगलम् ॥ ७३ ॥
अये कुञ्जद्रोणीकुहरगृहमेधिन् ! किमधुना
परोक्षं वक्ष्यन्ते पशुपरमणीदुर्नियतयः ।
प्रवीणा गोपीनां तव चरणपद्मेऽर्पितमना
ययौ राधा साधारणसमुचितप्रश्नपदवीम् ॥ ७४ ॥
त्वया गोष्ठं गोष्ठीतिलक ! किल चेद्विस्मृतमिदं
न तूर्णं धूमोर्णापतिरपि विधत्ते यदि कृपाम् ।

अहर्वृन्दं वृन्दावनकुसुमपालीपरिमलै-
र्दुरालोकं शोकास्पदमथ कथं नेष्यति सखी ॥ ७५ ॥

तरङ्गैः कुर्वाणा शमनभगिनीलाघवमसौ
नदीं काञ्चिन्नोष्ठे नयनजलपूरैरजनयत्।
इतीवास्याद्वेषादभिमतदशाप्रार्थनमयीं
मुरारे विज्ञप्तिं निशमयति मानी न शमनः ॥ ७६ ॥

कृताकृष्टिक्रीडं किमपि तव रूपं मम सखी
सकृद्दृष्टा दूरादहितहितबोधोज्झितमतिः।
हताशेयं प्रेमानलमनुविशन्ती सरभसं
पतङ्गीवात्मानं मुरहर ! मुहुर्दाहितवती ॥ ७७ ॥

मया वाच्यः किं वा त्वमिह निजदोषात् परमसौ
ययौ मन्दा वृन्दावनकुमुदबन्धो विधुरताम्।
यदर्थं दुःखाग्निर्दहति न तमद्यापि हृदयात्
न यस्माद्दुर्मेधा लवमपि भवन्तं द्रवयति ॥ ७८ ॥

त्रिवक्राहो धन्या हृदयमिव ते स्वं वपुरियं
समासाद्य स्वैरं यदिह विलसन्ती निवसति।
ध्रुवं पुण्यभ्रंशादजनि सरलेयं मम सखी
प्रवेशस्तत्रासीत् क्षणमपि यदस्या न सुलभः ॥ ७९ ॥

किमाविष्टा भूतैः सपदि यदि वा क्रूरफणिना
क्षतापस्मारेण च्युतमतिरकस्मात् किमपतत्।
इति व्यग्रैरस्यां गुरुभिरभितो वेणुनिनद-
श्रवाद् विभ्रष्टायां मुरहर विकल्पा विदधिरे ॥ ८० ॥

नवीनेयं सम्प्रत्यकुशलपरीपाकलहरी
नरीनर्त्ति स्वैरं मम सहचरीचित्तकुहरे ।
जगन्नेत्रश्रेणी-मधुरमथुरायां निवसत-
श्चिरादार्त्तां वार्त्तामपि तव यदेषा न लभते ॥ ८१ ॥
जनान् सिद्धादेशान् नमति भजते मान्त्रिकगणान्
विधत्ते शुश्रूषामधिकविनये नौषधिविदाम् ।
त्वदीक्षादीक्षायै परिचरति भक्त्या गिरिसुतां
मनीषा हि व्यग्रा किमपि सुखहेतुं न मनुते ॥ ८२ ॥
पशूनां पातारं भुजगरिपुपत्रप्रणयिनं
स्मरोर्द्द्विक्रीड़ं निविडघनसारद्युतिहरम् ।
सदाभ्यर्णं नन्दीश्वरगिरिभुवो रङ्गरसिकं
भवन्तं कंसारे भजति भवदाशैर मम सखी ॥ ८३ ॥
भवन्तं सन्तप्ता विदलिततमालाङ्कुररसै-
र्विलिख्य भ्रूभङ्गीकृतमदनकोदण्डकदनम् ।
निधास्यन्ती कण्ठे तव निजभुजावल्लरिमसौ
धरण्यामुन्मीलज्जड़िमनिविड़ाङ्गी विलुठति ॥ ८४ ॥
कदाचिन्-मूढ़ेयं निविड़भवदीयस्मृतिमदा-
दमन्दादात्मानं कलयति भवन्तं मम सखी ।
तथास्या राधाया विरहदहनाकल्पितधियो
मुरारे ! दुःसाधा क्षणमपि न राधा विरमति ॥ ८५ ॥
त्वया सन्तापानामुपरि परिमुक्तापि रभसा-
दिदानीमापेदे तदपि तव चेष्टां प्रियसखी ।

यदेषा कंसारे भिदुरहृदयं त्वामवयती
सतीनां मूर्द्धन्या भिदुरहृदयाऽभूदनुदिनम् ॥ ८६ ॥

समक्षं सर्व्वेषां निवससि समाधिप्रणयिनाम्
इति श्रुत्वा नूनं गुरुतरसमाधिं कलयति ।
सदा कंसाराते भजसि यमिनां नेत्रपदवीम्
इति व्यक्तं सज्जीभवति यममालम्बितुमपि ॥ ८७ ॥

मुरारे ! कालिन्दीसलिलचलदिन्दीवररुचे !
मुकुन्द ! श्रीवृन्दावनमदनवृन्दारकमणे ! ।
व्रजानन्दिन्नन्दीश्वरदयितनन्दात्मजहरे !
सदेति क्रन्दन्ती परिजनशुचं कन्दलयति ॥ ८८ ॥

समन्तादुत्तप्तस्तव विरहदावाग्निशिखया
कृतोद्वेगः पञ्चाशुगमृगयुवेधव्यतिकरैः
तनूभूतं सद्यस्तनुवनमिदं हास्यति हरे
हठादद्य श्वो वा मम सहचरी प्राणहरिणः ॥ ८९ ॥

पयोराशिस्फीतत्विषि हिमकरोत्तंसमधुरे
दधाने दृग्भङ्ग्या स्मरविजयिरूपं मम सखी ।
हरे दत्तस्वान्ता भवति तदिमां किं प्रभवति
स्मरो हन्तुं किन्तु व्यथयति भवानेव कुतुकी ॥ ९० ॥

विजानीषे भावं पशुप-रमणीनां यदुपते !
न जानीमः कस्मात् तदपि वत मायां रचयसि ।
समन्तादध्यात्मं यदिह पवनव्याधिरलपद्-
बलादस्यास्तेन व्यसनकुलमेव द्विगुणितम् ॥ ९१ ॥

गुरोरन्तेवासी स भजति यदूनां सचिवतां
सखी कालिन्दीयं किल भवति कालस्य भगिनी ।
भवेदन्यः को वा नरपतिपुरे मत्परिचितो
दशामस्याः शंसन् यदुतिलक ! यस्त्वामनुनयेत् ॥ ९२ ॥
विशीर्णाङ्गीमन्तर्व्रणविलुठनादुत्कलिकया
परीतां भूयस्या सततमपरागव्यतिकराम् ।
परिध्वस्तामोदां विरमितसमस्तालिकुतुकां
विधो पादस्पर्शादपि सुखय राधाकुमुदिनीम् ॥ ९३ ॥
विपत्तिभ्यः प्राणान् कथमपि भवत्सङ्गमसुख-
स्पृहाधीना शौरे मम सहचरी रक्षितवती ।
अतिक्रान्ते सम्प्रत्यवधिदिवसे जीवनविधौ
हताशा निःशङ्कं वितरति दृशौ चूतमुकुले ॥ ९४ ॥
प्रतीकारारम्भश्लथमतिभिरुद्यत्परिणतै-
र्विमुक्तायाः व्यक्तस्मरकदनभाजः परिजनैः ।
अमुञ्चन्ती सङ्गं कुवलयदृशः केवलमसौ
बलादद्य प्राणानवति भवदाशासहचरी ॥ ९५ ॥
अये रासक्रीडारसिक ! मम सख्यां नवनवा
पुरा बद्धा येन प्रणयलहरी हन्त गहना ।
स चेन्मुक्तापिच्छस्त्वमसि धिगिमां तूलशकलं
यदेतस्या नासानिहितमिदमद्यापि चलति ॥ ९६ ॥
मुकुन्द भ्रान्ताक्षी किमपि यदसङ्कल्पितशतं
विधत्ते तद्वक्तुं जगति मनुजः कः प्रभवति ।

कदाचित् कल्याणी विलपति यदुत्कण्ठितमति-
स्तदाख्यामि स्वामिन् ! गमय मकरोत्तंससविधम् ॥९७॥
अभूत् कोऽपि प्रेमा मयि मुररिपोर्यः सखि पुरा
पराट् धर्मापेक्षामपि तदवलम्बादलघयन् ।
तथेदानीं हा धिक् ! समजनि तटस्थः स्फुटमहं
भजे लज्जां येन क्षणमिह पुनर्जीवितुमपि ॥ ९८ ॥
अमी कुञ्जाः पूर्वं मम न दधिरे कामपि मुदं
द्रुमालीयं चेतः सखि न कतिशो नन्दितवती ।
इदानीं पश्यैते युगपदुपतापं विदधते
प्रभौ मुक्तापेक्षे भजति न हि को वा विमुखताम् ॥९९॥
गरीयान् मे प्रेमा त्वयि परमितिस्नेहलघुता
न जीविष्यामीति प्रणयगरिमाख्यापनविधिः ।
कथं नायासीति स्मरणपरिपाटीप्रकटनं
हरौ सन्देशाय प्रियसखि ! न मे वागवसरः ॥ १०० ॥
ययौ कालः कल्यान्यवकलितकेलीपरिमलां
विलासार्थी यस्मिन् न चलकुहरे लीनवपुषीम् ।
स मां धृत्वा धूर्तः कृतकपटरोषां सखि हठाद्-
अकार्षीदाकर्षन्नुरसि शशिलेखाशतव्रताम् ॥ १०१ ॥
कदा प्रेमोन्मीलन्-मदनमदिराक्षी समुदयं
बलादाकर्षन्तं मधुरमुरलीकाकलिकया ।
मुहुर्भ्रम्यच्चिल्ली चुलुकितकुलस्त्री व्रतमहं
विलोकिष्ये लीलामदमिलदपाङ्गी मुरभिदम् ॥ १०२ ॥

रणद्भृङ्गश्रेणीमुखरितदिशि शरदारम्भमधुरे
वनान्ते चान्द्रीभिः किरणलहरीभिर्धवलिते ।
कदा प्रेमोद्दण्डस्मरकलहवैतण्डिकमहं
करिष्ये गोविन्दं निविड़भुजबन्धप्रणयिनम् ॥ १०३ ॥
मनो मे हा कष्टं ज्वलति किमहं हन्त करवै
न पारं नावारं किमपि कलयाम्यस्य जलधेः ।
इयं वन्दे मूर्द्ध्ना सपदि तमुपायं कथय मे
परामृष्ये यस्माद्धृतिकलिकयापि क्षणिकया ॥ १०४ ॥
प्रयातो मां हित्वा यदि विबुधचूड़ामणिरसौ
प्रयातु स्वच्छन्दं मम समयधर्मः किल गतिः ।
इदं सोढ़ुं का वा प्रभवति यतः स्वप्नकपटाद्
इहायातो वृन्दावनभुवि बलान्मां रमयति ॥ १०५ ॥
अनौचित्तं तस्य व्यथयति मनो हन्त मथुरां
त्वमासाद्य स्वैरं चपलहृदयं धावय हरिम् ।
सखि ! स्वप्नारम्भे पुनरपि यथा विभ्रममदाद्
इहायातो धूर्त्तः क्षपयति न मे किञ्चिनिगुणम् ॥ १०६ ॥
अयि स्वप्नो दूरे निवसतु समक्षं शृणु हठाद्
अविश्वस्ता मा भूरिह सखि मनोविभ्रमधिया ।
वयस्यस्ते गोवर्द्धनविपिनमासाद्य कुतुकाद्
अकाण्डे यद्भूयः स्मरकलहपाण्डित्यमकरोत् ॥ १०७ ॥
अमर्षाद्यावन्तीं गहनकुहरे सूचितपथां
तुलाकोटिक्वाणैस्त्वकितपदपातद्विगुणितैः ।

दिधीर्षन्त्यां हर्षोत्तरलनयनान्तः स कुतुकी
न वंशीमग्रासीद्भुवि करसरोजाद्विगलिताम् ॥ १०८ ॥
अशक्तां गन्तव्ये कलितनवचेलाञ्चलतया
लतालीभिः पुष्पस्मितशवलिताभिर्विरुधतीम् ।
परीहासारम्भी प्रियसखि समालम्बितमुखीम्
प्रपेदे चुम्बाय स्फुरदधरबिम्बस्तव सखा ॥ १०९ ॥
ततोऽहं धम्मिल्ले स्थगितमुरलीका सखि शनै-
रलीकामर्षेण भ्रमदविरलभ्रूरुदचलम् ।
कचाकृष्टिक्रीडाक्रमपरिचिते चौर्य्यचरिते
हरिर्लब्धोपाधिः प्रसभमनयन्मां गिरिदरीम् ॥ ११० ॥
कदाचिद्दासन्ती कुहरभुवि धृष्टः सरभसम्
हसन् पृष्ठालम्बी स्थगयति कराभ्यां मम दृशौ ।
दिधीर्षौ जातेर्ष्ये मयि सखि तदीयाङ्गुलिशिखाम्
न जाने कुत्रायं व्रजति कितवानां कुलगुरुः ॥ १११ ॥
अतीतेयं वार्त्ता विरमतु पुरः पश्य सरले
वयस्यस्ते सोऽयं स्मितमधुरिमोन्मृष्टवदनः ।
भुजस्तम्भोल्लासादभिमतपरीरम्भरभसः
स्मरक्रीडासिन्धुः क्षिपति मयि बन्धूककुसुमम् ॥ ११२ ॥
तदुत्तिष्ठ व्रीडावति निविडमुक्तालतिकया
बधानैनं धूर्त्तं सखि मधुपुरीं याति न यथा ।
इति प्रेमोन्मीलन्नवदनुभवारूढजडिमा
सखीनामाक्रन्दं न किल कतिशः कन्दलयति ॥ ११३ ॥

अहो कष्टं बाल्यादहमिह सखीं दुष्टहृदया
मुहुर्मानग्रन्थिं सहजसरलां ग्राहितवती ।
तदारम्भाद् गोपीगणरतिगुरो निर्भरमसौ ।
न लेभे लब्धापि त्वदमलभुजस्तम्भरभसम् ॥ ११४ ॥

अलिन्दे कालिन्दीकमलसुरभौ कुञ्जवसते-
र्वसन्तीं वासन्तीनवपरिमलोद्गारचिकुराम् ।
त्वदुत्सङ्गे लीनां मदकुलिताक्षीं पुनरिमां
कदाहं सेविष्ये किसलयकलापव्यजनिनी ॥ ११५ ॥

धृतानन्दां वृन्दावनपरिसरे शारदनिशा
विलासोल्लासेन श्लथितकवरीस्फुल्लकुसुमाम् ।
तव स्कन्धोपान्ते विनिहितभुजावल्लरिमहं
कदा कुञ्जे लीना रहसि विहसिष्यामि सुमुखीम् ॥११६॥

विदूरादाहर्तुं कुसुममुपयामि त्वमधुना
पुरस्तीरे तीरे कलय तुलसीपल्लवमिदम् ।
इति व्याजादेनां विदितभवदीयस्थितिरहं
कदा कुञ्जे गोपीरमण गमयिष्यामि समये ॥ ११७ ॥

इति श्रीकंसारेः पदकमलयोर्गोकुलकथां
निवेद्य प्रत्येकं भज परिजनेषु प्रणयिताम् ।
निजाङ्गे कादम्बीसहचर वहन्मण्डनतया
स यात्युच्चैः प्रेमप्रवणमनुजग्राह भगवान् ॥ ११८ ॥

मिलन्नक्षीं हंसीरमण ! वनमालां प्रथमतो
मुदा क्षेमं पृच्छन्निदमुपहरेथा मम वचः ।

चिरं कंसारातेरुरसि सहवासप्रणयिनीं
किमेनामेणाक्षीं गुणवति विसस्मार भवति ॥ ११९ ॥
इदं किं वा हन्त स्मरसि रसिके खण्डनरुषा
परीताङ्गी गोवर्द्धनगिरिनितम्बे मम सखी।
भिया संभ्रान्ताक्षं यदिह विचकर्ष त्वयि बलाद्
गृहीत्वा विभ्रश्यन्नवशिखिशिखं गोकुलपतिम् ॥ १२० ॥
ततः सम्भाषेथाः श्रुतिमकरमुद्रामिति मुदा
भवत्यां कर्त्तव्यः किमिति कुशलप्रश्नजडिमा।
रुचिस्मेरा या त्वं रचयसि वालाचुम्बनकलाम्
अपाङ्गेन स्पृष्टा सखि मुररिपोर्गण्डकुहरे ॥ १२१ ॥
निवासस्ते देवि श्रवणलतिकायामिति धिया
प्रयत्नात्त्वामेव प्रणयहृदया यामि शरणम्।
परोक्षं वृष्णीनां निभृतनिभृतं कर्णकुहरे
हरेः काकूम्मिश्रां कथय सखि! राधाविधुरताम् ॥१२२॥
परीरम्भं प्रेम्णा मम सविनयं कौस्तुभमणौ
ब्रुवाणः कुर्वीथाः पतगवर! विज्ञापनमिदम्।
अगाधा राधायामपि तव सखे! विस्मृतिरभूत्
कथं वा कल्याणं वहति तरले हि प्रणयिता ॥ १२३ ॥
मुहुः कूजत्काञ्चीमणिवलयमञ्जीरमुरली-
वरालम्बी भ्राम्यद्युवतिकलगीतैः सुरमणे।
स किं साक्षाद्भावी पुनरपि हरेस्ताण्डवरसै-
रमन्दः कालिन्दीपुलिनभुवि तौर्य्यत्रिकभरः ॥ १२४ ॥

नवीनस्त्वं कम्बो पशुपरमणीभिः परिचयं
न धत्से राधाया गुणगरिमगन्धेऽपि न कृती ।
तथापि त्वां याचे हृदयनिहितं दोहदमहं
वहन्ते हि क्लान्ते प्रणयमवदातप्रकृतयः ॥ १२५ ॥
गृहीत्वा गोविन्दं जलधिहृदयानन्दन सखे !
सुखेन श्रीवृन्दावनपरिसरे नन्दतु भवान् ।
कथं वा ते गोष्ठं भवतु दयितं हन्त बलवान्
यदेतस्मिन् वेणोर्जयति चिरसौभाग्यमहिमा ॥ १२६ ॥
इति प्रेमोद्गारप्रभवणमनुनीय क्रमवशात्
परीवारान् भ्रातर्निश्रमयति चानूरमथने ।
पुनः कोपोद्भिन्नप्रणयचटुलं तस्य निकटे
कथामाचख्यौ था दशभिरवतारैर्विलसिताम् ॥ १२७ ॥
ग्रहीतुं त्वां प्रेमामिषपरिवृतं चित्तवड़िशं
महामीनं क्षिप्रं न्यधित रसपुरे मम सखी
विवेकाख्यं छित्वा गुणमथ तदग्रासि भवता
हताशेयं किं वा शिव शिव ! विधातुं प्रभवति ॥ १२८ ॥
वराकीयं दृष्ट्वा सुभग ! वपुषो विभ्रमभरं
तवाभ्यर्णं भेजे परमकुतुकोल्लासितमतिः ।
तिरोधाय स्वाङ्गं प्रकटयसि यत्त्वं कठिनतां
तदेतत् किं न स्यात् तव कमठमूर्त्तेः समुचितम् ॥ १२९ ॥
सदा कंसाराते स्फुरति चिरमद्यापि भवतः
स्फुटं क्रीड़ाकारे वपुषि निविड़प्रेमलहरी ।

यतः सा सैरिन्ध्री मलयरुहपङ्कप्रणयिनी
तया क्रोडीचक्रे परमरभसाद्रामदयिता ॥ १२० ॥
चिरादन्तर्भूता नरहरिमयी मूर्त्तिरभित-
स्त्वदीयो व्यापारस्तव हि न ययौ विस्मृतिपथम्।
विनीतप्रह्लादस्त्वमिह परमक्रूरचरित-
प्रयुक्तो यत्क्रूयः परहृदयभेदं जनयसि ॥ १२१ ॥
यदात्मानं दर्पादगणितगुरुर्वामन मुदा
मनोवाद्ये नाट्ये त्वयि वलितया कल्पितवती।
प्रपेदे तस्येदं फलमुचितमेव प्रियसखी
विदूरे यत् चिप्ता व्यसनकुलपाशैर्निगडिता ॥ १२२ ॥
इयं नाथ क्रूरा भृगुपतनमाकाङ्क्षति ततो
यदस्यां काठिन्यं तव समुचितं तद् भृगुपते:।
इयं ते दुर्वोधाकृतिरद्य भवद्विस्मृतिपथं
यतो यातः साक्षाद् गुरुरपि स नन्दीश्वरपतिः ॥१२३॥
निरानन्दा गावश्चिरमुपहृता दूषणकुलैः
खरायन्ते सद्यो रघुतिलक गोवर्धनतटाः।
विराधत्वं घोषो व्रजति भवदीयप्रवसनाद्
इदानीं मारीचः स्फुटमिह नरीनर्त्ति परितः ॥ १२४ ॥
प्रपन्नः कालोऽयं पुनरुदयितुं रासभजनै-
र्विलासिन्यद्यापि स्फुटमनपराधा वयमपि।
वितन्वानः कान्तिं वपुषि शरदाकाशवमितां
कथं न त्वं सीरध्वज भजसि वृन्दावनमिदम् ॥ १२५ ॥

न रागं सर्व्वत्र क्वचिदपि विधत्ते नरपतिं
मुहुर्द्वेष्टि द्रोहं कलयति बलाद्दिष्टविषये ।
चिरं ध्यानासक्ता निवसति सदासौ गतरति-
स्तथाप्यस्यां हंहो सदयहृदयस्त्वं न दयसे ॥ १३६ ॥
परिक्लिश्यन्तीच्छाम् समदमधुपालीमधुरया
निक्वान्तन् नित्राब्जप्रणयरचनास्वङ्गलतया ।
त्वमासन्नः काञ्चिन्निह च तुरगीणाहितरुचिः
स्वदेश्यं कुर्वीथाः प्रतिमुदितधीराधिकमिदम् ॥ १३७ ॥
इति प्रेमोद्गाढस्वपुटितवचो भङ्गिरखिलं
त्वमावेद्य क्लिद्यन्मुखपरिसरो लोचनजलैः ।
ततो गोविन्दस्य प्रतिचरणमाध्वीकपदवीम्
उपासीनो दृग्भ्यां प्रणमवदधीथाः खगपते ॥ १३८ ॥
प्रणेतव्यो दृष्टेरनुभवपथं नन्दतनयो
विधेया गोपीनां स्मरपरिहृतानामुपकृतिः ।
इयं धामैगंस्या चतुर मथुरापि त्रिचतुरै-
रिति द्वैधं नाम्नः कलय कलहंसीकुलपते ! ॥ १३९ ॥
अपूर्वा यस्यान्तर्विलसति मुदा सारसरुचि-
र्विवेक्तुं शक्येते सपदि मिलिते येन पयसी ।
कथङ्कारं युक्तो भवतु भवतस्तस्य कृतिनो
विलम्बः कादम्बीरमण मथुरासङ्गमविधौ ॥ १४० ॥
प्रपन्नः प्रेमार्थं भगवति सदा भागवतभाक्
पराचीनो जन्मावधिभवरसाद् भक्तिमधुरः ।

चिरं कोऽपि श्रीमान् जयति विदितः साकरतया
धुरीणो धीराणामधिधरणि वैयासकिरिव ॥ १४१ ॥
रसानामाधारैरपरिचितदोषः सहृदयै-
र्मुरारातिक्रीडानिविडघटनारूपसहितः ।
प्रबन्धोऽयं बन्धोरखिलजगतां तस्य सरसां
प्रभोरन्तः सान्द्रां प्रमदलहरीं पल्लवयतु ॥ १४२ ॥

इति श्रीरूपगोस्वामिविरचितं हंसदूताख्यं काव्यं
समाप्तम् ।

---

# पदाङ्कदूतः ।

---

गोपी भर्तुर्विरहविधुरा काचिदिन्दीवराक्षी
उन्मत्तेव स्खलितकवरी निःश्वसन्ती विशालम् ।
अत्रैवास्ते मुररिपुरिति भ्रान्तिदूतीसहाया
त्यक्त्वा गेहं झटिति यमुनामञ्जुकुञ्जं जगाम ॥ १ ॥
अप्राप्यैव व्रजपतिसुतं तत्र कालं कियन्तं
मूर्च्छाप्राणप्रियतमसखीसङ्गता सङ्गमय्य ।

तस्योपान्ते कुलिशकमलस्यन्दनाङ्कादियुक्तं
पद्माकारं मुरहरपदस्यारु चिह्नं ददर्श ॥ २ ॥
तस्मिन्मुग्धनवजलधरध्वानमाकर्ण्य भूयः
कन्दर्पेण व्यथितहृदयोन्मत्ततुल्या ययाचे ।
प्रज्ञाहीनं वचनरहितं निश्चलं श्रोत्रहीनं
दौत्यं कर्तुं मुरहरपदो लक्ष्मणं पद्मलाक्षी ॥ ३ ॥
रम्यं यावन् मुरहरपदे शोभते तावदेव
त्वय्यप्यास्ते कुलिशकमलस्यन्दनाङ्काङ्कुशादि ।
गोपीदौत्यप्रकटनभिया सन्निधौ चक्रपाणे-
र्याने धीरप्रमुख मुखरो नूपुरो नो गृहीतः ॥ ४ ॥
युक्तं चैतत् त्वयि मधुपुरीं प्रस्थिते पुण्यशीलाः
कीलालोत्थैः सुरभिकुसुमैरर्चयन्तोऽपि भक्त्या ।
पश्यन्तस्त्वां नयनसुभगं साश्रुधाराक्षियुग्मं
यास्यन्त्युच्चैः पुलकिततनु प्रेमधारामुदाराम् ॥ ५ ॥
चेतः प्रस्थापितमणुतया दौत्यकर्मोपयुक्तं
तत्रैवास्ते मुरहरपदस्पर्शमासाद्य मुग्धम् ।
आकांक्षेयं तनुगुरुतया नैव गन्तुं समर्था
कोऽन्यो गच्छेदिह मधुपुरीं गोपिकानां हिताय ॥ ६ ॥
आगन्तव्यं झटिति मथुरामण्डलाद् गोपकान्ते
शान्तेति त्वं भव मधुरिपुः प्रस्थितः प्रोच्य चेदम् ।
वाक्यं तच्च श्रवणमभवत् तेन मेने क्रमाद्धि
प्रायः सत्यं मतमिदमहो कारणं कार्य्यमेव ॥ ७ ॥

तूर्णं तस्यां गमनमुचितं तेन मे तद्वियोग-
व्याधेः शान्तिस्तव च भविता तत्पुरीस्पर्शपुण्यम् ।
वृन्दारण्याद्भवतु सुकृतं भूरि तेनैव किं स्यान्
नाकाङ्क्षा किं भवति विपुलश्रीमतोऽर्थान्तरेषु ॥ ८ ॥
अक्रूरस्य व्रजकुलवधूप्राणपानोद्यतस्य
प्रीतिर्भूयो भवतु भवतो दर्शनात्तेन किं वा ।
कार्य्यासिद्धिर्भवति यदहो मादृशां दुःखहेतु-
र्नैवौन्नत्यं सकलभुवनप्रार्थनीयं रिपूणाम् ॥ ९ ॥
सन्त्येवास्मत्कलुषकरिणः कोटिशो वारणीया-
स्तेऽप्यस्माभिः स्मृतिकरवरेणाङ्कुशं ते गृहीत्वा ।
स्वच्छन्देन व्रज मधुपुरीं को भवेद्वा विरोधी
गोपीभर्तुर्विरहजलधिं गोपकन्यास्तरन्तु ॥ १० ॥
आस्ते नूनं यदुषु मथुरामण्डले चक्रपाणिः
कूजद्भृङ्गैरमलकमलैराकुले गोकुले वा ।
तस्माद्गच्छेरतिलघुपुरीं तां च जन्मावनीवद्
बालक्रीडां रचयति मुहुर्यत्र तत्रानुरागः ॥ ११ ॥
आस्तां मध्ये तरणितनया भीषणा भूरिनक्रै-
रावर्ताद्यैर्नयनभयदैस्तां तरिष्यस्यवश्यम् ।
संसाराब्धिं तरति सहसा यत्क्षणं चिन्तयित्वा
तस्यासाध्यं भवति किमहो ! पारयानं तटिन्याः ॥ १२ ॥
दृष्ट्वैव त्वां विदितमधुना पूर्ववत् पद्मनाभं
प्राप्यावश्यं विरहजलधेः पारमासादयिष्ये ।

मोदिष्ये च चणमपि हरे राधचन्द्रामृतेन
प्राप्तप्राणा सुरभिकुसुमामोदिते मञ्जुकुञ्जे ॥ १३ ॥

सम्पर्कात्ते तरणितनयातीरसोपानवृन्दं
राज्ञः पन्थास्तलमपि तरोराचितं पद्मरागैः।
शोभां यास्यत्यचिरमतुलां स्वीयकार्यानुरोधाद्
उन्नैरेतैर्मुहुरपि सखे! तत्र न स्थेयमेव ॥ १४ ॥

ये वीचन्ते सततमधुना श्रीपतेरङ्घ्रिपद्मं
मञ्जीराद्यैः कनककलितैर्भूषणैर्भूषितञ्च।
तेषां च त्वं किमु न भविता लोचनप्रीतिहेतु-
र्व्यक्तैरेतैः कुलिशकमलस्यन्दनाङ्कादिचिह्नैः ॥ १५ ॥

यस्यासङ्गादलभत तनुं मानुषीं गौतमस्त्री
ध्यानेनैव प्रथितमहिमा श्रीपतिं नारदादिः।
तस्माज्जाते त्वयि मधुरिपोरङ्घ्रिपद्माद्विचित्रः
किं दीनानामुपरि करुणालिङ्गितो दृष्टिपातः ॥ १६ ॥

एकं चिह्नं हरिपदभवं पन्नगस्योत्तमाङ्गे
तादृक् शोभामपि खगपतेर्निर्भयत्वं चकार।
पिण्डेनान्यत्तरणिरभवद् घोरसंसारसिन्धौ
ध्यातं तादृक् त्वमपि महतां जन्म विश्वोपकृत्यै ॥ १७ ॥

उत्फुल्लानामतिसुरभयः सौरभैरम्बुजानाम्
अम्भोलेशैस्तरणिदुहितुः शीतलैः शीतलाश्च।
अध्यावश्यं सततगतयः स्वैरमाधूतवह्नी
वर्तिष्यन्ते भवदभिमतप्रीतये लाघनाय ॥ १८ ॥

त्यक्तव्येयं चिरपरिचिता जन्मभूमीति बुद्ध्या
मा खिद्यस्व त्रिभुवनजनत्राणहेतो ! क्षमाङ्क ! ।
किं न त्याज्यं भवति महतां चेत् परस्योपकारो
वाराणस्या मुनिरपि गतो दक्षिणाशामगस्त्यः ॥ १९ ॥
कर्पूराद्यैः सलिलमभवत् वैतरण्यम्बुतुल्यं
वाक्यागम्यं नदति कठिनं कोकिलः षट्पदोऽपि ।
वृन्दारण्ये किरति गरलं दुःसहं शीतरश्मि-
र्नैतद् वाच्यं सकृदपि सखे ! सन्निधौ केशवस्य ॥ २० ॥
प्रस्थानं ते कुलिशकलनान्निश्चितं पश्चिताशे-
श्चित्तेऽस्माकं तदपि रमते याहि याहीति वाणी ।
अप्रामाण्यं जनयति सदा नन्दसूनोर्वियोगो
व्याप्यध्वानाद् व्रजकुलभुवां व्यापकस्यापि सिद्धौ ॥ २१ ॥
उक्तप्रायं तरणितनयानागयोस्तत्कथायाम्
आस्ते को वा जगति भवतां भीतिहेतुः क्षमाङ्क ! ।
किञ्च स्वान्ते क्षणमपि भवत्सङ्गमे याति दूरं
भीतिर्मृत्योरपि किमशनिं लोकरीत्या दधासि ॥ २२ ॥
येनारूढं विषधरशिरो भूरि वक्तव्यमन्यत्
किं वाकारि स्तनगिरिवरारोहणं च श्रुतञ्च ।
उत्पन्नस्य प्रियतमपदात् तेन भीतिस्तवास्ते
को वा ब्रूयादिति हि सदृशं कारणेनैव कार्य्यम् ॥ २३ ॥
ज्ञातं ज्ञातं कुलिशसदृशं चिह्नमेतन्न वज्रं
नो चेदेवं जनयति कथं लोचनप्रीतिधाराम् ।

दूरस्थश्च ग्लपयति मनो निस्वनो यस्य तस्मा-
न्नेत्रप्रीतिप्रदमिति वचो न श्रुतं क्वापि केन ॥ २४ ॥
आस्ते चैवं नवजलधरो यं विलोक्य प्रमोदान्
नृत्यन्त्युच्चैर्विषधरभुजो निस्वनोऽप्यस्य भीमः।
मिथ्यैवायं यदवधि मया वीचितस्तादृशोऽयं
कन्दर्पो मां तदवधि दहत्येव बाणैरसह्यैः ॥ २५ ॥
क्रोशस्यान्ते चरणयुगलं चालयन् सूरजायां
यायाः किञ्च चणमपि तरोर्मूलमासाद्य तिष्ठेः।
उत्कृष्टं यज्जनयति पदं सेवकानां जनानां
पद्मश्रीं हीनं तदिति जगतां प्रत्ययः कूर्मलोम ॥ २६ ॥
आरुह्यास्मत्हृदयमथवा गच्छ तुङ्गं तुरङ्गं
सौरं तेजः सजलजलदच्छायया वारणीयम्।
वृष्टिं नैव त्वदुपरि करिष्यत्ययं चण्डरश्मिः
खेदाशङ्की सरसिजसखस्त्वद्धृताम्भोरुहस्य ॥ २७ ॥
एतेन स्यान्मधुपुरगतिः केन मे पङ्किलोऽभूत्
पन्था नन्दव्रजकुलभुवां लोचनाम्भोभिरुच्चैः।
नो वा शुष्को हरिविरहजोत्तापितोऽपीन्दुवक्त्रे
नित्योत्पत्तेर्नयनपयसां वाक्यमेतन्निरस्तम् ॥ २८ ॥
अङ्गैस्ताभिस्तरणितनया पीनतां नैव लब्धा
गोपीभर्तुर्विरहदहनैः प्रत्युत चीणतां च।
नोचेदेवं सलिलतरसा गोकुले मास्तु किन्तु
प्रस्थानं ते किल मधुपुरे निर्विरोधं क्रमाङ्क !॥ २९ ॥

क्षीणैवास्ते तरणितनया वस्तुतस्त्वद्वियोगे
का वा पीना भवति वचनं कस्यचिन्नेति युक्तम्।
गोपस्त्रीणां नयनसलिलैर्वर्द्धते सा विशीर्णा
अन्ये नन्दव्रजपुरजना नूनमत्यर्थकं यत्॥ ३० ॥
सामग्री चेन्न फलविरहो व्याप्तिरवेति तत्त्वं
तत्त्वं गोपीनयनसलिले केवलेऽप्यस्ति मैवम्।
उत्कण्ठायां हृदि न कुरुते कारणानां सहस्रं
लक्षं वापि क्षणमपि यतः पीवरत्वं जनानाम्॥ ३१ ॥
तस्मात्तस्या विरतिरथवा हेतुरन्यादृशोऽस्या
न स्यादेव क्वचिदपि फलं कारणासन्निधाने।
नष्टे हेतौ प्रभवति कुतः कार्य्यमित्यप्ययुक्तं
यागेऽपूर्वादिव जनकताद्वारतस्तस्य सिद्धा॥ ३२ ॥
क्लेशोऽस्माकं मलयपवनैर्मूर्च्छया चोपकार-
स्तस्मात् सर्वं किल विधिकृतं कारणं कारणं न।
अम्भोजानाममृतकिरणज्योतिषा म्लानिरुच्चै-
रुग्रज्योतिः किरणमिलनाज्जायते च प्रकाशः॥ ॥ ३३ ॥
स्त्रीभिः प्रेम प्रियतमकृतं नैव शक्यं विहातुं
यातेऽतस्त्वां किल मधुपुरीं चंक्रमाय क्रमाङ्क।
दग्धेनापि व्यथितहृदया पञ्चबाणेन बाणैः
क्रूरैरुग्रैर्मदनरमणी तत्कृते रोदिति स्म॥ ३४ ॥
आस्ते चित्ते किल कलयितुं वासना शम्बरारे-
रेकैकेन व्रजकुलवधूप्राणमेकैकमङ्क।

बाणेनातः सततमतनुर्जातकोपाहितुल्यैः
क्रूरैरस्मान् दहति कुसुमैः शायकैः पञ्चसंख्यैः ॥ ३५ ॥
यल्लोकानामपकृतिभयात् कालकूटोऽपि पीत-
स्तानेवायं दहति गरलैस्तादृशैराचितेन ।
बाणेनेति त्रिपुररिपुणा जातकोपेन दग्धो
नैवोत्थे न प्रबलशिखिना निर्दयं शम्बरारिः ॥ ३६ ॥
नैवं न्यूनः स गरजभरः शम्बरारेः शरस्य
ब्रह्मादीनामयमपि यतो धैर्य्यविध्वंसहेतुः ।
एतद्वाक्यं गिरिशचरणैः खण्डितं मण्डिताश्चै-
रन्यासङ्गाद्व्यथितहृदयैर्निर्दयं दग्धकामैः ॥ ३७ ॥
उत्तापोऽयं मदनजनितो वर्द्धते नित्यमुच्चै-
र्वृन्दारण्ये वसतिरधुना केवलं दुःखहेतुः ।
किञ्चास्माकं नयनसलिलैर्वर्द्धिते चेन्नदीयं
केन स्थेयं द्रुतगतिजलैराचिते कुञ्जमध्ये ॥ ३८ ॥
यस्य ध्यानं जनयति सुखं यादृशं तादृशं न
स्वर्लोकादावपि किमपरं ब्रह्मसाक्षात्कृतौ च ।
श्रेयश्चैतन्मुनिवरमुखाम्भोजतः कीदृशी ते
बुद्धिस्तादृक् जनकविधये दर्शने नास्ति यत्नः ॥ ३९ ॥
वक्तव्यं यन्मदनजनितं दुःखमस्माकमेतद्
भूयोभूयः प्रियतमपदे गोपयित्वा स्वदेहम् ।
दृष्टे तेन त्वयि नयनयोर्निस्सुतप्रीतिहेतो
यास्यत्येव क्षणमपि मनस्तत्कथायां न तस्य ॥ ४० ॥

वक्तव्यं च स्फुटमिति यदा निर्जनस्थो मुकुन्दः
पश्चाद्वाक्यैरतिसुललितैरञ्चितं तत्पदाब्जैः ।
वृन्दारण्यं स्मरसि न कथं श्रीपते ! मञ्जुकुञ्जं
घ्रातं घ्रातं यदिह न परीरम्भणं कुब्जिकायाः ॥ ४१ ॥
आकाङ्क्षाया स्वपयति मनो मादृशां वासना सा
शाब्दे धर्मे सति न भविता हानिरेव क्रमाद्ध !
साकाङ्क्षोक्त्या मुरहरपदे सर्वमेतन्निवेद्यं
नोचेत्तस्य प्रमितिजनने केन हेतुस्तवोक्तिः ॥ ४२ ॥
आगन्तव्यं सरसिजदृशा बोधितेन त्वदुक्त्या
नाप्रत्यक्षं प्रमितिकरणं वाक्यमेतच्च युक्तम् ।
स्वीकर्तव्यं नयनविरहापत्तिभीत्येति सर्वै-
र्मानाभावात् दृशि न हि भवेन्मानमभ्यर्हितीयात् ॥ ४२ ॥
बौद्धस्यैतन्मतविटपिनो मूलमाच्छादितं स्यात्
सृष्टिस्तस्मादृतवचनतो यन्मया पूर्वमुक्तम् ।
यद्यस्माकं सततमतनोः शापकलुषदेहः
प्रामाण्ये स्यात् कुसुमविशिखोऽस्तीति वाक्ये न साक्षी ॥ ४४ ॥
मूर्खा एव क्षणिकमखिलं विश्वमाहुर्न धीराः
खेदोऽस्माकं हरिविरहजः सर्वदैवास्ति चित्ते ।
नान्यः शब्दो वचनमपि वक्तादृशं तस्य किन्तु
प्रेमैवाक्षत्प्रियतमकृतं तच्च गोपाङ्गनासु ॥ ४५ ॥
शाके शायकवेदषोडशमिते श्रीकृष्णशर्मार्पयन्
आनन्दप्रदनन्दनन्दनपदद्वन्द्वारविन्दं हृदि ।

चक्रे कृष्णपदाङ्कदूतरचनं विद्वन्मनोरञ्जनं
श्रीलश्रीयुतरामजीवनमहाराजाधिराजादृतः॥ ४६ ॥

इति महामहोपाध्याय श्रीकृष्णसार्वभौम विरचितं
पदाङ्कदूतकाव्यं समाप्तम्।

---

## उद्धवदूतः।

---

गोपीवक्षोरनवधिकृपादाक्ष्यदाक्षिण्यसिन्धो-
रादेशेन प्रणयपटुना प्रापितं गोकुलाय।
गोधुग्वृन्दव्यसनविसरालोकदुःस्थं रहस्थं
मध्ये कृत्य प्रियसहचरीमुद्धवं काचिदूचे॥ १ ॥

कस्त्वं साधो! कुवलयदलश्यामविस्तीर्णदृष्टे!
दृष्टे सद्यो भवति भवति स्निग्धमत्यन्तमन्तः।
किंवा प्रश्नैरहह! मथुरानाथभुक्तं तदेतत्
यत्ते मौलौ कनककपिशं सौरभोद्गारि वासः॥ २ ॥

तत् त्वं तत्त्वं मधुपुरपतेर्लब्धलोभ्यप्रसाद-
स्तद्विस्रम्भस्थलमतिमहन्नेह सन्देहलेशः।
वक्षस्येतन्मम च किमिदं कथ्यते दृश्यते वा
जातं यस्मादखिलमधुना हन्त! हास्यास्पदं नः॥ ३ ॥

प्रस्थानं ते भवतु भगवन्न वाप्यन्यतो वा
गम्भीरत्वं भजतु स भवानित्यमुत्तानतां वा।

यद्वा तद्वा भवतु विधिना वञ्चितेयं वराकी
यत्ते विस्मापयति निमिषं पातनीयोऽत्र कर्णः ॥ ४ ॥

सैषा योषित् प्रकृतिचपला पामरी कातरा च
ज्यायान् यातो यदुकुलपतेर्वल्लभत्वं क्व च त्वम् ।
विज्ञप्तो मे तदपि भवता भव्य ! नोदासितव्यं
सानुक्रोशं वहति हि मनो दुर्गते दुर्जनोऽपि ॥ ॥ ५ ॥

त्वं कल्याणी ननु कुलवधूः सार्धमन्येन पुंसा
संलापस्ते सपदि समुदाचारसेतुं भिनत्ति ।
जल्पन्नेवं नहि जहि घनश्यामदास्योऽस्मदानां
लोकातीतं किमपि चरितं केन नालोकितं नः ॥ ६ ॥

अभ्रश्यामं स्मरसि न मनागित्थमुद्भाषिणीनां
प्राणत्राणप्रवणमनसो गोदुहो गेहिनीनाम् ।
एताः शश्वत्कुसुमशयने शाययित्वा सखीव
मन्दं मन्दं सरसबिसिनीपल्लवैर्वीजयन्ति ॥ ७ ॥

सिंहव्याघ्रप्रभृतिभिरपि प्रेक्ष्यमाणाः प्रबाष्पै-
राक्रन्दैषु प्रखरकुररीसंसदं शिक्षयन्त्यः ।
एकाकिन्यस्तरणितिमिरास्तत्पदस्पर्शपुण्ये
वृन्दारण्ये कति युवतयो यामिनीर्यापयन्ति ॥ ८ ॥

पश्यन्नक्षिद्वयमविरलस्यन्दमानाश्रुधारा
क्लिन्नाभोगं मम च किमभूर्लज्जितो विस्मयेन ।
गोगोपानां विरमतु कथा नेह भीरस्ति गत्वा
शारङ्गाणामपि वनजुषां पश्य कौटुम्बमद्धि ॥ ९ ॥

राधे ! मन्युं परिहर हरिः पादमूले तवायं
जातं दैवादसदृशमिदं वारमेकं क्षमस्व ।
एतानाकर्णयसि नयवन् ! कुञ्जकीरानुवादान्
एभिः क्रूरैर्वयमविरतं वञ्चिता वञ्चिताः स्म ॥ १० ॥
त्वञ्चेद्दम्भैरिह विमुखतामत्र याले तमाले
प्राणान्मोच्ये वनलतिकया कण्ठमुद्बध्य सद्यः ।
आतङ्को वा क इह भवतां सेवकास्तस्य यूयं
यस्योद्देश्यं न खलु किमपि स्त्रीवधादन्यदस्ति ॥ ११ ॥
पीतप्राणा प्रथममनुना पूतना स्तन्यदात्री
दिष्टस्यान्तं कति न गमिता वेणुगीतेन गोप्यः ।
तस्य प्रीत्या जगति विदितं यत् कृतं यन्नपत्रा
स्वातन्त्र्येण प्रविशति मनस्तत्र तत् किं करोमि ॥ १२ ॥
अश्रुस्निग्धं नयनयुगलं रूढरोमाञ्चराजि
प्रत्यङ्गं ते तदलमनया देव दुःशङ्कया नः ।
एतद्दीनोद्धरणपटवे तुभ्यमभ्यर्थनीयं
मत्सन्दिष्टं मुदिर महसि प्रेयसि प्रापयेति ॥ १३ ॥
नन्दो न त्वां त्यजति निमिषं नापि देवी यशोदा
श्रीदामाद्या अपि न शिशवो नापि पौराः सदाराः ।
स त्वं लब्धो रहसि च मया केनचिन्नापि दृष्ट-
स्तन्निर्णीतं किमपि सुकृतं शिष्टमस्माकमस्ति ॥ १४ ॥
द्वित्रानत्रावससि दिवसानास्पदं घोषभर्त्तु-
स्तेनाशङ्के पुरमिदमसि प्रेषितो माधवेन ।

एतद्बीजं किमपि बहुधा मद्विधा भावयन्त्य-
स्तस्यानत्वं किमपि न पुनः कृत्यमालोकयन्ति ॥ १५ ॥

तेन प्राप्तौ सपदि जनकौ पोषकाभ्यां किमाभ्यां
किं गोरक्षैः सखिभिरधुना राजपुत्राः सखायः।
तस्य द्वारे कति करटिनस्तर्णकादेः क चिन्ता
हन्ताभीरीः स्मरतु स कथं संवृतो नागरीभिः ॥ १६ ॥

आस्तामेतन्मम किमनया कूटकृत्यानुवृत्त्या
सारं फल्गु प्रियमथ परं पथ्यमन्यादृशं वा
धर्माधीनैरिति मम वचः पुण्डरीकाक्षसाक्षाद्
आख्यातव्यं यदनुकरणे कुत्रचिन्नैव दोषः ॥ १७ ॥

विख्यातोऽभूद्दिनकतिपयं नन्दसूनुर्यशोदा-
नेत्रानन्दो व्रजजनपतिर्वल्लभो वल्लवीनाम्।
अद्य ख्यातो मधुपुरपतिर्माधवीप्राणनाथः
सूनुः शौरेरगणितगुणो देवकीनन्दनोऽसि ॥ १८ ॥

गोपीषूड्ष्विव तव समो भोगकालः कलानां
भर्तुः कर्तुर्निखिलनयनानन्द इन्दोरिवासीत्।
तासां मध्ये तदपि रमणी रोहिणीव प्रसिद्धा
सा त्वां नत्वा रहसि परमाकिञ्चना किञ्चिदाह ॥१९ ॥

इत्यतत्त्यैरुपधिभिरपि स्निग्धसम्बोधनं ते
जायेतारुन्तुदमुदयिनी रीतिरन्याद्य यद्वः।
प्राक्संस्कारास्तदपि यदि मां तेऽनुबध्नन्ति दोषः
क्षन्तव्योऽयं भवतु भवता वाचिकप्रक्रियासु ॥ २० ॥

वाक्चातुर्यं त्वयि बत वृथा सन्ततान्तर्व्वरेण
ज्ञातं चेतश्चरितमखिलं मन्मथेन त्वया च ।
विज्ञप्तिर्मे तदपि मथुरानाथ ! नेयं विरुद्धा
सन्तापादेर्व्वचसि विदितं मौनरत्नं न दोषः ॥ २१ ॥
गोरक्षत्वं समजनि यदा तावकीनं तदैव
स्वच्छन्दत्वं तव तिरयितुं नाथ ! माभूम शक्ताः ।
वश्यः कस्य त्वमथ जगतामीशिता किन्तु वाचा-
माविष्कारैरदय ! हृदयग्रन्थिमुद्घाटयामि ॥ २२ ॥
किन्ते जन्मान्तरमुपगतं पारसञ्चारकाले
धौतं नद्याः किमिदमथवा कार्मणी माथुरीणाम् ।
विस्मार्य्यं यदिह न तनौ यत्र बन्धः पयोर-
प्यत्र प्रेम्णि क्षणकतिपयैर्नाथ ! निर्लेपकोऽसि ॥ २३ ॥
कर्त्ता कृष्णो नियतमधुना गोकुलं राजधानी-
बन्धुभ्योऽपि प्रगुणममुना गोदुहो माननीयाः ।
काचिद् गोपी भवति महिषीत्युक्तमग्रे नवा कै-
स्त्वद्वैदग्ध्येन तु पितृवनप्रेतवत् कारिताः स्म ॥ २४ ॥
नीते नाम्न्यपि च भवतः प्रस्नुवाना स्तनाभ्यां
बिभ्रत्यङ्गैःपुलकिनि भवद्वेणुवेत्रप्रतोदान् ।
सोरस्ताड़ं न वहतु तवाक्रन्दमम्बा कथं वा
यस्मादद्य प्रशमितपरो राजराजेश्वरोऽसि ॥ २५ ॥
तैरुत्साहैः क्व खलु चलितं कुत्र ते नर्म्मवादाः
कण्ठो भग्नः करुणकरुणैस्तात कृष्णेति शब्दैः ।

पर्वस्वन्त: किमपि विरुजन्नाममात्रानुकारी
विच्छेदस्ते तमपि कृतवान् नन्दमस्मन्दमेव ॥ २६ ॥
दोहः प्रायो न भवति गवां दोहनं चेन्न पाकः
क्षीराणां स्यात् स भवति यदा दुर्लभं तद्दधित्वम्।
दध्नः सिद्धौ क्व खलु मथनं मन्थने क्वोपयोग-
स्तक्रादीनामिति गतिरभूदद्य गोधुग्गृहेषु ॥ २७ ॥
तन्न क्षोणीखुरविलिखनं वप्रभङ्गो न शृङ्गै-
र्नैवास्पर्द्धी नवजलमुचां घोरहम्बानिनादः।
कामोन्मादैरुदयति न वा सोपचर्या सपर्या
नामी वाहा मधुपुरपथादन्यदालोकयन्ति ॥ २८ ॥
वत्सालोकस्मरणसुलभप्रस्नवप्लावनीयं
धूलीजालं नयनसलिलैरध्वसु प्लावयन्त्यः।
त्वामन्विष्य व्रजपुरसरित्तीरभूषु भ्रमन्त्यः
सद्योजातामपि सुरभयो नार्भकान् पाययन्ति ॥ २९ ॥
निःप्रेमाणो ललितयवसश्यामसीमन्यरण्ये
न्यस्य न्यस्य त्वदनुसृतये चक्षुषी दिक्षु दिक्षु।
आजिघ्रन्ति व्यथितमनसः किञ्च सिञ्चन्ति वास्रैः
क्रीड़ानीपं तव यदुपते! वत्सला वत्सतर्यः ॥ ३० ॥
भास्वत्कन्याकमलविपिनं कर्णिकाशेषमेतद्
वृन्दारण्यद्रुमकिशलयाः पाण्डुपत्री भवन्ति।
शस्यैः पङ्कैः पिहितमभितस्त्वद्विलासानुकूलं
मूलं धत्ते स तव कमलाक्रान्त केलीकदम्बः ॥ ३१ ॥

ये वै गोवर्द्धनधर ! तव स्निग्धगम्भीरघोषैः
केकावाचः स्तिमितमयमास्तेनिरे ताण्डवानि ।
अद्य प्रावृड्घनघनघटागर्जितेऽपि प्रवृत्ते
भुग्नग्रीवाः किमपि न हि ते पुच्छमुल्लासयन्ति ॥ ३२ ॥
यस्य स्कन्धो मसृणसुरभिस्तावकैरङ्गसङ्गै-
र्यन्नास्माकं सिचयनिचयं चोरयन्नुत्थितोऽसि ।
यस्याधस्तात्तव चरणयोश्चक्रचिह्ना धरित्री
धन्यो नीपः समभवदसौ देव ! दोग्धुं द्रुमो नः ॥३३॥
पाण्डुच्छायाः कुसुमरजसा भृङ्गमालाजटालाः
संवीताङ्गाः किशलयरुचा पाटलेनाम्बरेण ।
भोगाभावादपगतरुजः पावनाभ्यासभाजः
सर्वे वृन्दावनविटपिनो योगिचर्य्यां चरन्ति ॥ ३४ ॥
शृङ्गस्वानप्रियसखसमाह्वानगोरच्चवीङ्काः
प्रत्याख्याय व्रजपुरपथस्योपकण्ठे विशिष्य ।
स्वगोतद्वास्थाः सहसुरभयस्तोककृष्णादयस्ते
सायं प्रातर्नगरसरणौ चोरवत् सञ्चरन्ति ॥ ३५ ॥
विस्मृत्य त्वन्मधुपुरगतिं वासरान्ते पुरान्तः
श्रीदामाद्यौ विशति विशती हस्तविन्यस्तवीना ।
वत्स क्वासि क्व च मम सुतेत्युन्मदेव भ्रमन्ती
त्वामप्राप्य व्रजपतिवधूः क्रन्दयत्यश्मनोऽपि ॥ ३६ ॥
वीतासङ्गाः शयनवसनस्नानपानाशनादौ
गायन्तस्त्वच्चरितगुणिताः सन्ततं गीतगाथाः ।

औदासीन्यं किमपि सकला बन्धुवृन्दे वहन्त्यो
गोप्यो लीलाक्षितिषु भवतो योगिनीवत् भ्रमन्ति ॥३७॥
स्वार्थं नैतत् समुचिततया वच्मि कर्मातितीव्रं
सह्यं यस्मिन्नजनि समये नाथ ! यातः स कालः ।
अद्य त्वस्यास्त्रिभुवनवशीकारमाधुर्यधूर्यैं
त्वच्चातुर्यैं न भवति यथा लाञ्छनं तद्विदध्याः ॥ ३८ ॥
एकैकाभिर्विहितमसकृत् तत्तवेहानुगत्यं
यस्मै कस्मिन्नपि गणयति श्रीतमात्मानमन्यः ।
धिग्वैदग्ध्यं तव तदिह ताः सिन्धुपारे विहाय
स्वैरी वैरी परमकृप यन्निर्भरं निर्वृतोऽसि ॥ ३९ ॥
कूलक्रोडे तपनदुहितुः श्यानपङ्के निमग्नं
यत्नादुत्थापितमथ कृतोपस्क्रियं कौशलेन ।
न्यस्तं पीठे तव चरणयोश्चक्रचिह्नं पदं तत्
शालग्रामोपलमिव सदा मद्विधाः पूजयन्ति ॥ ४० ॥
युक्त्वा सर्वात्मनि मयि मनः सच्चिदानन्दरूपे
चेतस्तापं जहित न हितः कश्चिदेवाङ्गसङ्गः ।
इत्युद्दिश्यान् कथयसि वृथा मादृशां बालिशानाम्
एते हि त्वद्विरहशिखिनः सामिधेनीं भजन्ति ॥ ४१ ॥
वेशे वाम्यं तदपि मुदिरश्याम सावर्ण्यतस्ते
मुग्धा हस्ते मरकतमयी कङ्कणश्रेणिरीदृक् ।
अङ्गालेपो मृगमदरसैः स्निग्धनीलं दुकूलं
सर्वाङ्गीनं व्रजपुरजुषामङ्गनानामिदानीम् ॥ ४२ ॥

साक्षाद्दीक्षां घटयति घनश्याम यत्ते कुतस्तत्
तल्लावण्यं कथय कृतिना केन चित्रेण लेख्यम् ।
अक्रूरस्यागमनदिवसान्निद्रया नाथ नष्टं
कुत्र स्वप्नः शिव शिव दृशौ बाष्पवृष्ट्यै परं नः ॥ ४३ ॥
दत्तस्वप्नो भवसि यदि मे दर्शनीयः कदाचिद्
बर्हापीडं मधुरमुरलीधाम तद्धाम दध्याः ।
अस्मादन्यद् यदि वितनुषे दीयते दिव्यमुग्रं
पादस्पर्शः पुरमृगदृशां दुर्लभस्तत्तव स्यात् ॥ ४४ ॥
मद्भावेन स्थिरमथ चरं भावयन्त्यो भवत्यः
सन्तुष्यन्तु त्वमिति बहुधा सत्यमस्मानवादीः ।
आख्यातव्यं किमिह भवतः किञ्चिदूनो नवासौ
नैवास्माकं मदयति मनो नाम नीलाम्बरोऽपि ॥ ४५ ॥
व्यक्तीभूतः स्वयमयमसि श्लाघनीयः समृद्धा
ऋज्वीषु त्वं कथमिह परीतोषमस्मासु यायाः ।
तत्तद्वन्धुप्रकरपुरतस्तत्र कापि त्रिवक्रा
धृत्वा यत्त्वामधिनिवसनं नाथ निश्चीचकार ॥ ४६ ॥
गव्यस्तेनः प्रथममुदभूर्वत्सपालश्च पश्चात्
तत्रेदानीं तदनु तदनु छिद्रनौकर्णधारः ।
लुण्ठाकोऽभूरथ कुलबधूजातिजीवार्थसार्थे
धिग्धातारं भवति निहितो येन भूचक्रभारः ॥ ४७ ॥
भक्तिप्रीतिप्रणयसहितं मानदम्भाद्यपेतं
चेतोऽस्माकं गुणवदगुणं गोदुहां देहमेतत् ।

विक्रीतं ते युगपदुभयं स्वीकृतञ्च त्वयार्थी
हृद्गृह्णासि त्यजसि च वपुर्नाथ कोऽयं विचारः ॥ ४८ ॥

यत्राधर्मः प्रभवतितरां यत्र भूयाननर्थो
यत्राकामः सपरमुदयो यत्र ते नास्ति मोक्षः ।
त्यागे तस्मिन्नपि परिजने गोचरे यत् त्वमर्थी
तस्मादर्थी भवति विदुषां पौरुषव्यत्ययेऽपि ॥ ४९ ॥

शैलोद्धर्ता दमितभुजगः पीतदावाग्निचक्रो
मात्यन्नागायुतबलगजाधीशभोजेन्द्रहन्ता ।
स त्वं दोषेऽप्यसति कुरुषे किङ्करीणामभद्रं
वक्तुं नास्ते जन इति न भोः कर्तुमेवं युनक्ति ॥ ५० ॥

लोकातीतं य इह कुरुते कर्म किं धर्मधारा
तेन त्याज्या किमिह विहितं श्रीमता राघवेण ।
त्यक्ता सीता तदपि सुचिरं सैव क्षमा प्रियाभूत्
त्यक्ता यस्मिन्नहनि तु वयं तत्र कुमारतोऽसि ॥ ५१ ॥

व्यावर्तध्वं स्वभवनमितः कुत्र रे यात मुग्धा
ऋज्वीरद्य स्मरतु स कथं वल्लभः कुब्जिकायाः ।
संभूय त्वच्चरणकमलस्पर्शलोभेन यान्ती-
रित्थं गोपीः पथि पथि बलादध्वगा अप्यरुन्धन् ॥ ५२ ॥

पीयूषात्मा तव कुलगुरुर्जन्मदातावदातो
माता याभूद्दियमपि जगत्पावनीति प्रसिद्धम् ।
एकैकन्ते जयति जगदानन्दि चित्रं चरित्रं
कस्मादेवं विरहदहने देव दासीर्जुहोषि ॥ ५३ ॥

स्वामी वामी भवति यदि तत्सन्निधौ सञ्चरिष्णुः
पथ्यं प्रत्याययति समयः सोऽयमौशानयानाम् ।
लोकद्दिष्टं किमपि भवते कुर्वते युक्तवादी
साधुस्तस्मिन किमु मथुरामण्डले कश्चिदस्ति ॥ ५४ ॥
येनागत्य त्वमपि मथुरां यानमारोप्य नीतो
यस्याविष्टस्तव चरणयोश्चक्रचिह्ने लुलोठ ।
अस्माकं त्वद्गमनसमये सा दशा येन दृष्टा
सोऽपि स्वामिन् ! किमपि करुणाकातरो न ब्रवीति ॥५५॥
अस्मन्मर्मच्छिदुरमकरोत् कृत्यमत्युत्कटं यत्
कंसस्तेन त्रिभिरपि दिनैस्तत्फलं साधु लेभे ।
त्वामुत्थाप्य त्वरिततुरगं येन यानं वितेने
किञ्चित्तस्य प्रभुवर कुतः श्रूयते नाधुनापि ॥ ५६ ॥
[illegible]विमलत्वेन संक्रान्तसर्वं
प्रत्यक्षस्य व्यवधिबहुलं विश्वरूपप्रकाशि ।
आन्ध्यं जन्मावधि जनयताशेषलोकैकरत्नं
हा हा तेन त्वमपि मुषितं तारकं चक्षुषोर्नः ॥ ५७ ॥
सूक्ष्मं सूक्ष्मादपि च कलयन्नन्धवच्चेष्टते यो
नान्ध्यं तस्मात्तिरयति रसैरश्विनीनन्दनोऽपि ।
विख्यातः स त्वमपि रचयन्नेवमङ्ग व्यवस्थां
वक्षीकार्यः कथमिव वृथा किं परं दूषयामि ॥ ५८ ॥
तत्ते चित्तं शरणमपि नः सर्वतो भद्ररूपं
व्यावृत्यास्मान् वसति बलवन्नागरीवृन्दमत्र ।

वैदग्ध्यं ते किमिदमधुना तद्दहिर्वीथिकान्ते
रासोरासोत्सवनट विभो दुर्लभो यस्ममापि ॥ ५९ ॥
किं नो वृष्ट्या न किमशनिभिर्भूभृता वाहताः स्म
किं न प्लुष्टा दवहुतवहैर्दंशिताः किं न सर्पैः ।
प्रेम प्रौढं किमपि जनयन् नव्यलोकांश्च मुञ्चन्
अस्वन्नेवं कथमपयशो घोरमङ्गीकरोषि ॥ ६० ॥
अस्मत्प्राणास्तवपदनखच्छायनीराजनाय
त्वं यातोऽभूः सपदि यदि ते यान्ति को वा विषादः ।
एकं किन्तु व्यथयति मनश्छद्मना किङ्करीणां
प्राणान्निन्ये यदुपतिरिति त्वद्गता किं वदन्ती ॥ ६१ ॥
सङ्कोचो यस्तव गुरुजने यश्च पौराङ्गनासु
व्यक्तीभूतं तदुभयमभूत् कुब्जिकोपग्रहेण ।
अस्मानेव क्षिपसि सहसा देव दूराद्दवीयः
कर्तुं यः पारयति स कृती किं करोत्येवमेव ॥ ६२ ॥
एतस्मादप्यधिकमधिकं यत्तदस्मासु कुर्या
न स्वप्नेऽपि त्वयि विसदृशं चिन्तयत्येतदन्तः ।
दन्ते कृत्वा तृणमिति महासभ्यमभ्यर्थयामि
स्वामिन्नेवं नहि मधुपुरीं क्षीणमध्यां विदध्याः ॥ ६३ ॥
द्रोणीरादौ मलयजयुताः शोचिताः सञ्चिनुध्वं
वापीर्निम्नीकुरुत शतशो नालशैवालपूर्णाः ।
सख्यं सख्यो यदि यदुपतौ याति तोयं तदेति
प्रेष्ठो वश्यो मिलति यदि तन्माथुरीर्वन्दयिष्ये ॥ ६४ ॥

सौभाग्येन व्रजकुलवधूसार्थसीमन्तरत्नं
या कंसारेरतिगुणवती स्कन्धमप्याररोह ।
सेयं राधा किमिदमिति मामुद्दिशन्तोऽङ्गुलीभिः
शोकानम्रक्षपितनयनाः शाखिनो रोदयन्ति ॥ ६५ ॥
यो विद्यायां तपसि भवतो ज्येष्ठएवादिदेवो
मायच्छायाविभव भवता वञ्चितः सोऽपि दृष्टः ।
या त्वामब्धा शरणमविशद्दञ्चकस्यापि तस्या-
स्त्वामुद्दामा कथय न कथं लोकलज्जा रुणद्धि ॥ ६६ ॥
आदावेव प्रणयसुखकारं कृष्ण कल्यात्लभोग्य-
क्लेशारम्भि त्वयि मम महत् पातकं प्रेम मन्ये ।
प्रायश्चित्तं भवति नच मे दुर्गताया विधेयं
तेनैव त्वामहमविरतं सानुतापा स्मरामि ॥ ६७ ॥
मातुर्नापि स्मरणमियता लङ्घितं लौकिकं ते
धर्माधीनो यदसि तदपि व्यक्तमेतावतैव ।
किन्तु ब्रूते तव रसिकतां निग्रहः कामिनीनां
को जानीते कितव ! भवतः कुत्र तात्पर्यमस्ति ॥ ६८ ॥
तत्त्वज्ञानं कथय शतधा प्रेषय प्रेषलत्वं
विस्तारत्वं वितर कुरु वा सानुतापप्रसङ्गान् ।
यावद्दोर्भ्यां तव नवघनश्यामलं धाम गाढं
नाश्लिष्यामि त्रुटति नहि मे तावदेवैष तापः ॥ ६९ ॥
लक्ष्मीकान्तं कतिचन चिदानन्दमन्ये विदुस्त्वां
मायाकारं कतिचिदपरे साधकाः सिद्धिमाहुः ।

योवाऽन्योवा भव नवघनश्याम तस्यैव धाम्नो
दासीभूता वयमिति परे बन्ध्यकल्पा विकल्पाः ॥ ७० ॥
नायासि त्वं नच नयसि मामात्मनः पादमूलं
नो वा दूतं विसृजसि नवा लेखलेशं ददासि ।
निश्वासाग्निर्निपतति न ते काचिदाश्वासवार्त्ता
कस्मिन्नास्थामुपहितवती जीवितं धारयामि ॥ ७१ ॥
यत् पूर्वेद्युर्गमनदिवसाम्मानभङ्गाभिलाषी
लज्जालोकान्त त्वमपि पतितः पादमूले ममासीः ।
स्पृष्टोऽङ्घ्र्या तदपि न मया नापि नेत्रान्तपीतः
चित्ते शल्यं सविषमिव तन्मामके लग्नमस्ति ॥ ७२ ॥
को जानाति त्वदपहरणक्रूरमक्रूरमात्तं
कः प्रत्येति त्वमपि सहसा गोकुलं त्यक्ष्यसीति ।
त्यक्त्वा नायास्यसि पुनरिदं नाथ ! केनाप्युमेवं
मद्दैवान्यहह सुमहादुर्घटं साधयन्ति ॥ ७३ ॥
भूयस्त्वञ्चेन्मिलसि महिलासम्प्रदायं विहाय
द्वाभ्यां दृग्भ्यां युगपदपि तद्रूपमादौ ग्रहीष्ये ।
आश्लिष्य त्वामहह ! तदनु स्पन्दसम्बन्धहीना
कल्पक्रूरामपि निमिषतां यामिनीं यापयिष्ये ॥ ७४ ॥
यात्राकाले कथमपि चलत्मन्दपत्नीकराज-
न्यस्तन्यस्तेन च सुरुचिरं रोचनाचित्रकेण ।
आशीर्दूर्वाक्षतचितमनुस्मर्यमाणं मुखं ते
सर्वक्लेशापहमपि जगन्नाथ ! मर्म च्छिनत्ति ॥ ७५ ॥

न स्मर्तव्यस्तदयमदयः कर्हिचिद्बर्हचूडो
निश्चित्येति स्पृहयति मनो यावदर्थान्तराय ।
किं ते वैरं विहितमव रे कृष्ण कृष्णेतिवान्त-
र्धारावाहिस्मरणपदवीं गाहसे तावदेव ॥ ७६ ॥
गुञ्जाहारं कतिचन तदा पत्रशृङ्गाणि केचित्
केचिद्बर्हस्तवकमपरे वेत्रमन्ये प्रतोदम्
वंशीं काचित् त्वदधरसुधासारसौरभ्यरम्यां
निन्युर्धन्या निजमविदुषी दीर्घमायुर्गतास्मि ॥ ७७ ॥
आयास्यामि स्वयमिति पुरः प्रस्थितौ यत् त्वयोक्तं
मय्येवास्तु प्लुतमिव तदा नाथ ! निःक्षिप्तमक्षि ।
आस्थामत्र प्रणिहितवती प्राणिमि प्राणबन्धो !
चिन्ताबन्धोऽभवदथ भवेः सत्यसन्धो न वेति ॥ ७८ ॥
सेयं सिन्धुर्विकचकमला काननं फुल्लमेतन्-
नीपस्थायं कुसुमनमितः श्रूयते भृङ्गगीतम् ।
स त्वं साहं स च रतिपतिः किं वदामः परन्ते
भावोभिन्नः सपदि विदधे सर्वमन्यादृगेव ॥ ७९ ॥
योषित्लक्षं रमय दमय द्वेषिणो दुर्विनीतान्
सम्राडेधि प्रणयसुमुखो बन्धुवृन्दं पुराणम् ।
क्लेशानेषा वहतु वहुशः कान्त ! किं तेन वार्तां
कल्याणीं ते भवतु मम तु श्रोतुमेवेदमायुः ॥ ८० ॥
यत्तन्मेऽस्तु त्वयि तु चरितं युक्तिवर्त्म व्यतीतं
सम्पश्यन्ती किमपि किमपि प्राणबन्धो ! बिभेमि ।

द्दीना याचे विधिमहमतस्त्वत्कृते मन्मयस्ते
यद्गर्गाया: किमपि निपुणे तद्वच: सत्यमस्तु ॥ ८१ ॥
आगः कस्मिन्नहनि न कृतं तिष्ठतापि त्वयेह
प्रस्थानेन प्रकटितमथो वीर! वैरं वरीय: ।
कश्चत्वं नो न जयितुमियानेव यत्नस्तवाभूद्
एतच्चेतस्त्वयि तु न गुणादन्यदङ्गीकरोति ॥ ८२ ॥
तुभ्यं दातुं विषमुपनता पूतनाद्यानि युक्तं
विश्लोभाधिष्वपि समुचितो निग्रह: पूरुषेषु ।
अज्ञा योषित् प्रकृतिकृपणानन्यवृत्तिश्च या ते
तन्नोभाथे किमपयशस: पातकाद्दान्यदस्ति ॥ ८३ ॥
संभोग्योऽभूद्दिनकतिपयं माट्टशीनामथ त्वं
माथुर्येश्वेद्दिनकतिपयं भुञ्जते सह्यमेतत् ।
अस्माभिर्यो भवदनुभव: सोऽपि सर्वात्मना यन्-
नि:संस्कार: समजनि मनो दग्धमेतावतैव ॥ ८४ ॥
तुल्याकारं समनु भवतोरत्र दु:खं सुखञ्च
क्रीड़ाकारी त्वमहमिति नो शब्दभेदोऽपि जात: ।
स त्वं योषित्कुलरतिगुरु: साहमेवं वराकी
सा किं नाहं त्वमसि न स किं नाथ! किं जातमेतत् ॥ ८५ ॥
धैर्य्यात् काचित् कतिचन सखीश्चिश्चया लज्जयान्या
भीत्या काचित् कतिचन रुषा काचिदालस्यतोऽपि ।
स्वाधीनेऽपि त्वयि रतिगुरौ केलिकुञ्जावलम्बि-
न्यस्वाध्याया: कति कति निशामाट्टशामत्र नासन् ॥ ८६ ॥

दूरं दूरादपि च विषमं कश्चिदेत्य प्रहारं
कुर्वन्नेकं पशुमिव जगन्नाथ ! किं नावधीर्माम् ।
वाटीसीमप्रसरणपटु श्रूयमाणैरजस्रं
किं दुःशीलप्रहरणशतैरङ्गमङ्गं लुनासि ॥ ८७ ॥
सोढव्यं ते सकलमधुना संभृतब्रह्मचर्य्या
राजर्षिस्त्वं कलयसि यदि स्वीयवंशानुरूपम् ।
लक्ष्म श्रोणिः पुरयुवतिषु श्रूयमाणा नवीना
किं कुर्य्याम स्पृशति हृदयं शासिता सर्वलेव ॥ ८८ ॥
यान्ति प्राणा न हि बहिरमी मुह्यमानाय गाढं
सत्यं गत्यन्तरमपि न मे किञ्चिदस्ति ग्रसत्याः ।
मग्नं चेतः कुलिशकठिने त्वय्यनुध्यायमेतत्
तेनैवाहं भवदनुगतिं संश्रिता किं करोमि ॥ ८९ ॥
किं नो दण्डप्रहरणजनीपश्चिमीपश्चरीत्या
स्फीतस्फीतां विरहविपदं साहयन्मामहासीः ।
दत्तो यस्यै न खलु निमिषो दृष्टिविघ्नोऽपि तस्यै
दूरस्थित्यै वितरसि विभो ! यौगपद्याद् युगानि ॥ ९० ॥
स्वामिन्नेकं वचसि भवतः स्वान्तविश्रान्तमन्यत्
कर्म्मण्यन्यन्मुहुरिदमभिव्यक्तमन्धोऽपि वेद ।
भूयोभूयस्तदपि मुषिता नाम गृह्णामि किं ते
तिष्ठत्यस्मिन् जगति यदि नो जीवनस्यावमन्यत् ॥ ९१ ॥
त्वत्सेवासु स्खलनमभवन्मादृशः कस्य किं वा
सेवाधर्मो गहन इति यन्नीतिनिष्ठाः पठन्ति ।

तेन त्यागः किमयमुचितो वच्मि सङ्कोचलीना
पान्थो यत्र त्वमसि रसिकैरोचितो नैष पन्थाः ॥ ९२ ॥

पाण्डुक्षामं वपुरिदममी कुन्तलाः क्लान्तभारा
वासोऽप्येवंविधमिति भिदा भिक्षुकीभिः कुतो नः ।
एषा क्लेशाः कति च मथुरा यामि चेदद्य किं त्वन्-
नेत्रद्वन्द्वं न भवति कति श्रीमुखालोकनाय ॥ ९३ ॥

कुब्जाद्वाराद्बहिरपि यदि प्राणनाथ ! प्रयासि
प्राणैः स्थेयं क्षणमपि तदा नैव मे सत्यमेतत् ।
भूयोभूयो विलुभितवती त्वामिति ध्वस्तलज्जा
दूराद्दूरं कथमतिचिरादाननं दर्शयिष्ये ॥ ९४ ॥

त्वञ्चेदानीं नगरतरुणीसार्थसर्वस्वभूत-
स्ता अप्येवं तव किमितरास्तुभ्यमद्य स्वदन्ते ।
अत्यौत्सुक्यात्तदपि भवतः सम्मुखी वा यदि स्यां
किं स्यादेतन्न खलु निपुणं भावयन्त्यप्यवैमि ॥ ९५ ॥

न स्यादस्या यदि मम तनोः प्रत्यभिज्ञेयता वा
स्यादेवाथ स्फुटमुभयथा मामकीनो विडम्बः ।
आद्ये नो न स्पृशति भवतो दृष्टिरौदास्यमुद्राम्
अन्यत्रापि प्रणयलघुता तादवस्थ्यं व्यनक्ति ॥ ९६ ॥

सांमुख्यं ते भवति यदि मे तद्गृहे वा बहिर्वा
सौजन्येन स्मरसि यदि तत् सा कथा दुर्लभैव ।
पूर्वावस्थास्मरणलघिमा दुर्निवारः सभायाम्
शुद्धान्ते चेच्चतुरतरुणीसार्थसौहार्दभङ्गः ॥ ९७ ॥

दूरादेव स्मिततरसुधासिच्यमानाधरौष्ठं
गण्डोद्यत्पुलककमलाकारविस्फारदृष्टि ।
एह्येहीति स्वयमवदतः प्रेयसः प्रार्थनं या
लेभे तस्यामनतिशयिनी माननैवापमृत्युः ॥९८ ॥
रूक्षा लोकाः कटुकुवचसः स्वालये सर्व एव
क्षीणासि त्वं कथमिति वहिर्ग्राम्यवाचो दहन्ति ।
ग्रामस्यान्ते तपनतनयाकूलमुद्यानमूलं
शून्यं लीलाशरणमपि ते कुत्र तन्निर्वृणोमि ॥ ९९ ॥
वैमुख्यन्ते किमपि मदनो माद्यति क्रूरकर्मा
नर्मालापेष्वपि कुवचनैर्बाधते बन्धुवर्गः ।
चेतो नाथ ! त्वयि विनिहितं वाचमुल्लंघ्य यासा
मासामुक्तिः स्मितकलुषिता कल्पते किं करोमि ॥१०० ॥
कुञ्जे कुञ्जे रतिरुपहिता धिक्कृतं धाम धौतं
मग्नं वेणोर्वचसि विहितो बन्धुवाचां विसर्गः ।
दृष्टः स्वामी कपिरिव क्षतः प्राणसारोऽसि जारो
हीनोपाया कथमहममूनद्य भूयो नियोक्ष्ये ॥ १०१ ॥
एते नित्यं नवपरिमलोद्गारिणः सन्तु कुञ्जाः
सन्तु क्लेशा न च मम तनोरत्र वीभत्सभावः ।
एतद्दृष्ट्वा रमयति हरिर्गूढमागत्य राधाम्
इत्यद्यापि व्रजयुवतयोमक्षमीर्ष्यां वहन्ति ॥ १०२ ॥
राधे राधे कथय कथय त्वय्यसौ नन्दनो मे
बाल्यादेव प्रभृति कुरुते वत्सलो हृत्प्रकाशम् ।

द्रष्टव्योऽसौ पुनरपि मया मन्यते कीदृशं वा
मानिन्यम्बा तव च रुदती पृच्छती दन्दहीति ॥ १०३ ॥
अत्रागच्छ त्वरितमथवा तिष्ठ तत्राब्दलक्षं
शृण्वन्त्वेते जनपदजना मुक्तकण्ठा ब्रवीमि।
यामि स्वर्गं निरयमथवा प्राणिमीह म्रिये वा
श्यामादन्यो नहि नहि नहि प्राणनाथो ममास्ते ॥१०४
राधाबन्धुर्लिखितपठितो बिभ्रतो यत्त्वमासीः
साहं साहंकृतिरुदभवं यत्तवातिप्रियेति।
लक्ष्मीकान्त! प्रणयसुधया सिञ्च वा मां नवा त्वम्
एतज्ज्ञातं ननु मम जनुर्धन्य एतावतैव ॥ १०५ ॥
यान्ति प्राणा मम यदि न ते प्रच्छनीयः पुरोधा
देया मह्यं किसलयरुचा पाणिनैव त्वयापः।
याचे तत्र व्यवधिकृतिनः चालनं चारनीरः
कर्तव्यं ते मधुपुरवधूपादलाचारसस्य ॥ १०६ ॥
सीदत्यङ्गं दलति हृदयं किं नु कुर्वन्ति हन्त!
प्राणाः श्यामाश्रय मम बधाभद्रभागी त्वमेव।
हा धिक् कीदृग् वदसि रसने! तत्त्वतो यत्तदास्तां
वन्दीभूय स्वयमिह मया मोचितः प्राणनाथः ॥ १०७ ॥
श्याम श्याम स्मर सहचरी मन्दकारी कृतं मे
केनाकस्माद् भ्रमति भुवनं मज्जति घोरवन्याम्
काहं क्वाहं क्व मम दयितः कुत्र तस्यैष दासो,
हा हा हा हा! हरि हरि हरि! चीणमध्य प्रसीद ॥१०८॥

इत्युक्त्वाहुर्विमलपुलकाकम्पनासन्नकण्ठी
छिन्ना मूले पतति भुवि सा हेमवल्लीव यावत् ।
भृङ्गारैस्तैः शिशिरसलिलैस्तावदेवोद्धवोऽस्याः
सिञ्चन्नास्यं तदुपरि विभोरुत्तरीयं दुधाव ॥ १०९ ॥
चक्रे चैतन्मनसि चतुरास्मेटकाचक्रपाणे-
र्लक्ष्यं यत्स्यात् तदपि यदसौ मामिहैकं न्ययुङ्क्त ।
एतत् सम्भावनसमुचितं साध्वभूनैपुणं मे
यद्रक्षायामहमधिकृतो नाशितेयं मयैव ॥ ११० ॥
सम्यग्जातं सुचिरविरहज्वालया दूयमाना
सेयं साध्वी विशति परमानन्दधामन्यनन्ते ।
मन्त्री वैज्ञानिक इति वृथा मानमासाद्यमाद्यन्
अद्य स्वीयां मतिपरिणतिं बुद्धवानुद्धवोऽस्मि ॥ १११ ॥
शृण्वन्नेतन्मधुपुरपतिर्मंस्यते कीदृशं मां
किं वा भावी कथमिव मया दृश्यतामास्यमस्मै ।
ध्यायन्नेतत् पुलकमुकुलारम्भिसस्पन्दतारं
पश्यन्नस्या मुखमकथयत् प्राणिति प्राणितीति ॥ ११२ ॥
नष्टं प्राप्तं निधिमिव मुखं वीक्ष्यमाणोऽयमस्या
भूयः सिञ्चन्मधुपुरपतेरुत्तरीयानिलेन ।
उच्चैराह श्रुतिपरिसरे किङ्करं कंसशत्रो-
र्दूतं राधे ! त्वयि विनिहितं विद्धिमामुद्धवोऽस्मि ॥ ११३ ॥
सातिस्वादुर्दवथुदमनी तुल्यपीयूषवाणी
वर्णश्रेणि श्रवणपुटकेनान्तरस्या विशन्ती ।

की जानीते किमकृत परं सत्वरं सापि तन्वी
किञ्चिं किञ्चिं कथय कथयेत्युत्थिता कौतुकेन ॥ ११४ ॥
आदायास्यै मलयजजलैर्मर्मरीभूतमन्त-
र्म्लानाभोगं नयनपयसः प्रोञ्छनात् साञ्जनस्य।
किञ्च प्रोतं बहुभिरभितः शुष्कशैवालखण्डैः
सारं शौरेरखिलमपि तद्दर्शयामास भूयः ॥ ११५ ॥
पश्चादूचे पुनरयमिदं चेलवल्लीं धुनान
स्तस्मादस्याः शपथशतकैः सन्निवृत्तः कथञ्चित्।
लक्ष्मीर्यस्मान्निवसति वहिस्त्वं तदन्तर्निमग्ना
मन्योरन्यो भवतु विषयः सा किमेवं विधासि ॥ ११६ ॥
धारावाहि व्यसनकथनाक्रन्तवत्याः प्रियायाः
सूक्तासक्तिव्यवधिभयतो यन्न मध्ये मयोक्तम्।
मौढ्यादेवं मम किमु महानेव न स्यादनर्थ-
स्तस्यायं चेद्वसनपवनः पावनो नाभविष्यत् ॥ ११७ ॥
यस्ते मग्नो मनसि, हृदये यस्य च त्वं विलीना
मन्यन्ते बचरणशरणा भूतिमैन्द्रीं तृणाय।
यस्यालाभात् पुरयुवतयो नालशैवालशय्याः ॥
सूर्य्यापाये ज्वलितवपुषो यामिनीर्यापयन्ति ॥ ११८ ॥
यस्याद्य त्वद्विरहदहनज्वालया पाण्डुभासो
वासो नीलं गमयति भिदामस्य नीलाम्बरेण।
दासो रासोत्सवनटगुरोरस्य सोऽहं समीऽहं
स त्वामावेदयति यदिदं मन्मुखेन प्रतीहि ॥ ११९ ॥

दैवादद्य प्रतिपदमितो बिभ्रतो बन्धुपार्श्वे-
र्देहेनैव द्विजपदमनुप्रापितः संयतोऽस्मि ।
यस्मिन् बाले तपनतनयाकूलकुञ्जान्तराले
चिन्तेन त्वं विरमसि न मे किन्तु केलीविनोदः ॥१२०॥

साक्षाद्दीक्षा न भवतु चिरं चिन्तिता तेन माभू-
द्दैवाधीनो गमयति जनः कोऽपि कुत्रापि कालम् ।
बन्दीभूतं मयि तव मनस्त्वय्यपीदं ममेति
द्वाभ्यामाभ्यां मिलनमचिराद्दावयोः साधनीयम् ॥१२१॥

राधे ! राधे ! क्व चलसि मनाक् तिष्ठ कल्याणि ! कुञ्जे
प्रातर्जातं न हि न हि निशा सावशेषाधुनापि ।
इत्यावेशप्रलपितशतं मत्कृतं देवि ! दिग्भ्यः
संप्राप्तास्ते कथयितुममी साक्षिणः सन्ति सभ्याः ॥१२२॥

क्षुद्रा बन्धुप्रणयपदवी लङ्घिता लोकलज्जा
मूर्ध्नि न्यस्तं पदमयशसः शङ्कितो नापमृत्युः ।
मामाराद्धुं किमिव न कृतं दुष्करं त्वादृशीभि-
स्त्यक्त्वा युष्मान् मम यदुपतेरद्य राज्यं धिगस्तु ॥ १२३ ॥

रम्या हर्म्यावलिरियममी बन्धवः सानुबन्धाः
निर्वैरेयं जयति नगरी गुम्फिता नागरीभिः ।
एषा सम्पत् किमिह न सुखं किन्तु कान्तारकुञ्जे
युष्माभिर्यः समजनि स मे दुर्लभो हृद्विनोदः ॥ १२४ ॥

नोपष्टम्भो गुणवति ! तव स्याद्यं चेत् तदानीं
नाहं नासावतिनवघनश्यामलो देहबन्धः ।

दुःखं क्वापि क्वचिदपि सुखं यच्छसि क्वापि मोहं
सर्वत्रैवं स्फुरति मम तु त्वन्मयी दृष्टिरेव ॥ १२५ ॥
कुञ्जामृज्वीमकरवमुरीकृत्य यन्निर्घृणत्वं
तत्तात्पर्य्यं विपुलमतयो नापयन्ति क्षतिः का ।
हित्वा वेशं कुवलयदृशां केशमप्यभ्रुवं वा
वन्तव्या मे न हि कुटिलतेत्येतदुन्नायकं तत् ॥ १२६ ॥
विद्युल्लोलं वपुरिदमितो यौवनादेः कथा का
दृश्यं मिथ्या सकलमिति मद्दासदासोऽपि वेद ।
किं ते वच्मि स्वयमसुमहं नैव वक्तुं समर्थो
यत्प्रोपीतत् प्रणयमदिरामत्तमात्मानमेव ॥ १२७ ॥
उद्यन्नीत्रस्खलनमनिशं गोपिते गोपयिष्यन्
राधानाम्नीमकरवमहं सारिकामन्तिकस्थाम् ।
नीता राधे मम मुरलिकेत्येवमादीन्यकाण्डे
वक्तुः सभ्यस्मितजनयितुस्तन्ममासीद्धृथैव ॥ १२८ ॥
अस्त्रं प्रस्वापनमपि मया लब्धमुन्निद्रकेण
यस्मिन्नेतन्निहितमथ ते स्वप्नसन्दर्शनाय ।
जाग्रद्भावे भवति भवती भावनीयैव धिङ्मे
तेनाशेषस्फुरणशमनो हन्त जाता सुषुप्तिः ॥ १२९ ॥
जाने प्राणेश्वरि मम यथा निर्विवादं तथा ते
सन्तमाया युगपदभियान्त्यद्यतन्यो रजन्यः ।
यास्यन्त्येता दिनकतिपयैरङ्गपल्यङ्कभाजोः
सत्यं सत्यं निमिषनिभतामावयोः सुस्थिता स्याः॥१३०॥

ज्ञातिग्रामो हसति विभृतं बन्धुवर्गो रुणद्धि
व्रीडामन्तर्दधति गुरवो गौरवो भृत्यलोकः।
चित्तीयन्ते किमपि सुजना दुर्जनाः कुत्सयन्ते
श्लाघन्ते मां सदसि रसिकाः सादरं त्वत्कथासु ॥१२१॥
इत्यादिष्टं भुवनगुरुणा गौरवेण प्रियाणाम्
अत्रागन्तुं किमिव गयितुं भोक्तुमप्यक्रमेण।
तामौत्सुक्यादिति स कथयन्नात्मनः पादमूले
निम्नासीनः सुरभिगिरिरं निर्झरं किञ्चिदाप ॥ १२२ ॥
पश्यन्नेतत् किमिति कथयन्नश्रुधारामुदारां
मन्दाकिन्या इव तनुभृतः सुभ्रुवः सुस्थितायाः।
हा हा जातं किमिति चकितः सत्वरं प्रोच्य पादौ
भक्तिश्रद्धासपुलकमुपादाय मूर्ध्नि ववन्दे ॥१२३ ॥
बुद्धा बद्धाञ्जलिपुटमिमां किञ्चिदाख्यातुकामाम्
इत्याचख्यौ विरमतु परं निष्फलो देवि खेदः।
एतद्दासो नयवति हरेः श्रीमदङ्गाधिरूढं
चेतोमूढं न कुरु करुणासागरे सङ्गतासि ॥ १२४ ॥
भास्वानस्तानयमति कृती खेलयन्नम्बरान्त
र्धर्मस्थित्यै भ्रमति भुवने तामसोन्मूलनाय।
प्रादक्षिण्याज्झटिति विनतानन्दनाधीनयानौ
रागी चिन्तां न कुरु कुरुते पद्मिनीनां प्रबोधम् ॥१२५॥
गोपीमात्रं घुणलिपिनयान्माधवप्रेमपात्रं
मत्वा यत्त्वामनतिगयिनी दृष्टिरन्ने ममासीत्

स्थन्तव्यं तदिधिविविधिस्तुतव्योमकेशाब्धिपुत्री-
स्तव्यः पाशे पशुरिव तव प्रेम्णि बद्धो यदस्ति ॥ १३६ ॥
मातर्मातर्जय जय जगन्मोहनं मोहयन्त्याः
कस्ते तत्त्वं कलयतु न यद्धै दगर्भोऽपि वेद ।
मन्तव्योऽसौ परिजनतया वल्लभस्येति तस्यै
वारं वारं तदनु दधिरे तेन दण्डप्रणामाः ॥ १३७ ॥
सर्वाङ्गीनं पुलकमुदभूदश्रु मग्ने च दृष्टी
कण्ठो भग्नस्वर इव वचः पर्यवस्थानशून्यम् ।
तस्यास्तस्याप्यजनि युगपद्यानकाले तदानीं
मुग्धा मूर्द्धन्यभवदुभयोरद्भुता पुष्पवृष्टिः ॥ १३८ ॥
आमन्त्र्यैकस्तदनु सकलं घोषमुत्कण्ठमानः
सद्यो राधारमणचरणप्रेक्षणाय प्रतस्थे ।
मन्त्रं चिन्तामणिमिव परा चिन्तयन्ती चिराय
प्रेयः सूक्तं वनभुवि घनानन्दमग्नावतस्थे ॥ १३९ ॥
नानारामप्रणयि-सुमनःसङ्गसौभाग्यभाजा
जाड्यापाये सुरभिसमयस्थायिना माधवेन ।
राधाबन्धोरुपहृतमिति प्रेममाध्वीकमेतत्-
निर्विघ्नेन श्रवणपुटकैः पुण्यवन्तः पिबन्तु ॥ १४० ॥
विचारपारदृश्वानः कृतं क्षुद्रधिया मया ।
करुणार्द्राः करिष्यन्ति शुद्धमुद्धवदूतकम् ॥ १४१ ॥

इति तालितनगरनिवासि श्रीमाधवकवीन्द्र भट्टाचार्य्य-
विरचितं उद्धवदूतं खण्डकाव्यं सम्पूर्णम् ।

---

# चौरपञ्चाशिका ।

—०:;:०—

अद्यापि तां कनकचम्पकदामगौरीं
फुल्लारविन्दवदनां तनुलोमराजीम् ।
सुप्तोत्थितां मदनविह्वललालसाङ्गीं
विद्यां प्रमादगुणितामिव चिन्तयामि ॥ १ ॥

अद्यापि तां शशिमुखीं नवयौवनाढ्यां
पीनस्तनीं पुनरहं यदि गौरकान्तिम् ।
पश्यामि मन्मथशरानलपीड़ितानि
गात्राणि सम्प्रति करोमि सुशीतलानि ॥ २ ॥

अद्यापि तां यदि पुनः कमलायताक्षीं
पश्यामि पीवरपयोधरभारखिन्नाम् ।
सम्पीड्य बाहुयुगलेन पिबामि वक्त्रम्
उन्मत्तवन्मधुकरः कमलं यथेष्टम् ॥ ३ ॥

अद्यापि तां निधुवनक्लमनिःसहाङ्गीम्
आपाण्डु गण्डपतितालककुञ्चिताक्षीम् ।
प्रच्छन्नपापकृतमन्थरमावहन्तीं
कण्ठावसक्तमृदुबाहुलतां स्मरामि ॥ ४ ॥

अद्यापि तां सुरतजागरघूर्णमानां
तिर्य्यक्स्खलत्तरलतारकमावहन्तीम्

शृङ्गारसारकमलाकरराजहंसीं
व्रीडावनम्रवदनामुषसि स्मरामि ॥ ५ ॥

अद्यापि तां सुरतताण्डवसूत्रधारीं
पूर्णेन्दुसुन्दरमुखीं मदविह्वलाङ्गीम्
तन्वीं विशालजघनां स्तनभारखिन्नां
व्यालोलकुन्तलकलापवतीं स्मरामि ॥ ६ ॥

अद्यापि तां मसृणचन्दनचर्चिताङ्गीं
कस्तूरिकापरिमलेन विसर्पिगन्धाम् ।
अल्पेन्दुरेखपरिशीलितभालरेखां
मुग्धाभिरामनयनां शयने स्मरामि ॥ ७ ॥

अद्यापि तां निधुवने मधुपानपात्रीं
लीढ़ाम्बरां कृशतनुं चपलायताक्षीम् ।
काश्मीरपङ्कमृगनाभिकृताङ्गरागां
कर्पूरपूगपरिपूर्णमुखीं स्मरामि ॥ ८ ॥

अद्यापि तां क्लमपतन्मदिरापराग-
प्रस्वेदबिन्दुविततं वदनं प्रियायाः ।
अन्ते स्मरामि रतिखेदविलोलनेत्रं
राहूपरागपरिमुक्तमिवेन्दुबिम्बम् ॥ ९ ॥

अद्यापि तन्मुखशशी परिवर्तते मे
रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या ।
जीवेति मङ्गलवचः परिहृत्य कोपात्
कर्णे कृतं कनकपत्रमनालपन्त्या ॥ १० ॥

अद्यापि तत् कनककुण्डलघृष्टमास्यम्
तस्याः स्मरामि विपरीतरताभियोगे।
आन्दोलनश्रमजलस्फुटसान्द्रविन्दु
मुक्ताफलप्रकरविच्छुरितं प्रियायाः॥ ११॥

अद्यापि तत्प्रणयभङ्गुरदृष्टिपातं
तस्याः स्मरामि रतिविभ्रमगात्रभङ्गम्।
वस्त्राञ्चलेन परिघर्षिपयोधरान्तं
दन्तच्छदं दशनखण्डनमण्डनञ्च॥ १२॥

अद्याप्यशोकनवपल्लवरक्तहस्तां
मुक्ताफलप्रचयचुम्बितचूचुकाग्राम्।
अन्तःस्मितोच्छसितपाण्डुरगण्डदेशां
तां वल्लभां रहसि सम्वलितां स्मरामि॥ १३॥

अद्यापि तत् कुसुमरेणुसुगन्धिमिश्रं
न्यस्तं स्मरामि नखरक्षतलक्ष्म तस्याः।
आकृष्टहेमरुचिराम्बरमुत्थिताया
लज्जावशात् करधृतं न कृतोऽत्रजन्त्याः॥ १४॥

अद्यापि तां विधृतकज्जललोलनेत्रां
पृथ्वीप्रभिन्नकुसुमाकुलकेशपाशान्।
सिन्दूरसम्वलितमौक्तिकहारभाराम्
आबद्धहेमकटिकां रहसि स्मरामि॥ १५॥

अद्यापि तां धवलवेश्मनि रत्नदीप-
मालामयूखपटलैर्गलितान्धकारैः।

सुप्ताञ्च मे रहसि हास्यमुखीं प्रसन्नां
लज्जाभरार्द्रनयनां परिचिन्तयामि ॥ १६ ॥
अद्यापि तां गलितबन्धनकेशपाशां
स्रस्तस्रजं स्मितसुधामधुराधरौष्ठीं
पीनोन्नतस्तनयुगोपरि चारु चुम्बन्
मुक्तावलिं रहसि लोलदृशं स्मरामि ॥ १७ ॥
अद्याप्यहं विरहवह्निनिपीडिताङ्गीं
तन्वीं कुरङ्गनयनां सुरतैकपात्रीम् ।
नानाविचित्रकृतमण्डनमावहन्तीं
तां राजहंसगमनां सुदतीं स्मरामि ॥ १८ ॥
अद्यापि तां विरहितां कुचभारनम्रां
मुक्ताकलापविमलीकृतकण्ठदेशाम् ।
तां केलिमन्दिरगतां कुसुमायुधस्य
कान्तां स्मरामि रुचिरोज्ज्वलधूमकेतुम् ॥ १९ ॥
अद्यापि चाटुशतप्रोल्लसितस्मितन्तु
तस्याः स्मरामि सुरतक्लमविह्वलायाः ॥
अव्याजनिस्तनितकातरवाक्कुकण्ठ-
सङ्कीर्णवर्णरुचिरं वदनं प्रियायाः ॥ २० ॥
अद्यापि तां सुरतघूर्णनिमीलिताक्षीं
स्रस्ताङ्गयष्टिगलितां गुरुकेशनम्राम् ।
शृङ्गारवारिकमलाम्बुजराजहंसीम्
जन्मान्तरे निधुवनेऽप्यनुचिन्तयामि ॥ २१ ॥

अद्यापि तां प्रणयिनीं मृगशावकाक्षीं
पीयूषपूर्णकुचकुम्भयुगं वहन्तीम् ।
पश्याम्यहं यदि पुनर्दिवसावसाने
स्वर्गापवर्गनरराज्यसुखं त्यजामि ॥ २२ ॥
अद्यापि तां स्तिमितवस्त्रमिवावलग्नां
प्रौढ़प्रतापमदनानलतप्तदेहाम् ।
बालां मदेकशरणामनुकम्पनीयां
प्राणाधिकां क्षणमहं नहि विस्मरामि ॥ २३ ॥
अद्याति तां क्षितितले वरकामिनीनां
सर्वाङ्गसुन्दरतया प्रथमैकरेखाम् ।
संसारनाटकरसोत्तमरत्नपात्रीं
कान्तां स्मरामि कुसुमायुधबाणखिन्नाम् ॥ २४ ॥
अद्यापि तां प्रथमतो वरसुन्दरीं मे
स्नेहैकपात्रघटितावनिनाथपुत्रीम् ।
हे हे जना मम वियोगहुताशतापं
सोढुं न शक्यत इति प्रतिचिन्तयामि ॥ २५ ॥
अद्यापि विस्मयकरी त्रिदशान् विहाय
बुद्धिर्बलाच्चलति तत् किमहं करोमि ।
जानन्नपि प्रतिमुहूर्तमिवान्तकाले
दृष्टा तु वल्लभतरेति ममातिधीराः ॥ २६ ॥
अद्यापि तां गमनमित्युदितं मदीयं
श्रुत्वैव भीतहरिणीशिशुचञ्चलाक्षीम् ।

वाचस्खलद्विगलदश्रुकणाकुलाक्षीं
सञ्चिन्तयामि गुरुशोकविनम्रवक्त्राम् ॥ २७ ॥
अद्यापि वासगृहतो मयि नीयमाने
दुर्वारभीषणकरैर्यमदूतकल्पैः ।
किं किं तया बहुविधं न कृतं मदर्थं
कर्तुं न पार्यत इति व्यथते मनो मे ॥ २८ ॥
अद्यापि तां क्षणवियोगविषेण मग्नां
शङ्के पुनर्बहुतया मृतशोकधाराम् ।
मज्जीवधारणकरीं मदनालसाङ्गीं
किं ब्रह्मकेशवहरैः सुदतीं स्मरामि ॥ २९ ॥
अद्यापि तां चलचकोरविलोलनेत्रां
शीतांशुमण्डलमुखीं कुटिलाग्रकेशाम् ।
मत्तेभकुम्भसदृशस्तनभारनम्रां
बन्धूकपुष्पसदृशौष्ठपुटां स्मरामि । ३० ॥
अद्यापि मे निशि दिवा हृदयं दुनोति
पूर्णेन्दुसुन्दरमुखं मम वल्लभायाः ।
लावण्यनिर्जितमनोहरकामदर्पं
भूयः पुनः प्रतिमुहुर्न विलोक्यते यत् ॥ ३१ ॥
अद्यापि तामरहितां मनसापि नित्यं
सञ्चिन्तयामि सततं मम जीवितेशाम् ।
लावण्यभोगनवयौवनभारसारां
जन्मान्तरेऽपि मम सैव गतिर्यथा स्यात् ॥ ३२ ॥

अद्यापि तां मलयपङ्कजगन्धलुब्ध-
भ्राम्यद्द्विरेफचयचुम्बितगण्डदेशाम्
क्लेशावधूतकरपल्लवकङ्कणानां
त्वां नो दुनोति नियतं सुरतं मदीयम् ॥ २३ ॥
अद्यापि सा नखपदं स्तनमण्डलेषु
दत्तं मयैव मधुपानविमोहितेन ।
उद्भिन्नरोमपुलकैर्बहुभिः समन्तात्
जागर्ति रक्षति विलोकयति प्रयत्नात् ॥ २४ ॥
अद्यापि या शशिमुखी न कृतागसं मां
सोच्चैर्वचः प्रतिददाति यदैव नक्तम् ।
चुम्बामि रोदिमि भृशं पतितोऽस्मि पादे
दासस्तव प्रियतमे ! भज मां स्मरामि ॥ २५ ॥
अद्यापि धावति मनः किमहं करोमि
सार्द्धं सखीभिरभिवासगृहेषु कान्ते ।
कान्तासुगीतपरिहासविचित्रवाद्यैः
क्रीड़ासुखैरिह तु यातु मदीयकालः ॥ २६ ॥
अद्यापि तां न खलु वेद्मि किमीशपत्नी
सा वा शची सुरपतेरथ कृष्णलक्ष्मीः ।
धात्रैव किं त्रिजगतां परिमोहनाय
सृष्टा कुले युवतिराजिदिदृक्षयेव ॥ २७ ॥
अद्यापि तां जगति वर्णयितुं न कोऽपि
शक्नोत्यदृष्टसदृशप्रतिरूपलक्ष्मीम् ।

दृष्टं तया तु सदृशं खलु तेन रूपं
शक्नो भवेदपि स एव परो न चान्यः ॥ ३८ ॥
अद्यापि निर्मलशरच्छशिगौरकान्ति
चेतो मुनेरपि हरेत् किमुतास्मदीयम् ।
वक्त्रं सुधामयमहं यदि तत् प्रपद्ये
चुम्बामि चाप्यविरतं व्यथते न चेतः ॥ ३९ ॥
अद्यापि ते प्रतिमुहुः प्रतिभाव्यमाना
चेतो हरन्ति हरिणीशिशुलोचनायाः ।
अन्तर्निमग्नमधुपाकुलकुन्दवृन्द-
सन्दर्भसुन्दररुचो नयनार्द्धपाताः ॥ ४० ॥
अद्यापि तत्कमलरेणुसुगन्धिगन्धं
तत्प्रेमवारिमकरध्वजतापहारि ।
प्राप्नोम्यहं यदि पुनः सुरतैकतीर्थं
प्राणांस्त्यजामि नियतं पुनराप्तिहेतोः ॥ ४१ ॥
अद्यापि सा यदि पुनर्नलिनीवनान्ते
रोमाञ्चवीचिविलसच्चपलाङ्गयष्टिः ।
कादम्बकेशररुचः कणमानसङ्गात्
किञ्चित् क्रमं श्लथयति प्रियराजहंसी ॥ ४२ ॥
अद्यापि तां नृपतिशेखरराजकन्यां
सम्पूर्णयौवनमदालसभङ्गगात्रीम् ।
गन्धर्वयक्षसुरकिन्नरराजकन्यां
स्वर्गादिमां निपतितामिव चिन्तयामि ॥ ४३ ॥

अद्यापि तत्सुरतकेलिनिबद्धयुद्धं
बन्धोपबन्धपतितोत्थितशून्यहस्ताम् ।
दन्तौष्ठपीडननखक्षतरक्तसिक्तां
तस्याः स्मरामि रतिबन्धुरगात्रयष्टिम् ॥ ४४ ॥
अद्यापि तां निजवपुःकृतवेदिमध्याम्
तत्सङ्गसम्भितसुधास्तनभारनम्राम् ।
नानाविचित्रकृतमण्डनमण्डिताङ्गीं
सुप्तोत्थितां निशि दिवा नहि विस्मरामि ॥ ४५ ॥
अद्यापि तां कनककान्तिमदालसाङ्गीं
व्रीडोत्सुकाभिजनभीषणवेपमानाम् ।
अङ्गाङ्गसङ्गपरिचुम्बितमोहभङ्गीं
सञ्जीवनौषधमिव प्रमदां स्मरामि ॥ ४६ ॥
अद्यापि तां नववधूसुरताभियोगे सम्पूर्ण-
केलिविधिना रचितां कदाचित् ।
पूर्णेन्दुसुन्दरमुखीं हरिणायताक्षीं
उन्निन्द्रकोकनदपत्रनखीं स्मरामि ॥ ४७ ॥
अद्यापि तद्विकसिताम्बुजगौरमध्यं
गोरोचनातिलकविन्दुकृतैकदेशम् ।
ईषन्मदालसविघूर्णितदृष्टिपातं
कान्तामुखं सखि मया सह गच्छतीव ॥ ४८ ॥
अद्याप्यहं नववधूसुरताभियोगं
शक्नोमि नान्यविधिना रचितुं कदाचित् ।

तद्भ्रातरौ मरणमेव हि दुःखशान्तौ
विज्ञापयामि भवतस्त्वरितं लुनीतम् ॥ ४९ ॥
अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं खलु पृष्ठकेन ।
अम्भोनिधिर्वहति दुःसहवाडवाग्निं
अङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ ५० ॥

चौरकविकृता चौरपञ्चाशिका समाप्ता ।

---

## अमरुशतकम् ।

---

ज्याकृष्टिबद्धखटकामुखपाणिपृष्ठ-
प्रेङ्खन्नखांशुचयसम्वलितोऽम्बिकायाः ।
त्वां पातु मञ्जरितपल्लवकर्णपूर-
लोभभ्रमद्भ्रमरविभ्रमभृत्कटाक्षः ॥ १ ॥

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोऽंशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥२॥

आलोलामलकावलीं विलुलितां बिभ्रच्चलत्कुण्डलं
किञ्चिन्मृष्टविशेषकं तनुतरैः स्वेदाम्भसां शीकरैः ।
तन्व्या यत् सुरतान्ततान्तनयनं वक्त्रं रतिव्यत्यये
तत् त्वां पातु चिराय किं हरिहरब्रह्मादिभिर्दैवतैः ॥३॥

अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ।
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे ! त्वयाद्य विलोक्यते ॥ ४ ॥

दत्तोऽस्याः प्रणयस्त्वयैव भवता चेयं चिरं लालिता
दैवादद्य किल त्वमेव कृतवानस्या नवं विप्रियम् ।
मन्युर्दुःसह एष यात्युपशमं नो सान्त्ववादैः स्फुटं
हे निस्त्रिंश विमुक्तकण्ठकरुणं तावत् सखी रोदितु ॥५॥

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने ! मानमधुना ॥ ६ ॥

नार्यस्तन्वि ! हठाद्धरन्ति रमणं तिष्ठन्ति नो वारिता-
स्तत् किं ताम्यसि किञ्च रोदिषि मुधा तासां प्रियं माकृथाः
कान्तः केलिरुचिर्युवा सहृदयस्तादृक् पतिः कातरे !
किन्नो बर्करकर्करैः प्रियशतैराक्रम्य विक्रीयते ॥ ७ ॥

कोपात् कोमललोलबाहुलतिकापाशेन बद्धा दृढं
नीत्वा केलिनिकेतनं दयितया सायं सखीनां पुरः ।
भूयोऽप्येवमिति स्खलन् मृदुगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदत्या हसन् ॥ ८ ॥

प्रहरविरतौ मध्ये वाह्नस्ततोऽपि परेऽथ वा
किमुत सकले जाते वाह्नि प्रिय त्वमिहैष्यसि ।

इति दिनशतप्राप्यं देशं प्रियस्य यियासतो
हरति गमनं बालालापैः सबाष्पगलज्जलैः ॥ ९ ॥
याताः किन्न मिलन्ति सुन्दरि ! पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशासि कथयत्येवं सबाष्पे मयि।
लज्जामन्थरतारकेण निपतद्धाराश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥ १० ॥
घोरं वारिधरस्य वारि किरतः श्रुत्वा निशीथे ध्वनिं
दीर्घोच्छ्वाससमुदश्रुणा विरहिणीं बालां चिरं ध्यायता।
अध्वन्येन विमुक्तकण्ठमखिलां रात्रिं तथा क्रन्दितं
ग्रामीणैर्व्रजतो जनस्य वसतिर्ग्रामे निषिद्धा यथा ॥ ११ ॥
कथमपि सखि ! क्रीड़ाकोपाद् व्रजेति मयोदिते
कठिनहृदयस्त्यक्त्वा शय्यां बलाद्गतएव सः।
इति सरभसं ध्वस्तप्रेम्णि व्यपेतघृणे जने
पुनरपि हतव्रीड़ं चेतः प्रयाति करोमि किम् ॥ १२ ॥
दम्पत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वच-
स्तत्प्रातर्गुरुसन्निधौ निगदतस्तस्योपहारं बधूः।
कर्णालङ्कृतिपद्मरागशकलं विन्यस्य चञ्चूपुटे
व्रीड़ार्त्ता प्रकरोति दाड़िमफलव्याजेन वाग्बन्धनम् ॥ १३॥
अज्ञानेन पराङ्मुखीं परिभवादाश्लिष्य मां दुःखितां
किं लब्धं चटुल ! त्वयेह नयता सौभाग्यमेतां दशाम्।
पश्यैतद्दयिताकुचव्यतिकरोन्मृष्टाङ्गरागारुणं
वक्षस्ते मलतैलपङ्कशबलैर्वेणीपदैरङ्कितम् ॥ १४ ॥

एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरत-
स्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥ १५ ॥

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रिमकन्धरः सपुलकः प्रेमोल्लसन्मानसाम्
अन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥ १६ ॥

चरणपतनप्रत्याख्यानात् प्रसादपराङ्मुखे
निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते ।
व्रजति रमणे निःश्वस्योच्चैः स्तनस्थितहस्तया
नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता ॥ १६ ॥

काञ्च्या गाढतरावरुद्धवसनप्रान्ता किमर्थं पुन-
र्मुग्धाक्षी स्वपितीति तत्परिजनं स्वैरं प्रिये पृच्छति ।
मातः स्वप्तुमपीह वारयति मामित्याहितक्रोधया
पर्यस्य स्वपितिच्छलेन शयने दत्तोऽवकाशस्तया ॥ १८ ॥

एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।
दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसं व्यासक्तकण्ठग्रहम् ॥१९॥

पश्यामो मयि किं प्रपद्यत इति स्थैर्यं मयालम्बितं
किं मामालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः ।

इत्यन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे
सव्याजं हसितं मया धृतिहरो बाष्पस्तु मुक्तस्तया ॥२०॥
परिम्लाने माने मुखशशिनि तस्याः करधृते
मयि क्षीणोपाये प्रणिपतनमात्रैकशरणे ।
तया पक्ष्मप्रान्तव्रजपुटनिरुद्धेन सहसा
प्रसादो बाष्पेन स्तनतटविशीर्णेन कथितः ॥ २१ ॥
तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत् सम्प्रमार्ष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात् तन्व्यापि तद्विस्मृतम् ॥२२॥
त्वं मुग्धाक्षि ! विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकां संस्पृशि ।
शय्योपान्तनिविष्टसस्मितमुखीनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥ २३ ॥
भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
कार्कश्यं गमितेऽपि चेतसि तनूरोमाञ्चमालम्बते ।
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिन् जने ॥२४॥
कान्ते ! कत्यपि वासराणि गमय त्वं मीलयित्वा दृशौ
स्वस्ति स्वस्ति निमीलयामि नयने यावन्न शून्या दिशः ।
आयाता वयमागमिष्यति सुहृद्वर्गस्य भाग्योदयैः
सन्देशो वद कस्तवाभिलषितस्तीर्थेषु तोयाञ्जलिः ॥२५॥

सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥ २६ ॥

भवतु विदितं भव्यालापैरलं खलु गम्यतां
तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः ।
तव यदि तथाभूतं प्रेम प्रपन्नमिमां दशां
प्रकृतितरले ! का नः पीडा गते हतजीविते ॥ २७ ॥

उरसि निहितस्तारो हारः कृता जघने घने
कलकलवती काञ्ची पादौ क्वणन्मणिनूपुरौ ।
प्रियमभिसरस्येवं मुग्धे ! समाहतडिण्डिमा
यदि किमधिकत्रासोत्कम्पं दिशः समुदीक्षसे ॥ २८ ॥

प्रातः प्रातरुपागतेन जनिता निर्निद्रिता चक्षुषो-
र्मन्दायां मयि गौरवव्यपगमादुत्पादितं लाघवम् ।
किं मुग्धेन मया कृतं रमणधीर्मुक्ता त्वया गम्यतां
दुःस्थं तिष्ठसि यच्च पथ्यमधुना कर्तास्मि तत् श्रोष्यसि॥२९॥

सा बाला वयमप्रगल्भमनसः, सा स्त्री वयं कातराः,
सा पीनोन्नतिमत् पयोधरयुगं धत्ते, सखेदा वयम् ।
साक्रान्ता जघनस्थलेन गुरुणा, गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥३०॥

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।

यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित! प्रियसुहृत्सार्थः किमु त्यज्यते? ॥ २१ ॥
सन्दष्टाधरपल्लवा सचकितं हस्ताग्रमाधुन्वती
मामामुञ्च शठेति कोपवचनैरानर्तितभ्रूलता।
शीत्काराञ्चितलोचना सरभसं यैश्चुम्बिता मानिनी
प्राप्तं तैरमृतं मुधैव मथितो मूढैः सुरैः सागरः ॥ २२ ॥
सुप्तोऽयं सखि! सुप्यतामिति गताः सख्यस्ततोऽनन्तरं
प्रेमावासितया मया सरलया न्यस्तं मुखं तन्मुखे।
ज्ञातेऽलीकनिमीलने नयनयोर्धूर्तस्य रोमाञ्चतो
लज्जासीन्मम तेन साप्यपहृता तत्कालयोग्यैः क्रमैः ॥ २३ ॥
कोपो यत्र भ्रूकुटिरचना निग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो यत्र दृष्टिः प्रसादः।
तस्य प्रेम्णस्तदिदमधुना वैषमं पश्य जातं
त्वं पादान्ते लुठसि नहि मे मन्युमोक्षः खलायाः ॥ २४ ॥
सुतनु! जहिहि कोपं पश्य पादानतं मां
न खलु तव कदाचित् कोप एवंविधोऽभूत्।
इति निगदति नाथे तिर्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किञ्चित् ॥ २५ ॥
गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलत्-श्रीमन्नितम्बाम्बरा।
मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किन्नु मृता नु किं मनसि मे लीना विलीना नु किं ॥ २६

पटालग्ने पत्यौ नमयति मुखं जातविनया
हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम्।
न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना
ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नववधूः॥ ३७॥

गते प्रेमाबन्धे प्रणयबहुमाने विगलिते
निवृत्ते सद्भावे जन इव जने गच्छति पुरः।
तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि! गतांस्तांश्च दिवसान्
न जाने को हेतुर्दलति शतधा यन्न हृदयम्॥ ३८॥

चिरविरहिणोरत्युत्कण्ठार्तिश्लथीकृतगात्रयो-
र्नवमिव जगज्जातं भूयश्चिरादभिनन्दतोः।
कथमपि दिने दीर्घे याते निशामधिरूढयोः
प्रसरति कथा बह्वी यूनोर्यथा न तथा रतिः॥ ३९॥

दीर्घा वन्दनमालिका विरचिता दृष्ट्यैव नेन्दीवरैः
पुष्पाणां प्रकरः स्मितेन रचितो नो कुन्दजात्यादिभिः।
दत्तः स्वेदमुचा पयोधरयुगे नार्घ्यो न कुम्भाम्भसा
स्वैरेवावयवैः प्रियस्य विशतस्तन्व्या कृतं मङ्गलम्॥४०॥

कान्ते सागसि शायिते प्रियसखीवेशं विधायागते
भ्रान्त्यालिङ्ग्य मया रहस्यमुदितं तत्सङ्गमाकाङ्क्षया।
मुग्धे! दुष्करमेतदित्यतितरामुक्त्वा सहासं बलाद्
आलिङ्ग्य छलितास्मि तेन कितवेनाद्य प्रदोषागमे॥४१॥

आशङ्क्य प्रणतिं पटान्तपिहितौ पादौ करोत्यादरात्
व्याजेनागतमावृणोति हसितं न स्पष्टमुद्वीक्षते।

मय्यालापवति प्रतीपवचनं सख्या सहाभाषते
तस्मास्तिष्ठतु निर्भरप्रणयिता मानोऽपि रम्योदयः ॥४२॥

सा यावन्ति पदान्यलीकवचनैरालीजनैः शिक्षिता
तावन्त्येव कृतागसो द्रुततरं व्याहृत्य पत्युः पुरः।
प्रारब्धा पुरतो यथा मनसिजस्याज्ञा तथा वर्तितुं
प्रेम्णो मौग्ध्यविभूषणस्य सहजः कोऽप्येष कान्तः क्रमः॥४३॥

दूरादुत्सुकमागते विवलितं सम्भाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने किञ्चिन्नतभ्रूलतम्।
मानिन्याश्चरणानतिव्यतिकरे वाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो! प्रपञ्चचतुरं जातागसि प्रेयसि॥४४॥

अङ्गानामतितानवं कथमिदं कम्पश्च कस्मात्कुतो
मुग्धे! पाण्डुकपोलमाननमिति प्राणेश्वरे पृच्छति।
तन्व्या सर्वमिदं स्वभावजमिति व्याहृत्य पक्ष्मान्तर-
व्यापी वाष्पभरस्तया चलितया निःश्वस्य मुक्तोऽन्यतः॥४५॥

पुरस्तन्व्या गोत्रस्खलनचकितोऽहं नतमुखः
प्रवृत्तो वैलक्ष्यात् किमपि लिखितुं दैवहतकः।
स्फुटो रेखान्यासः कथमपि स तादृक् परिणतो
गता येन व्यक्तिं पुनरवयवैः सैव तरुणी॥४६॥

कठिनहृदये मुञ्च भ्रान्तिं व्यलीककथाश्रितां
पिशुनवचनैर्दुःखं नेतुं न युक्तमिमं जनम्।
किमिदमथवा सत्यं मुग्धे! त्वया हि विनिश्चितं
यदभिरुचितं तन्मे कृत्वा प्रिये! सुखमास्यताम्॥४७॥

मन्दं मुद्रितपांशवः परिपतज्झंकारझंझामरुद्-
वेगध्वस्तकुटीरकान्तरगतच्छिद्रेषु लब्धान्तराः।
कर्मव्यग्रकुटुम्बिनीकुचतटस्वेदच्छिदः प्रावृषः
प्रारम्भे निपतन्ति कन्दलदलोल्लासाः पयोबिन्दवः ॥४८॥

पीतस्तुषारकिरणो मधुनैव सार्धम्
अन्तः प्रविश्य चषके प्रतिबिम्बवर्त्ती।
मानान्धकारमपि मानवतीजनस्य
नूनं बिभेद यदसौ प्रससाद सद्यः॥ ४९ ॥

नभसि जलदलक्ष्मीं सम्भृतां वीक्ष्य दिष्ट्या
प्रसरसि यदि कान्तेत्यर्धमुक्ता कथञ्चित्।
मम पटमवलम्ब्य प्रोल्लिखन्ती धरित्रीं
तदनुकृतवती सा यत्र वाचो निवृत्ताः॥ ५० ॥

इयमसौ तरलायतलोचना गुरुसमुन्नतपीनपयोधरा।
पृथुनितम्बभरालसगामिनी प्रियतमा मम जीवितहारिणी५१

सालक्तकेन नवपल्लवकोमलेन
पादेन नूपुरवता मदनालसेन।
यस्ताड्यते दयितया प्रणयापराधात्
सोऽङ्गीकृतो भगवता मकरध्वजेन॥ ५२ ॥

बाले! नाथ! विमुञ्च मानिनि! रुषं रोषान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि।
तत् किं रोदिषि गद्गदेन वचसा? कस्याग्रतो रुद्यते?
नन्वेतन्मम-का तवास्मि? दयिता-नास्मीत्यतो रुद्यते॥५३॥

नीत्वोच्चैर्विक्षिपन्तः कृततुहिनकणासारसक्तान् परागान्
कौन्दानामन्दितालीनतितरसुरभीन् भूरिशो दिङ्मुखेषु ।
एते ते कुङ्कुमाक्तस्तनकलस-भरास्फालनादुच्छलन्तः
पीत्वा शीत्कारिवक्त्रं शिशुहरिदृशां हैमना वान्ति वाताः॥५४॥
श्रुत्वा तन्व्या निशीथे नवघनरसितं विश्लथाङ्गं पतित्वा
शय्यायां भूमिपृष्ठे करतलधृतया दुःखितालीजनेन ।
सोत्कण्ठं मुक्तकण्ठं कठिनकुचतटाघातशीर्णाश्रुबिन्दु
स्मृत्वा स्मृत्वा प्रियस्य स्खलितमृदुवचो रुद्यते पान्थवध्वा॥५५॥
श्लिष्टः कण्ठे किमिति न मया मूढ़या प्राणनाथ-
श्चुम्बत्यस्मिन् वदनविधुतिः किं कृता किन्न दृष्टः ।
नोक्तः कस्मादिति नववधूचेष्टितं चिन्तयन्ती
पश्चात्तापं वहति तरुणी प्रेम्णि जाते रसज्ञा ॥ ५६ ॥
श्रुत्वा नामापि यस्य स्फुटघनपुलकं जायतेऽङ्गं समन्तात्
दृष्ट्वा यस्याननेन्दुं भवति वपुरिदं चन्द्रकान्तानुकारि ।
तस्मिन्नागत्य कण्ठग्रहणसरभसस्थायिनि प्राणनाथे
भग्ना मानस्य चिन्ता भवति मम पुनर्वज्रमय्याः कदा नु॥५७॥
रामाणां रमणीयवक्त्रशशिनः स्वेदोदबिन्दुप्लुतो
व्यालोलालकवल्लरीं प्रचलयन् धुन्वन् नितम्बाम्बरम् ।
प्रातर्वाति मधौ प्रकामविकसद्राजीवराजीरजो-
जालामोदमनोहरो रतिरसग्लानिं हरन्मारुतः ॥ ५८ ॥
अङ्गं चन्दनपाण्डुपल्लवमृदुस्ताम्बूलताम्राधरो
धारायन्त्रजलाभिषेककलुषे धौताञ्जने लोचने

अन्तःपुष्पसुगन्धिराद्रकवरी सर्वाङ्गलग्नाम्बरं
रामाणां रमणीयतां विदधति ग्रीष्मापराह्णागमे ॥ ५९ ॥

वरमसौ दिवसो न पुनर्निशा ननु निशैव वरं न पुनर्दिवा ।
उभयमेतदुपैत्वथवा क्षयं प्रियजनेन न यत्र समागमः ॥ ६० ॥

लोलैर्लोचनवारिभिः सशपथैः पादप्रणामैः प्रियै-
रन्यास्ता विनिवारयन्ति कृपणाः प्राणेश्वरं प्रस्थितम् ।
पुण्याहं व्रज मङ्गलं सुदिवसं प्रातः प्रयातस्य ते
यत् स्नेहोचितमीहितं प्रियतम ! त्वं निर्गतः श्रोष्यसि ॥ ६१ ॥

लग्ना नांशुकपल्लवे भुजलता न द्वारदेशेऽर्पिता
नो वा पादतले तया निपतितं तिष्ठेति नोक्तं वचः
काले केवलमम्बुदातिमलिने गन्तुं प्रवृत्तः शठः
तन्व्या बाष्पजलौघकल्पितनदीपूरेण बद्धः प्रियः ॥ ६२ ॥

न जाने संमुखायाते प्रियाणि वदति प्रिये ।
सर्वाण्यङ्गानि मे यान्ति श्रोत्रतां किमु नेत्रताम् ॥ ६३ ॥

विरहविषमः कामो वामस्तनुं कुरुते तनुं
दिवसगणनादक्षश्चासौ व्यपेतघृणो यमः ।
त्वमपि वशगो मानव्याधेर्विचिन्तय नाथ हे !
किशलयमृदुर्जीवेदेवं कथं प्रमदाजनः ॥ ६४ ॥

पादासक्ते सुचिरमिह ते वामता कैव कान्ते
सन्मार्गस्थे प्रणयिनि जने कोपने ! कोऽपराधः ।
इत्थं तस्याः परिजनकथा कोपवेगोपशान्तौ
बाष्पोद्भेदैस्तदनु सहसा न स्थितं न प्रयातम् ॥ ६५ ॥

पुराभूदस्माकं नियतमविभिन्ना तनुरियं
ततो नु त्वं प्रेयान् वयमपि हताशाः प्रियतमाः।
इदानीं नाथ! त्वं वयमपि कलत्रं किमपरं
मयाप्तं प्राणानां कुलिशकठिनानां फलमिदम्॥ ६६॥
मुग्धे! मुग्धतयैव नेतुमखिलः कालः किमारभ्यते?
मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो ननु स मे प्राणेश्वरः श्रोष्यति॥६७॥

पीतो यतः प्रभृति कामपिपासितेन
तस्या मयाधररसः प्रचुरः प्रियायाः।
तृष्णा ततः प्रभृति मे द्विगुणत्वमेति
लावण्यमस्ति बहु तत्र किमपि चित्रम्॥ ६८।

क्व प्रस्थितासि करभोरु! घने निशीथे?
प्राणाधिको वसति यत्र जनः प्रियो मे।
एकाकिनी वद कथं न बिभेषि बाले!
नन्वस्ति पुंखितशरो मदनः सहायः॥ ६९॥

लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः।
मुग्धा कुड्मलिताननेन दधती वायुं स्थिता तस्य सा
भ्रान्त्या धूर्ततया च वेपथुमती तेनानिशं चुम्बिता॥७०॥

स्फुटतु हृदयं कामः कामं करोतु तनुं तनुं
न सखि! चटुलप्रेम्णा कार्यं पुनर्दयितेन मे।

इति सरभसं मानोद्रेकादुदीर्य्य वचस्तया
रमणपदवी शारङ्गाक्ष्या ससंभ्रममीक्षिता ॥ ७१ ॥

पश्याश्लेषविशीर्णचन्दनरजःपुञ्जप्रकर्षादियं
शय्या सम्प्रति कोमलाङ्गि ! कठिनेत्यारोप्य मां वञ्चसि ।
गाढौष्ठग्रहपीडनाकुलतया पादाग्रसंदंशके-
नाकृष्याम्बरमात्मनो यदुचितं धूर्तेन तत्प्रस्तुतम् ॥ ७२ ॥

कथमपि प्रत्यावृत्ते प्रिये स्खलितोत्तरे
विरहकृशया कृत्वा व्याजं प्रकल्पितमश्रुतम् ।
असहनसखीश्रोत्रप्राप्तिप्रमादससंभ्रमं
प्रचलितदृशा शून्ये गेहे समुच्छ्वसितं पुनः ॥ ७३ ॥

आदृष्टिप्रसरं प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया
विच्छिन्नेषु पथिष्वहःपरिणतौ ध्वान्ते समुन्मीलति ।
दत्त्वैकं सशुचा गृहं प्रतिपदं पान्थस्त्रियास्मिन् क्षणे
सोऽभूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥ ७४ ॥

आयाते दयिते मनोरथशतैर्नीत्वा कथञ्चिद्दिनं
वैदग्ध्याऽपगमाज्जडे परिजने दीर्घां कथां कुर्वति ।
दष्टास्मीत्यभिधाय सत्वरतरं व्याधूय चीनांशुकं
तन्वङ्ग्या रतिकातरेण मनसा नीतः प्रदीपः शमम् ॥ ७५ ॥

अनालोच्य प्रेम्णः परिणतिमनादृत्य सुहृद-
स्त्वया मुग्धे ! मानः मिमिति सरले प्रेयसि कृतः ।
समाकृष्टा ह्येते प्रलयदहनोद्भासुरशिखाः
स्वहस्तेनाङ्गारास्तदलमधुनारण्यरुदितैः ॥ ७६ ॥

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥७७॥
जाता नोत्कलिका स्तनौ न लुलितौ गात्रं न रोमाञ्चितं
वक्त्रं स्वेदकणाञ्चितं न सहसा यावत् शठेनामुना ।
दृष्टेनैव मनो हृतं धृतिमुषा प्राणेश्वरेणाद्य मे
तत्केनापि निरूप्य माननिपुणो मानः समाधीयताम्॥७८॥
दृष्टः कातरनेत्रया चिरतरं बद्ध्वाञ्जलिं याचितः
पश्चादंशुकपल्लवेन विधृतो निर्व्याजमालिङ्गितः ।
इत्याक्षिप्य यदा समस्तमघृणो गन्तुं प्रवृत्तः शठः
पूर्वं प्राणपरिग्रहो दयितया मुक्तस्ततो वल्लभः ॥ ७९ ॥
अङ्गुल्यग्रनखेन बाष्पसलिलं निक्षिप्य निक्षिप्य किं
तूष्णीं रोदिषि कोपने ! बहुतरं फुत्कृत्य रोदिष्यसि ।
यस्यास्ते पिशुनोपदेशवचनैर्मानेऽतिभूमिं गते
निर्विण्णोऽनुनयं प्रति प्रियतमो मध्यस्थतामेष्यति ॥ ८० ॥
तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता पादयोः
तस्यालापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया ।
पाणिभ्याञ्च तिरस्कृतः सपुलकः स्वेदोद्गमो गण्डयोः
सख्यः ! किं करवाणि यान्ति शतधा यत्कञ्चुके सन्धयः ॥८१॥
कृतो दूरादेव स्मितमधुरमभ्युद्गमविधिः
शिरस्याज्ञा न्यस्ता प्रतिवचनमुच्चैः प्रणमितम् ।

न दृष्टेः शैथिल्यं मिलन इति चेतो दहति मे
निगूढान्तःकोपात्कठिणहृदये संवृतिरियम् ॥ ८२ ॥
एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यः कोपपराङ्मुखं शयितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणात्
माभूत्सुप्त इवैष मन्दवलितग्रीवं पुनर्वीक्षितः ॥ ८३ ॥

मलयमरुतां व्राता याता विकासितमल्लिका-
परिमलभरो भग्नो ग्रीष्मस्त्वमुत्सहसे यदि ।
घन घटयितुं निःस्नेहं त्वां यएव निवर्तने
प्रभवति गवां किन्नश्छिन्नं सएव धनञ्जयः ॥ ८४ ॥

स्वं दृष्ट्वा करजक्षतं मधुमदक्षीवा विचार्य्येर्ष्यया
गच्छन्ती क्व नु गच्छसीति विधृता बाला पटान्ते मया ।
प्रत्यावृत्तमुखी सबाष्पनयना मां मुञ्च मुञ्चेति सा
कोपात्प्रस्फुरिताधरा यदवदत्तत् केन विस्मर्यते ॥ ८५ ॥

सालक्तकं शतदलाधिककान्तिरम्यं
रत्नौघधामनिकरारुणनूपुरञ्च ।
क्षिप्तं भृशं कुपितया तरलोत्पलाक्ष्या
सौभाग्यचिह्नमिव मूर्द्धि पदं विरेजे ॥ ८६ ॥

कपोले पत्रालीकरतलनिरोधेन मृदिता
निपीतो निःश्वासैरयममृतहृद्योऽधररसः ।
मुहुः कण्ठे लग्नस्तरलयति बाष्पस्तनतटं
प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम् ॥ ८७ ॥

लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले
वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोदयः ।
दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो
लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः॥८८॥

तस्मै महाविरहवह्निशिखावलीभि-
रापाण्डुरस्तनतटे हृदये प्रियायाः ।
रथ्यालिवीक्षणनिवेशितलोलदृष्टे-
र्नूनं छनच्छनिति बाष्पकणाः पतन्ति ॥ ८९ ॥

चिन्तामोहविनिश्चलेन मनसा मौनेन पादानतः
प्रत्याख्यानपराङ्मुखः प्रियतमो गन्तुं प्रवृत्तोऽधुना ।
सव्रीडैरलसैर्निरन्तरलुठद्बाष्पाकुलैर्लोचनैः
श्वासोत्कम्पकुचं निरीक्ष्य सुचिरं जीवाशया वारितः ॥९०॥

तन्वङ्ग्या गुरुसन्निधौ नयनजं यद्वारि संस्तम्भितं
तेनान्तर्गलितेन मन्मथशिखी सिक्तोऽनुषङ्गोद्भवः ।
मन्ये तस्य निरस्यमानकिरणस्यैषा मुखेनोद्गता
श्वासामोदसमाकुलालिनिकरव्याजेन धूमावलिः ॥ ९१ ॥

भ्रूभेदो रचितः चिरं नयनयोरभ्यस्तमामीलनं
रोद्धुं शिक्षितमादरेण हसितं मौनेऽभियोगः कृतः ।
धैर्यं कर्त्तुमपि स्थिरीकृतमिदं चेतः कथञ्चिन्मया
बद्धो मानपरिग्रहे परिकरः सिद्धिस्तु दैव स्थिता ॥ ९२ ॥

देशैरन्तरिता शतैश्च सरितामुर्वीभृतां काननै-
र्यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि ।

उद्ग्रीवश्चरणार्धरुद्धवसुधः कृत्वाश्रुपूर्णां दृशौ
तामाशां पथिकस्तथापि किमपि ध्यायन्मुहुः वीक्षते ॥ ८३ ॥

कोपस्त्वया हृदि कृतो यदि पङ्कजाक्षि !
सोऽस्तु प्रियस्तव किमत्र विधेयमन्यत् ।
आश्लेषमर्पय मदर्पितपूर्वमुच्चैः
मह्यं समर्पय मदर्पितचुम्बनञ्च ॥ ८४ ॥

ऊरुद्वयं मृगदृशः कदलस्य काण्डौ
मध्यञ्च वेदिरतुलं स्तनयुग्ममस्याः ।
लावण्यवारिपरिपूरितशातकुम्भ-
कुम्भौ मनोजनृपतेरभिषेचनाय ॥ ८५ ॥

चपलहृदये ! किं स्वातन्त्र्यात्तथा गृहमागतः
चरणपतितः प्रेमार्द्रार्द्रः प्रियः समुपेक्षितः ? ।
तदिदमधुना यावज्जीवं निरस्तसुखोदया
रुदितशरणा दुर्जातीनां सहस्व रुषां फलम् ॥ ८६ ॥

रात्रौ वारिभरालसाम्बुदरवोद्विग्नेन जाताश्रुणा
पान्थेनात्ममनोजदुःखपिशुनं गीतं तथोत्कण्ठया ।
आस्तां जीवितहारिणः प्रवसनालापस्य संकीर्त्तनं
मानस्यापि जलाञ्जलिः सरभसं लोकेन दत्तो यथा ॥८७॥

हारो जलार्द्रवसनं नलिनीदलानि
प्रालेयशीकरमुचस्तुहिनांशुभासः ।
यस्येन्धनानि सरसानि च चन्दनानि
निर्वाणमेष्यति कथं स मनोभवाग्निः ॥ ८८ ॥

तन्वी शरत्सिपथगा पुलिने कपोलौ
लोले दृशौ शफरचञ्चलखञ्जरीटौ ।
तद्बन्धनाय सुचिरार्पितसुभ्रुचाप-
चाण्डालपाशयुगलाविव शून्यकर्णौ ॥ ९९ ॥
हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले ।
मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः ॥ १०० ॥

[illegible]शतकं परिपूर्णम् ।

---

## शृङ्गारशतकम् ।

—०::०—

शम्भुस्वयम्भुहरयो हरिणेक्षणानां
येनाक्रियन्त सततं गृहकर्मदासाः ।
वाचामगोचरचरित्रविचित्रिताय
तस्मै नमो भगवते कुसुमायुधाय ॥ १ ॥
स्मितेन भावेन च लज्जया भिया
पराङ्मुखैरर्धकटाक्षवीक्षणैः ।
वचोभिरीर्ष्याकलहेन लीलया
समस्तभावैः खलु बन्धनं स्त्रियः ॥ २ ॥
भ्रूचातुर्यात्कुञ्चिताक्षाः कटाक्षाः
स्निग्धा वाचो लज्जिताश्चैव हासाः ।

लीलामन्दं प्रस्थितं च स्थितञ्च
स्त्रीणामेतत् भूषणञ्चायुधञ्च ॥ ३ ॥

क्वचित्सुभ्रूभङ्गैः क्वचिदपि च लज्जापरिणतैः
क्वचिद्भीतित्रस्तैः क्वचिदपि च लीलाविलसितैः ।
नवोढानामेभिर्वदनकमलैर्नेत्रचलितैः
स्फुरन्नीलालीनाप्रकरपरिपूर्णा इव दिशः ॥ ४ ॥

वक्त्रं चन्द्रविकासि पङ्कजपरीहासक्षमे लोचने
वर्णः स्वर्णमपाकरिष्णुरलिनीजिष्णुः कचानाञ्चयः ।
वक्षोजाविभकुम्भसम्भ्रमहरौ गुर्वी नितम्बस्थली
वाचां हारि च मार्दवं युवतिषु स्वाभाविकं मण्डनम् ॥ ५ ॥

स्मितं किञ्चिद्वक्त्रे सरलतरलो दृष्टिविभवः ।
परिस्पन्दो वाचामभिनवविलासोक्तिसरसः ॥ ६ ॥

गतीनामारम्भः किसलयितलीलापरिकरः ।
स्पृशन्त्यास्तारुण्यं किमिह न हि रम्यं मृगदृशः ॥ ७ ॥

द्रष्टव्येषु किमुत्तमं ? मृगदृशां प्रेमप्रसन्नं मुखम्
घ्रातव्येष्वपि किं ? तदास्यपवनः श्राव्येषु किं? तद्वचः ।
किं स्वाद्येषु ? तदोष्ठपल्लवरसः स्पृश्येषु किं ? तत्तनुः
ध्येयं किं ? नवयौवनं सहृदयैः सर्वत्र तद्विभ्रमः ॥ ८ ॥

एताः स्खलद्वलयसंहतिमेखलोत्थ-
झङ्कारनूपुररवाहृतराजहंसाः ।
कुर्वन्ति कस्य न मनो विवशं तरुण्यो
वित्रस्तमुग्धहरिणीसदृशैः कटाक्षैः ॥ ९ ॥

कुङ्कुमपङ्ककलङ्कितदेहा गौरपयोधरकम्पितहारा ।
नूपुरहंसरणत्पदपद्मा कं न वशीकुरुते भुवि रामा ॥१०॥

नूनं हि ते कविवरा विपरीतबोधा
ये नित्यमाहुरबला इति कामिनीनाम् ।
याभिर्विलोलतरतारकदृष्टिपातैः
शक्रादयोऽपि विजितास्त्वबलाः कथं ताः ॥ ११ ॥

नूनमाज्ञाकरस्तस्याः सुभ्रुवो मकरध्वजः ।
यतस्तन्नेत्रसञ्चारसूचितेषु प्रवर्त्तते ॥ १२ ॥

केशाः संयमिनः श्रुतेरपि परं पारं गते लोचने
अन्तर्वक्त्रमपि स्वभावशुचिभिः कीर्णं द्विजानां गणैः ।
मुक्तानां सतताधिवासरुचिरं वक्षोजकुम्भद्वयम्
इत्थं तन्वि ! वपुः प्रशान्तमपि ते क्षोभं करोत्येव नः ॥ १३॥

मुग्धे ! धनुष्मती केयमपूर्वापि च दृश्यते ।
यथाविध्यसि चेतांसि गुणैरेव न शायकैः ॥ १४ ॥

सति प्रदीपे सत्यग्नौ सत्सु ताराखीन्दुषु ।
विना मे मृगशावाक्ष्या तमोभूतमिदं जगत् ॥ १५ ॥

यद्वृत्तस्तनभार एष तरले नेत्रे चले भ्रूलते
रागान्धेषु तदोष्ठपल्लवमिदं कुर्वन्तु नाम व्यथाम् ।
सौभाग्याक्षरपंक्तिरिव लिखिता पुष्पायुधेन स्वयं
मध्यस्थापि करोति तापमधिकं रोमावली केन सा ॥१६॥

गुरुणा स्तनभारेण मुखचन्द्रेण भास्वता ।
शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा ॥ १७ ॥

तस्याः स्तनौ यदि घनौ जघनं विहारि
वक्त्रं च चारु तव चित्त किमाकुलत्वम् ।
पुण्यं कुरुष्व यदि तेषु तवास्ति वाञ्छा
पुण्यैर्विना न हि भवन्ति समीहितार्थाः ॥ १८ ॥

मात्सर्यमुत्सार्य्य विचार्य्य कार्य्यम्
आर्य्याः समर्य्यादमिदं वदन्तु ।
सेव्या नितम्बाः किमु भूधराणाम् ?
उत स्मरस्मेरविलासिनीनाम् ? ॥ १९ ॥

संसारेऽस्मिन्नसारे परिणतितरले द्वे गती पण्डितानां
तत्त्वज्ञानामृताम्भः प्लुतललितधियां यातु कालः कदाचित् ।
नोचेन्मुग्धाङ्गनानां स्तनजघनभराभोगसम्भोगिनीनां
स्थूलोपस्थस्थलीषु स्थगितकरतलस्पर्शलोलोद्यतानाम् ॥२०॥

मुखेन चन्द्रकान्तेन महानीलैः शिरोरुहैः ।
पाणिभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा ॥ २१ ॥

संमोहयन्ति मदयन्ति विडम्बयन्ति
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ।
एताः प्रविश्य सदयं हृदयं नराणां
किन्नाम वामनयना न समाचरन्ति ॥ २२ ॥

विश्रम्य विश्रम्य वनद्रुमाणां
छायासु तन्वी विचचार काचित् ।
स्तनोत्तरीयेण करोद्धृतेन
निवारयन्ती शशिनो मयूखान् ॥ २३ ॥

अदर्शने दर्शनमात्रकामा
दृष्टा परिष्वङ्गरसैकलोला ।
आलिङ्गितायां पुनरायताक्ष्याम्
आशास्महे विग्रहयोरभेदम् ॥ २४ ॥
मालती शिरसि जृम्भणोन्मुखी
चन्दनं वपुषि कुङ्कुमाविलम्
वक्षसि प्रियतमा मनोहरा
स्वर्ग एष परिशिष्ट आगतः ॥ २५ ॥

ऋतुवर्णनं तत्रादौ वसन्तः ।

परिमलभृतो वाताः शाखा नवाङ्कुरकोटयो
मधुरविरुतोत्कण्ठा वाचः प्रियाः पिकपक्षिणाम् ।
विरलसुरतस्वेदोद्रेका वधूवदनेन्दवः
प्रसरति मधौ रात्र्यां जातो न कस्य गुणोदयः ॥ २६ ॥
मधुरयं मधुरैरपि कोकिला-
कलकलैर्मलयस्य च वायुभिः ।
विरहिणः प्रणिहन्ति शरीरिणो
विपदि हन्त सुधापि विषायते ॥ २७ ॥
आवासः किल किञ्चिदेव दयितापार्श्वे विलासालसः
कर्णे कोकिलकाकलीकलरवस्मेरा लतामण्डपाः ।
गोष्ठीसत्कविभिः समं कतिपयैः सेव्याः सितांशोः कराः
केषाञ्चित्सुखयन्ति नेत्रहृदये चैत्रे विचित्राः क्षपाः ॥ २८ ॥

पान्थस्त्रीविरहानलाहुतिकलामातन्वती मञ्जरी
मा कुन्देषु पिकाङ्गनाभिरधुना सोत्कण्ठमालोक्यते ।
अप्येते नवपाटलाः परिमलाः प्राग्भारपाठच्चराः
वान्ति क्लान्तिहराः सुशीतलतराः श्रीखण्डशैलानिलाः ॥१९॥
सहकारकुसुमकेसरनिकरभरामोदमूर्च्छिता दिगन्ते ।
मधुरमधुविधुरमधुपे मधौ भवेदुत्कण्ठा ॥ २० ॥

ग्रीष्मः ।

अच्छाच्छचन्दनरसार्द्रकरा मृगाक्षी
धारागृहाणि कुसुमानि च कौमुदी च ।
मन्दो मरुत्सुमनसः शुचि हर्म्यपृष्ठं
ग्रीष्मे मदञ्च मदनञ्च विवर्द्धयन्ति ॥ २१ ॥
स्रजो हृद्या मोदव्यजनपवनश्चन्द्रकिरणः
परागः कासारो मलयजरजः सिन्धुविशदम् ।
शुचिः सौधोत्सङ्गः प्रतनु वसनं पङ्कजदृशो
निदाघे तूर्णं तत्सुखमुपलभन्ते सुकृतिनः ॥ २२ ॥
सुधाशुभ्रन्धाम स्फुरदमलरश्मिः शशधरः
प्रियावक्त्राम्भोजं मलयजरजश्चातिसुरभि ।
स्रजो हृद्याः कौन्दास्तदिदमखिलं रागिणि जने
करोत्यन्तःक्षोभं न तु विषयसंसर्गविमुखे ॥ २३ ॥

वर्षासमयः ।

तरुणी वेश्या दीपितकामा विकसज्जातीपुष्पसुगन्धि ।
उन्नतपीनपयोधरभारा प्रावृट् कुरुते कस्य न हर्षम् ॥२४॥

वियदुपचितमेघं भूमयः कन्दलिन्यो
नवकुटजकदम्बामोदिनो गन्धवाहाः ।
शिखिकुलकलकेका एव रम्या वनान्ताः
सुखिनमसुखिनं वा सर्वमुत्कण्ठयन्ति ॥ २५ ॥

उपरि घनं घनपटलं तिर्यग्गिरयोऽपि नर्तितमयूराः
वसुधा कन्दलधवला दृष्टिं पथिकः क्व पातयतु ॥ २६ ॥

इतोविद्युद्वल्लीविलसितमितः केतकितरोः
स्फुरद्गन्धः प्रोद्यज्जलदनिनदस्फूर्जितमितः ।
इतः केकिक्रीडाकलकलरवः पक्ष्मलदृशां
कथं यास्यन्त्येते विरहदिवसाः सम्भृतरसाः ॥ २७ ॥

अमुष्मिन् संसारे त्वमसि नभसि प्रौढजलद
ध्वनिप्रासे तस्मिन् पतति दृषदां तीरनिचये ।
इदं सौदामिन्याः कनककमनीयं विलसितं
मुदञ्च ग्लानिञ्च प्रथयति पथिष्वेव सुदृशाम् ॥ २८ ॥

आसारेषु न हर्म्यतः प्रियतमैर्यातुं यदा शक्यते
शीतोत्कम्पनिमित्तमायतदृशो गाढं समालिङ्ग्यते ।
जाताः शीतलशीकराश्च मरुतो वात्यन्तखेदच्छिदो
धन्यानां वत ! दुर्दिनं सुदिनतां याति प्रियासङ्गमे ॥२९॥

## शरद् ।

अर्द्धं नीत्वा निशायाः सरभससुरतायासखिन्नश्लथाङ्गः
प्रोद्भूतासह्यतृष्णो मधुमदनिरतो हर्म्यपृष्ठे विविक्ते ।

सम्भोगक्लान्तकान्ताशिथिलभुजलतातर्जितं कर्करान्तो
ज्योत्स्नाभिन्नाधरांशं पिबति न सलिलं शारदं मन्दभाग्यः॥४०
हेमन्ते दधिदुग्धसर्पिरशना माञ्जिष्ठवासोधृताः
काश्मीरद्रवसान्द्रदिग्धवपुषः खिन्ना विचित्रै रतैः ।
पीनोरःस्थलकामिनीजनकृताश्लेषा गृहाभ्यन्तरे
ताम्बूलीदलपूगपूरितमुखा धन्याः सुखं शेरते ॥ ४१ ॥

शिशिरः ।

चुम्बन्तो गण्डभित्तीरलकवति मुखे शीत्कृतान्यादधाना
वक्षस्युत्कञ्चुकेषु स्तनभरपुलकोद्भेदमापादयन्तः ।
ऊरूनाकम्पयन्तः पृथुजघनतटात् स्रंसयन्तोऽंशुकानि
व्यक्तं कान्ताजनानां विटचरितं कृतः शैशिरा वान्ति वाताः॥४२॥
केशानाकलयन् दृशो मुकुलयन् वासो बलादाक्षिपन्
आतन्वन् पुलकोद्गमं प्रकटयन्नालिङ्ग्य कम्पं शनैः ।
वारंवारमुदारशीत्कृतकृतो दन्तच्छदान् पीडयन्
प्रायः शैशिर एष सम्प्रति मरुत् कान्तासु कान्तायते॥ ४३ ॥
आसाराः सन्ततोऽमी विरतिविरसायासविषया
जुगुप्सन्त्यां यद्वा ; ननु सकलदोषास्पदमिति ।
तथाप्यन्तस्तत्त्वे प्रणिहितधियामप्यतिबल-
स्त्वदीयो नाख्येयः स्फुरति हृदये कोऽपि महिमा ॥४४॥
भवन्तो वेदान्तप्रणिहितधियां सन्तु गुरवो
विदग्धालापानां वयमपि कवीनामनुचराः ।

तथाप्येतद्भूमौ नहि परहितात्पुण्यमधिकं
न चास्मिन् संसारे कुवलयदृशो रम्यमपरम् ॥ ४५ ॥

किमिह बहुभिरुक्तैर्युक्तिशून्यैः प्रलापै-
र्द्वयमिह पुरुषाणां सर्वदा सेवनीयम्।
अभिनवमदलीलालालसं सुन्दरीणां
स्तनभरपरिखिन्नं यौवनं वा वनं वा ॥ ४६ ॥

सत्यं जना! वच्मि न पक्षपातात्
लोकेषु सर्वेषु च तथ्यमेतत्।
नान्यन्मनोहारि नितम्बिनीभ्यो
दुःखैकहेतुर्न च कश्चिदन्यः ॥ ४७ ॥

प्राङ्मामेति मनागमानितगुणं जाताभिलाषं ततः
सव्रीडं तदनु श्लथोद्यतमनु प्रत्यस्तधैर्य्यं पुनः।
प्रेमार्द्रःस्पृहणीयनिर्भररहः क्रीड़ाप्रगल्भा ततो
निःशङ्काङ्गविकर्षणाधिकसुखं रम्यं कुलस्त्रीरतम् ॥ ४८ ॥

उरसि निपतितानां स्रस्तधम्मिल्लकानां
मुकुलितनयनानां किञ्चिदुन्मीलितानां
सुरतजनितखेदस्विन्नगण्डस्थलीनां
अधरमधु वधूनां भाग्यवन्तः पिबन्ति ॥ ४९ ॥

आमीलितनयनानां यः
सुरतरसोऽनुसंविदं कुरुते।
मिथुनैर्मिथोऽवधारितमवित
थमिदमेव कामनिर्वहणम् ॥ ५० ॥

इदमनुचितक्रमश्च पुंसां
यदिह जरास्वपि मान्मथा विकाराः
तदपि च न कृतं नितम्बिनीनां
स्तनपतनावधि जीवितं रतं वा ॥ ५१ ॥

एतत्कामफलं लोके यद्द्वयोरेकचित्तता
अन्यचित्तकृते कामे शवयोरिव सङ्गमः ॥ ५२ ॥

प्रणयमधुराः प्रेमोद्गाढरसादलसास्तथा
भणन्ति मधुराः मुग्धप्रायाः प्रकाशितप्रमदाः ।
प्रकृतिसुभगा विस्रंभार्हं स्मरोदयदायिनः
रहसि किमपि स्वैरालापा हरन्ति मृगदृशाम् ॥ ५३ ॥

आवासः क्रियतां गाङ्गे पापहारिणि वारिणि
स्तनमध्ये तरुण्या वा मनोहारिणि हारिणि ॥ ५४ ॥

प्रियपुरतो युवतीनां तावत्पदमातनोतु हृदि मानः ।
भवति न यावच्चन्दनतरुसुरभिर्मधुनिर्मलः पवनः ॥ ५५ ॥

## दुर्विरक्तप्रशंसा ।

तावदेव कृतिनामपि स्फुरत्येष निर्मलविवेकदीपकः ।
यावदेव न कुरङ्गचक्षुषां ताड्यते चपललोचनाञ्चलैः ॥ ५६ ॥

वचसि भवति सङ्गत्यागमुद्दिश्य वार्ता
श्रुतिमुखरमुखानां केवलं पण्डितानाम् ।
जघनमरुणरत्नग्रन्थिकाञ्चीकलापं
कुवलयनयनानां को विहातुं समर्थः ? ॥ ५७ ॥

स्वपरप्रतारकोऽसौ निन्दति योऽलीकं पण्डितो युवतीः ।
यस्मात्तपसोऽपि फलं स्वर्गः स्वर्गस्यापि फलं तथा स रसः॥५८॥

मत्तेभकुम्भदलने भुवि सन्ति शूराः
केचित्प्रचण्डमृगराजवधेऽपि दक्षाः ।
किन्तु ब्रवीमि बलिनां पुरतः प्रसह्य
कन्दर्पदर्पदलने विरला मनुष्याः ॥ ५९ ॥

सन्मार्गे तावदास्ते प्रभवति च नरस्तावदेवेन्द्रियाणाम्
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ।
भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति॥६०॥

उन्मत्तप्रेमसंरम्भादारभन्ते यदङ्गनाः ।
तत्र प्रत्यूहमाधातुं ब्रह्मापि खलु कातरः ॥ ६१ ॥

तावन्महत्त्वं पाण्डित्यं कुलीनत्वं विवेकिता ।
यावज्ज्वलति नाङ्गेषु हतः पञ्चेषुपावकः ॥ ६२ ॥

शास्त्रज्ञोऽपि प्रथितविनयोऽप्यात्मबोधोऽपि बाढम्
संसारेऽस्मिन् भवति विरलो भाजनं सद्गतीनाम् ।
येनैतस्मिन्निरयनगरद्वारमुद्घाटयन्ती
वामाक्षीणां भवति कुटिला भ्रूलता कुञ्चिकेव ॥ ६३ ॥

कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो
व्रणी पूयक्लिन्नः कृमिकुलशतैराचिततनुः ।
क्षुधाक्षामो जीर्णः पिठरककपालार्पितगलः
शुनीमन्वेति श्वा हतमपि निहन्त्येव मदनः ॥ ६४ ॥

स्त्रीमुद्रां झषकेतनस्य जननीं सर्वार्थसम्पत्करीं
ये मूढाः प्रविहाय यान्ति कुधियो मिथ्याफलान्वेषिणः।
ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः
केचित्पञ्चशिखीकृताश्च जटिलाः कापालिकाश्चापरे॥६५॥
विश्वामित्रपराशरप्रभृतयो वाताम्बुपर्णाशना
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः।
शाल्यन्नं सघृतं पयोदधियुतं ये भुञ्जते मानवा-
स्तेषामिन्द्रियनिग्रहो यदि भवेत् विन्ध्यस्तरेत्सागरम्॥६६

स्त्रीणां परित्यागप्रशंसा।

संसारेऽस्मिन्नसारे कुनृपतिभवनद्वारसेवावलम्ब-
व्यासङ्गव्यस्तधैर्याः कथममलधियो मानसं संविदध्युः ?
यद्येताः प्रोद्यदिन्दुद्युतिनिचयभृतो न स्युरम्भोजनेत्राः
प्रङ्खत्काञ्चीकलापाः स्तनभरविनमन्मध्यभागास्तरुण्यः॥६७॥
सिद्धाध्यासितकन्दरे हरवृषस्कन्धावगाढद्रुमे
गङ्गाधौतशिलातले हिमवतः स्थाने स्थितः श्रेयसि।
कः कुर्वीत शिरःप्रणाममलिनं म्लानं मनस्वी जनो
यद्युत्त्रस्तकुरङ्गशावनयना न स्युः स्मरास्त्रं स्त्रियः॥ ६८॥
संसार! तव निस्तारपदवी न दवीयसी।
अन्तरा दुस्तरा न स्युर्यदि रे! मदिरेक्षणाः॥ ६९॥

यौवनप्रशंसा।

राजन्! तृष्णाम्बुराशेर्न हि जगति गतः कश्चिदेवावसानम्
को वार्थोऽर्थैः प्रभूतैः स्ववपुषि गलिते यौवने सानुरागे।

गच्छामः सद्म यावद्विकसितमुदेन्दीवरालोकनीनाम्
आक्रम्याक्रम्य रूपं झटिति न जरया लुप्यते प्रेयसीनाम्॥॥७०॥

रागस्यागारमेकं नरकशतमहादुःखसम्प्राप्तिहेतु-
र्मोहस्योत्पत्तिबीजं जलधरपटलं ज्ञानताराधिपस्य।
कन्दर्पस्यैकमित्रं प्रकटितविविधस्पष्टदोषप्रबन्धम्
लोकेऽस्मिन्नह्यनर्थं निजकुलदहनं यौवनादन्यदस्ति॥७१॥

शृङ्गारद्रुमनीरदे बहुतरक्रीड़ारसस्रोतसि।
प्रद्युम्नप्रियबान्धवे चतुरतामुक्ताफलोदन्वति।
तन्वीनेत्रचकोरपारणविधौ सौभाग्यलक्ष्मीनिधौ
धन्यः कोऽपि न विक्रियां कलयति प्राप्ते नवे यौवने॥७२॥

कामिनीगर्हणं।

कान्तेत्युत्पललोचनेति विपुलश्रोणीभरेत्युत्सुकः
पीनोत्तुङ्गपयोधरेति सुमुखाम्भोजेति सुभ्रूरिति।
दृष्ट्वा माद्यति मोदतेऽतिरमते प्रस्तौति जानन्नपि
प्रत्यक्षाशुचिपुत्रिकां स्त्रियमहो! मोहस्य दुश्चेष्टितम्॥७३॥

श्रुता भवति तापाय दृष्टा चोन्मादवर्द्धिनी।
स्पृष्टा भवति मोहाय सा नाम दयिता कथम्॥ ७४ ॥

तावदेवामृतमयी यावल्लोचनगोचरा
चक्षुःपथादपगता विषादप्यतिरिच्यते ॥ ७५ ॥

नामृतं न विषं किञ्चिदेकां मुक्ता नितम्बिनीम्।
सैवामृतलता रक्ता विरक्ता विषवल्लरी ॥ ७६ ॥

आवर्तः संशयानामविनयभवनं पत्तनं साहसानाम्
दोषाणां सन्निधानं कपटशतमयं क्षेत्रमप्रत्ययानाम् ।
स्वर्गद्वारस्य विघ्नो नरकपुरमुखं सर्वमायाकरण्डं
स्त्रीयन्त्रं केन सृष्टं विषममृतमयं प्राणिनां मोहपाशः ॥ ७७ ॥
न सत्येन शशाङ्क एष वदनीभूतो नवेन्दीवर-
द्वन्द्वे लोचनतां गते न कनकैरप्यङ्गयष्टिः कृता ।
किन्त्वेवं कविभिः प्रतारितमनास्तत्त्वं विजानन्नपि
त्वङ्मांसास्थिमयं वपुर्मृगदृशां मन्दो जनः सेवते ॥ ७८ ॥
लीलावतीनां सहजा विलासास्त एव मूढस्य हृदि स्फुरन्ति ।
रागो नलिन्या हि निसर्गसिद्धस्तत्र भ्रमत्येव मुदा षडंघ्रिः ॥ ७९ ॥
यदेतत् पूर्णेन्दुद्युतिहरपदाराकृतिवरं
मुखाब्जं तन्वङ्ग्याः किल वसति तत्राधरमधु ।
इदं तावत्पाकं द्रुमफलमिवातीव विरसम्
व्यतीतेऽस्मिन् काले विषमिव भविष्यत्यसुखदम् ॥ ८० ॥
उन्मीलत्त्रिवलीतरङ्गनिलया प्रोत्तुङ्गपीनस्तन-
द्वन्द्वेनोद्यतचक्रवाकमिथुनाकाराम्बुजोल्लासिनी ।
कान्ताकारधरा नदीयमभितः क्रूराशया नेष्यते
संसारार्णवमज्जनं यदि जना दूरात् परित्यज्यताम् ॥ ८१ ॥
जल्पन्ति सार्धमन्येन पश्यन्त्यन्यं सविभ्रमाः ।
हृदये चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ? ॥ ८२ ॥
मधु तिष्ठति वाचि योषितां हृदि हालाहलमेव केवलम् ।
अतएव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते ॥ ८३ ॥

अपसर सखे ! दूरं तस्मात् कटाक्षविषानलात्
प्रकृतिविषमाद्योषित्सर्पाद्विलासफणाभृतः ।
इतरफणिना दष्टाः शक्याश्चिकित्सितुमौषधै-
श्चतुरवनिताभोगिग्रस्तं त्यजन्ति हि मन्त्रिणः ॥ ८४ ॥

विस्तारितं मकरकेतनधीवरेण
स्त्रीसंज्ञितं बडिशमत्र भवाम्बुराशौ ।
येनाचिरात्तदधरामिषलोलमर्त्य-
मत्स्यान् विकृष्य पचतीत्यनुरागवह्नौ ॥ ८५ ॥

कामिनीकायकान्तारे कुचपर्वतदुर्गमे ।
मा संचर मनःपान्थ ! तत्रास्ते स्मरतस्करः ॥ ८६ ॥

आदीर्घेण चलेन वक्रगतिना तेजस्विना भोगिना
नीलाब्जद्युतिवाहिना वरमहं दष्टो न तच्चक्षुषा ।
धन्याः सन्ति चिकित्सका दिशि दिशि प्रायेण धर्मार्थिनो
मुग्धाक्षीक्षणवीक्षितस्य न हि मे वैद्यो न चाप्यौषधम् ॥८७॥

इह हि मधुरगीतं नृत्यमेतद्रसोऽपि
स्फुरति परिमलोऽसौ स्पर्श एष स्तनानाम् ।
इति हतपरमार्थैरिन्द्रियैर्भ्राम्यमाणै-
र्हितकरणदक्षैः पञ्चभिर्वञ्चितोऽसि ॥ ८८ ॥

न गम्यो मन्त्राणां न च भवति भैषज्यविषयो
न चापि प्रध्वंसं व्रजति विविधैः शान्तिशतकैः ।
भ्रमावेगादङ्गे किमपि विदधद्भव्यमसमः
स्मरापस्मारोऽयम्भ्रमयति दृशं घूर्णयति च ॥ ८९ ॥

जात्यन्धाय च दुर्मुखाय च जराजीर्णाखिलाङ्गाय च
ग्रामीणाय च दुष्कुलाय च गलत्कुष्ठाभिभूताय च ।
यच्छन्तीषु मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया
पण्यस्त्रीषु विवेककल्पलतिकाशस्त्रीषु रज्येत कः ॥ ९० ॥
वेश्यासौ मदनज्वालारूपेन्धनसमेधिता ।
कामिभिर्यत्र हूयन्ते यौवनानि धनानि च ॥ ९१ ॥
कश्चुम्बति कुलपुरुषो वेश्याधरपल्लवं मनोज्ञमपि ।
चारभटचौरचेटकनटविटनिष्ठीवनशरावम् ॥ ९२ ॥

सुचरित्रप्रशंसा ।

धन्यास्त एव तरलायतलोचनानां
तारुण्यपूर्णघनपीनपयोधराणाम् ।
क्षामोदरोपरिलसत्त्रिवलीलतानां
दृष्ट्वाकृतिं विकृतिमेति मनो न येषाम् ॥ ९३ ॥
बाले ! लीलामुकुलितममी सुन्दरा दृष्टिपाताः
किं क्षिप्यन्ते विरम विरम व्यर्थ एष श्रमस्ते ।
संप्रत्यन्ये वयमुपरतं बाल्यमास्था वनान्ते
क्षान्तो मोहस्तृणमिव जगज्जालमालोकयामः ॥ ९४ ॥
इयं बाला मां प्रत्यनवरतमिन्दीवरदल-
प्रभाचौरं चक्षुः क्षिपति किमभिप्रेतमनया ।
गतो मोहोऽस्माकं स्मरसमरबाणव्यतिकर-
ज्वरज्वालाः शान्तास्तदपि न वराकी विरमति ॥ ९५ ॥

शुभ्रं सद्मसविभ्रमा युवतयः श्वेतातपत्रोज्ज्वला
लक्ष्मीरित्यनुभूयते स्थिरमिव स्फीते शुभे कर्म्मणि।
विच्छिन्ने नितरामनङ्गकलहक्रीडात्रुटत्तन्तु किम्
मुक्ताजालमिव प्रयाति झटिति भ्रश्यद्दिशो दृश्यताम् ॥ ९६ ॥

सदा योगाभ्यासव्यसनवशयोरात्ममनसो-
रविच्छिन्ना मैत्री स्फुरति यमिनस्तस्य किमु तैः।
प्रियाणामालापैरधरमधुभिर्वक्त्रविधुभिः
सनिश्वासामोदैः सकुचकलशाश्लेषसुरतैः ॥ ९७ ॥

किं कन्दर्प! करं कदर्थयसि? किं कोदण्डझङ्कारितैः?
रे रे कोकिल! कोमलकलरवं किं त्वं वृथा भाषसे?
मुग्धे! स्निग्धविदग्धमुग्धमधुरैर्लोलैः कटाक्षैरलं?
चेतः सम्प्रति चन्द्रचूडचरणध्यानामृते वर्त्तते ॥ ९८ ॥

यदासीदज्ञानं स्मरतिमिरसञ्चारजनितं
तदा सर्वं नारीमयमिदमशेषं जगदभूत्।
इदानीमस्माकं पटुतरविवेकाञ्जनदृशां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ ९९ ॥

यां चिन्तयामि सततं मयि सा विरक्ता
सा चान्यमिच्छति जनं स जनोऽन्य रक्तः।
अस्मत् कृतेऽपि परितुष्यति काचिदन्या
धिक् ताञ्च तञ्च मदनञ्च इमाञ्च माञ्च ॥ २०० ॥

इति श्रीभर्तृहरिविरचितं शृङ्गारशतकं समाप्तम्।

# दृष्टान्तशतकम् ।

शिवस्मरणमेवैकं संसारान्तकनाशनम् ।
घनौघो घोरदावाग्नि-निर्वापणपटुर्भवेत् ॥ १ ॥
साधुरेव प्रवीणः स्यात्सद्गुणामृतवर्णने ।
नवचूताङ्कुरास्वादकुशलः कोकिलः किल ॥ २ ॥
दुर्जनो दूषयत्येव सतां गुणगणं क्षणात् ।
मलिनीकुरुते धूमः सर्वथा विमलाम्बरम् ॥ ३ ॥
यथा दोषो विभात्यस्य जनस्य न तथा गुणः ।
प्रायः कलङ्क एवेन्दोः प्रस्फुटो न प्रसन्नता ॥ ४ ॥
विवेक एव व्यसनं पुंसां क्षययितुं क्षमः ।
अपहर्त्तुं समर्थोऽसौ रविरेव निशातमः ॥ ५ ॥
प्रायः सन्त्युपदेशार्हा धीमन्तो न जडाशयाः ।
तिलाः कुसुमसौगन्ध्यवाहिनो न यवाः क्वचित् ॥ ६ ॥
चिन्त्यते नयएवादावमन्दं समुपेप्सुभिः ।
विनम्य पूर्वं सिंहोऽपि हन्ति हस्तिनमोजसा ॥ ७ ॥
संस्थितस्य गुणोत्कर्षः प्रायः प्रस्फुरति स्फुटम् ।
दग्धस्यागुरुखण्डस्य स्फारि भवति सौरभम् ॥ ८ ॥
मनस्विहृदयं धत्ते रोषेणैव प्रसन्नताम् ।
भस्मना ज्वलदङ्गारः प्रसादं लभतेतराम् ॥ ९ ॥

उत्तमः क्लेशविक्षोभं क्षमः सोढुं नहीतरः ।
मणिरेव महाशाणघर्षणं नतु मृत्कणः ॥ १० ॥
स्वजातीयं विना वैरी न जय्यः स्यात् कदाचन ।
विना वज्रमणिं मुक्तामणिर्भेद्यः कथं भवेत् ॥ ११ ॥
सज्जना एव साधूनां प्रथयन्ति गुणोत्करम् ।
पुष्पाणां सौरभं प्रायस्तनुते दिक्षु मारुतः ॥ १२ ॥
उपकर्त्तुं यथा स्वल्पः समर्थो न तथा महान् ।
प्रायः कूपस्तृषां हन्ति सततं न तु वारिधिः ॥ १३ ॥
सति शीले गुणा भान्ति पुंसां शौर्यादयो यथा ।
यौवने सदलङ्काराः शोभाम्बिभ्रति सुभ्रुवः ॥ १४ ॥
जड़ः प्रभवति प्रायो दुःखं बिभ्रति साधवः ।
शीतांशावुदिते पद्माः सङ्कोचं यान्ति वारिणि ॥ १५ ॥
गुणेन स्पृहणीयः स्यान्न रूपेण युतो नरः ।
सौगन्धहीनं नादेयं पुष्पं कान्तमपि क्वचित् ॥ १६ ॥
कश्चित् कस्यचिदेव स्यात् सुहृद्विस्रम्भभाजनम् ।
पद्मं विकासयत्यर्कः सङ्कोचयति कैरवम् ॥ १७ ॥
ईश्वराः पिशुनान् शश्वद्विषन्तीति किमद्भुतम् ।
प्रायो निधय एवाहीन् द्विजिह्वान् दधतितराम् ॥ १८ ॥
संपद्यास्ते परैः साकं विपदि स्वजनैर्जड़ः ।
जृम्भत्यम्भोरुहं भृङ्गः शुष्यत्युदकशैवलैः ॥ १९ ॥
नीचावमानमलिनां प्रभुंक्ते सम्पदं पुमान् ।
लशुनाक्तां सकर्पूरचर्चां वितनुते तनौ ॥ २० ॥

व्यसनानन्तरं सौख्यं स्वल्पमप्यधिकं भवेत् ।
कषायरसमास्वाद्य स्वादुतीताम्बु विन्दते ॥ २१ ॥
गुणानामन्तरं प्रायस्तज्ज्ञो जानाति नेतरः ।
मालतीमल्लिकामोदं घ्राणं वेत्ति न लोचनम् ॥ २२ ॥
प्रभूतवयसः पुंसो धियः पाकः प्रवर्त्तते ।
जीर्णस्य चन्दनतरोरामोद उपजायते ॥ २३ ॥
कामाय स्पृहयत्यात्मा संयतोऽपि मनीषिणः ।
वीथीनियमितोऽप्युच्चा शष्पमासाद्य धावति ॥ २४ ॥
धनागमेऽधिकं पुंसां लोभमभ्येति मानसम् ।
निदाघकाले: प्रालेयः प्रायः शैत्यं वहत्यलम् ॥ २५ ॥
सहजोऽपि गुणः पुंसां साधुवादेन वर्धते ।
कामं सुरसलेपेन कान्तिं वहति काञ्चनम् ॥ २६ ॥
निन्दां यः कुरुते साधोस्तथा स्वं दूषयत्यसौ ।
खे भूतिं यस्त्यजेदुच्चैर्मूर्ध्नि तस्यैव सा पतेत् ॥ २७ ॥
स्वभावं नैव मुञ्चन्ति सन्तः संसर्गतोऽसताम् ।
न त्यजन्ति रुतं मञ्जु काकसम्पर्कतः पिकाः ॥ २८ ॥
सम्पत्तौ कर्कशं चित्तं खलस्यापदि कोमलम् ।
शीतलं कठिनं प्रायस्तप्तं मृदु भवत्ययः ॥ २९ ॥
प्रायः प्रकुप्यतितरां प्रीत्यैव प्रखलो जनः ।
नयनं स्नेहसम्पर्कात्कालुष्यं समुपैत्यलम् ॥ ३० ॥
शुभं वाप्यशुभं कर्म फलकालमुपेक्षते ।
शरद्येव फलत्याशु शालिर्न सुरभौ क्वचित् ॥ ३१ ॥

भोगेच्छा नोपभोगेन भोगिनां जातु शाम्यति।
लवणेनान्तरालेन तृष्णा प्रत्युत जायते॥ ३२॥
दुर्लभोऽप्युत्तमः प्रायः स्वजातीयेन लभ्यते।
कर्णकोटरगं वारि वारिणैवावकृष्यते॥ ३३॥
जन्तोर्निरुपभोगस्य दृश्यते भुवि कृच्छ्रता।
वाताशिनो द्विजिह्वत्वं विहितं पश्य वेधसा॥ ३४॥
उर्जितं सज्जनं दृष्ट्वा द्वेष्टि नीचः पुनः पुनः
कवलीकुरुते स्वस्थं विधुं दिवि विधुन्तुदः॥ ३५॥
न लभन्ते विनोद्योगं जन्तवः सम्पदां पदम्।
सुराः क्षीरोदविक्षोभमनुभूयामृतं पपुः॥ ३६॥
सम्पत्तौ कोमलं चित्तं साधोरापदि कर्कशम्।
सुकुमारं मधौ पत्रं तरोः स्यात्कठिनं शुचौ॥ ३७॥
आकरः कारणं जन्तोर्दौर्जन्यस्य न जायते।
कालकूटः सुधासिन्धोः प्राणिनां प्राणहारकः॥ ३८॥
गुणदोषाववाप्येते पुंसां संशीलनाद्बुधैः।
लेभे पीयूषगरले मन्थनादम्बुधेः सुरैः॥ ३९॥
स्वभावं न जहात्येव साधुरापन्नतोऽपि सन्।
कर्पूरः पावकस्पृष्टः सौरभं लभतेतराम्॥ ४०॥
न व्याप्तिरेषा गुणिनो गुणवान् जायते ध्रुवम्।
चन्दनोऽनलसन्दग्धो न भस्म सुरभि क्वचित्॥ ४१॥
अप्यापत्समयः साधोः प्रयाति श्लाघनीयताम्।
विधोर्विधुन्तुदाक्रान्दविपत्कालोऽपि सुन्दरः॥ ४२॥

विना परीक्षां नो तत्त्वं प्रसिद्धं ज्ञायते सतः ।
स्वर्णबन्धाणो शुद्धिर्ज्ञायते कर्षणं विना ॥ ४३ ॥
प्राप्य वित्तं जडाःस्तूर्णं निर्वृतिं यान्ति नान्यथा ।
तोयमासाद्य गर्जन्ति न रिक्तास्तनयित्नवः ॥ ४४ ॥
कार्यापेक्षी जनः प्रायः प्रीतिमाविष्करोत्यलम् ।
लोभार्थी सौण्डिकः शष्पैर्मेषं पुष्णाति पेशलैः ॥ ४५ ॥
दुर्जनो जीयते युक्त्या निग्रहेण न धीमता ।
निपात्यते महावृक्षस्तत्समीपक्षितिक्षयात् ॥ ४६ ॥
सुखदुःखे समे स्यातां जन्तूनां क्लेशहेतुके ।
मूर्ध्नि स्थितानां केशानां भवेतां स्नेहछेदने ॥ ४७ ॥
दुष्टदुर्जनदौरात्म्यैः सज्जने रज्यते जनः ।
आरुह्य पर्वतं पान्थः सानौ निर्वृतिमेत्यलम् ॥ ४८ ॥
स्वभावसुन्दरं वस्तु न संस्कारमपेक्षते ।
मुक्तारत्नस्य शाणाश्मघर्षणं नोपयुज्यते ॥ ४९ ॥
शोभते विदुषां मध्ये नैव निर्गुणमानसः ।
अन्तरे तमसान्दीपः शोभते नार्कतेजसाम् ॥ ५० ॥
युक्त्या परोक्षं बाधेत विपक्षक्षपणक्षमः ।
शोषयत्यचिरेणैव प्रान्तरस्थमलं पयः ॥ ५१ ॥
दुर्गदेशप्रविष्टोऽपि शूरोऽभ्येति पराभवम् ।
गाढपङ्कनिमग्नाङ्गो मातङ्गोऽप्यवसीदति ॥ ५२ ॥
नयेनाङ्कुरितं शौर्य्यं जयाय न तु केवलम् ।
अन्ययुक्तं विषं भुक्तं पथ्यं स्यादन्यथा मृतिः ॥ ५३ ॥

मृदुभिर्बहुभिः शूरः पुम्भिरेको न बाध्यते ।
कपोतपोतकैरेकः श्येनो जातु न बाध्यते ॥ ५४ ॥
येनात्मा पश्यतां नीतः स एवान्विष्यते जनैः ।
हस्ती हेमसहस्रेण क्रीयते न मृगाधिपः ॥ ५५ ॥
गुणो गुणान्तरापेक्षी स्वरूपख्यातिहेतवे ।
स्वभावबाल्यं लावण्यं तारुण्येन मनोहरम् ॥ ५६ ॥
सुलभं वस्तु सर्वस्य न यात्यादरणीयताम् ।
स्वदारपरिहारेण परदारार्थिनो जनाः ॥ ५७ ॥
विक्रीतं निजमात्मानं वस्त्रैः संस्कुरुते जड़ः ।
परेभ्यः स्वशरीरस्य के वा भूषां वितन्वते ॥ ५८ ॥
क्षणक्षयिणि सापाये भोगे रज्यन्ति नोत्तमाः ।
सन्त्यज्याम्भोजकिञ्जल्कं न प्रार्थयति शैवलम् ॥ ५९ ॥
असम्भवगुणस्तुत्या जायते स्वात्मनस्त्रपा ।
कर्णिकारं सुगन्धीति वदन् केनोपहास्यते ॥ ६० ॥
धनाशया खलीकारः कस्य नाम न जायते ।
दूरादामिषलोभेन बध्यते खे वरः खगः ॥ ६१ ॥
तटस्थैः ख्यापितास्वैतो विशन्ति गुणिनां गुणाः ।
उत्कोचितानां पद्मानां गन्धो वायुभिराहृतः ॥ ६२ ॥
निजाशयवदाभाति पुंसां चित्तेपराशयः ।
प्रतिमा मुखचन्द्राभे कृपाणे याति दीर्घताम् ॥ ६३ ॥
अधमं बाधते भूयो दुःखवेगो न तूत्तमम् ।
पादद्वयं व्रजत्याशु शीतस्पर्शो न चक्षुषी ॥ ६४ ॥

गुणवान् सुचिरस्थायी देवोऽपि नाभिजायते ।
तिष्ठत्येकां निशाश्चन्द्रः श्रीमान् सम्पूर्णमण्डलः ॥ ६५ ॥
यतएवागतो दोषस्ततएव निवर्त्तते ।
अग्निदग्धस्य विस्फोटशान्तिः स्यादग्निना ध्रुवम् ॥ ६६ ॥
स्वधियो निश्चयो नास्ति यस्य सम्भ्रमते स्वयम् ।
प्रवातवालपत्रस्थः पटस्तत्र निदर्शनम् ॥ ६७ ॥
कथाप्रबन्धे बन्ध्येऽपि कश्चिदेवानुरज्यते ।
प्रायःश्वासादपत्यतः सत्त्वन्निसकेकसम् ॥ ६८ ॥
बुद्धिमत्ताभिमानः को भवेत् प्रज्ञोपजीविनाम् ।
अन्यदेयैरलङ्कारैर्नाहङ्कारो विभूषणे ॥ ६९ ॥
उत्तमोऽप्यधमस्य स्याद्याच्ञानम्रकरः क्वचित् ।
कौस्तुभादीनि रत्नानि ययाचे हरिरम्बुधिम् ॥ ७० ॥
प्रयत्ने समके केचिदेव स्युः फलभागिनः ।
क्षीरोदमथनाद्दैवैरमृतं प्रापि नासुरैः ॥ ७१ ॥
गुणैः पूजा भवेत् पुंसां नैकस्माज्जायते कुलात् ।
चूड़ारत्नं शशी शम्भोः यानमुच्चैःश्रवा हरेः ॥ ७२ ॥
भोगः परोपतापेन पुंसां दुःखाय न स्थिरः ।
पानमप्यसृजः क्षिप्रं स्वपीड़ायै जलौकसाम् ॥ ७३ ॥
नोपभोगपरान् अर्थान् कोऽपि सञ्चिनुते चिरम् ।
आखवः किमलङ्कारानात्मन्याहृत्य कुर्वते ॥ ७४ ॥
विवर्णवचनैर्मन्युर्गूढ़ोऽप्यन्तः प्रकाशते ।
इन्धनान्तरसंस्थैश्च ज्वलत्यग्नि : पयः कणैः ॥ ७५ ॥

निकटस्थं गरीयांसमपि लोको न मन्यते
पवित्रामपि यन्मर्त्या न नमस्यन्ति जाह्नवीम् ॥ ७६ ॥
स्वजनः स्वात्मवज्जन्तुर्ग्लायते गुणवान् परैः।
गोपैर्गोपवदाम्नायि हरिर्देवैर्जगत्पतिः ॥ ७७ ॥
उत्तमस्तोषमायाति तदङ्गो पोष्यते यदि।
वृक्षः प्रसीदति प्रायः पादाभ्यङ्गेन न स्वयम् ॥ ७८ ॥
सर्वत्र गुणवानेव चकास्ति प्रथिते नरे।
मणिर्मूर्ध्नि गले बाहौ पादपीठेऽपि शोभते ॥ ७९ ॥
उत्तमं सुचिरं नैव विपदोऽभिभवन्त्यलम्।
राहुग्रसनसंभूतक्षणो विक्षाययेद्विधुम् ॥ ८० ॥
प्रायः स्वभावं मुञ्चन्ति सन्तः संसर्गतोऽसताम्।
चण्डांशुचण्डातपात् पादा हिमांशोरमृतस्रजः ॥ ८१ ॥
तुल्यं परोपतापित्वं क्रुद्धयोः साधुनीचयोः।
न दाहे ज्वलतोर्भिन्नश्चन्दनेन्धनयोः क्वचित् ॥ ८२ ॥
न भाति वाञ्छा वैजात्ये न देवा भान्ति वादिनि।
अञ्जनं दूषणं वक्त्रे भूषणं किल लोचने ॥ ८३ ॥
दुर्भगः स्यात्प्रकृत्या यो विभूत्यापि स तादृशः।
गोमयं श्रीनिवासोऽस्ति न तथापि मनोहरम् ॥ ८४ ॥
गुणानर्चन्ति जन्तूनां न जातिं केवलां क्वचित्।
स्फाटिकं भाजनं भग्नं काकिन्यापि न गृह्यते ॥ ८५ ॥
आगच्छदुत्सवो भाति यथैव न तथा गतः।
हिमांशोरुदयः सायं चकास्ति न तथोषसि ॥ ८६ ॥

मनस्विनो न मान्यन्ते परतः प्राप्य जीवनम् ।
बलिभुग्भ्यो न काकेभ्यः स्पृहयन्ति हि कोकिलाः ॥८७॥
सन्तोषक्षतये पुंसामाकस्मिकधनागमः ।
सरसां सेतुभेदाय वर्षौघः स च न स्थितः ॥ ८८ ॥
जीयते भूगतोऽप्यात्मा कालेनात्मापि स्वर्गतः ।
भवेत् श्मशानमुद्यानमुद्यानञ्च श्मशानभम् ॥ ८९ ॥
उच्चशेखरगं वस्तु शुभं स्यात्सुखकारणम् ।
उपशामयते बाधं यथैवा मृतसंस्कृतम् ॥ ९० ॥
सन्तुष्यत्युत्तमः स्तुत्या धनेन महताधमः ।
प्रसीदन्ति जयैर्देवा बलिभिर्भूतविग्रहाः ॥ ९१ ॥
स्वजातीयविघाताय माहात्म्यं दृश्यते नृणाम् ।
श्येनो विहङ्गमानेव हिनस्ति न भुजङ्गमान् ॥ ९२ ॥
गुरुप्रयोजनोद्देशादर्चयन्ति न भक्तितः ।
दुग्धदात्रीति गौर्गेहे पोष्यते न तु धर्मतः ॥ ९३ ॥
महतां तादृशं तेजो यत्र शाम्यत्यनोजसः ।
अस्तं यान्ति प्रकाशेन तारका हि विवस्वतः ॥ ९४ ॥

दाता दानस्यान्तरा स्यात् पृथिव्यां
गेहे गेहे याचकानां समूहः
चिन्तारन्तस्यास्ति सत्त्वे विवादो
मार्गे मार्गे रेणवः सन्त्यसंख्याः ॥ ९५ ॥

चारुता अपवशेन पदार्थे धैर्येण तदनुवादिगुणत्वात् ।
वेणुगो भवति मञ्जुरसो यन्मगो हि सुखदः क्षतशब्दः ॥९६॥

नराः संस्काराहीं जगति किल केचित् सुकृतिनः
समानायां जात्यामपि वयसि सत्यां परधियः ।
अयं दृष्टान्तोऽत्र स्फुटकरणतोऽत्यभ्यसनतः
शुकः श्लोकान् वक्तुं प्रभवति न काकः क्वचिदपि ॥ ९७ ॥

धनमपि परदत्तं दुःखमौचित्यभाजां
भवति हृदि तदेवानन्दकारीतरेषाम् ।
मलयजरसबिन्दुर्बाधते न प्रसन्नं
नयति च रसवाहादेवमत्यन्तमन्न ॥ ९८ ॥

कालक्रमेण परिणामवशादनव्या
भावा भवन्ति खलु पूर्वमतीवतुच्छाः ।
मुक्तामणिर्जलदतोयकणोऽप्यणीयान्
संपद्यते च चिरकीचकरन्ध्रमध्ये ॥ ९९ ॥

इयं कुसुमदेवेन कविनैकेन निर्मिता ।
दृष्टान्तकलिका नाम जृम्भतां कविमानसे ॥ १०० ॥

इति कुसुमदेवरचितं दृष्टान्तशतकं सम्पूर्णम् ।

---

# नीतिशतकम् ।

---

अज्ञः सुखमाराध्यः सुखतरमाराध्यतेऽविशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥ १ ॥

लभेत सिकतासु तैलमपि यत्नतः पीड़यन्
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ।
कदाचिदपि पर्यटन् शशविषाणमासादयेत्
नतुप्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ २ ॥
प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्राङ्कुरात्
समुद्रमपि सन्तरेत् चपलमूर्म्मिमालाकुलम् ।
भुजङ्गमपि कोपितं शिरसि पुष्पवद्धारयेत्
नतु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ३ ॥
शशीर्दिवसधूसरोगलितयौवना कामिनी
सरोविगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गनगतः खलो मनसि सप्त शल्यानि मे ॥ ४ ॥
मणिः शाणालीढ़ः समरविजयी हेतिनिहतो
मदक्षीणोनागः शरदि सरितः श्यामपुलिनाः ।
कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
न निम्नाः शोभन्ते गलितविभवाश्चार्थिषु जनाः ॥ ५ ॥
परिक्षीणः कश्चित् स्पृहयति यवानां प्रसृतये
स पश्चात् सम्पूर्णो गणयति धरित्रीं तृणसमाम् ।
अतश्चानैकान्ता गुरुलघुतयार्थेषु धनिनाम्
अवस्था वस्तूनि प्रथयति च सङ्कोचयतिं च ॥ ६ ॥
शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्यप्रदेयागमा
विख्याताः कवयो वसन्ति विषये यस्य प्रभोर्निर्धनाः ।

तज्जाड्यं वसुधाधिपस्य सुधियो ह्यर्थं विनापीश्वराः
कुत्स्याः स्युः कुपरीक्षकै र्हि मणयो यैरर्घतः पातिताः ॥७॥

विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ८ ॥

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ ९ ॥

हर्तुर्याति न गोचरं किमपि संपुष्णाति यत्सर्वदा
ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ।
कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं
येषां तान् प्रति मानमृच्छति नृपः कस्तैः सह स्पर्धते ॥१०॥

अधिगतपरमार्थान् पण्डितान्मावमंस्था
स्तृणमिव लघुलक्ष्मीर्नैव तान् संरुणद्धि ।
अभिनवमदलेखाश्यामगण्डस्थलानां
न भवति विशतन्तुर्वारणं वारणानाम् ॥ ११ ॥

क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्राणोऽपि कष्टान्दशा
मापन्नोऽपि विपन्नदीधितिरपि प्राणेषु नश्यत्स्वपि ।
उन्मत्तेभविभिन्नकुम्भकवलग्रासैकबद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केशरी ॥ १२ ॥

असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः क्वशधनः
प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम् ।
विपद्युच्चैः स्थेयं पदमनुविधेयञ्च महताम्
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ १३ ॥
मनसि वचसि काये पुण्यपीयूषपूर्णा
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।
परगुणपरमाणु पर्वतीकृत्य नित्यं
निजहृदि विकशन्तः सन्ति सन्तः कियन्तः ॥ १४ ॥
इतः स्वपिति केशवः कुलमितस्तदीयद्विषाम्
इतश्च शरणार्थिनः शिखरिपत्त्रिणः शेरते ।
इतश्च वड़वानलः सह समस्तसंवर्तकैः
अहो ! विततमूर्जितम्भरसहञ्च सिन्धोर्वपुः ॥ १५ ॥
उदन्वच्छिन्ना भूः स च निधिरपां योजनशतं
सदा पान्थः पूषा गगनपरिमाणं कलयति ।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमो विजयताम् ॥ १६ ॥
क्वचिद्भूमौशय्या क्वचिदपि च पर्य्यङ्कशयनः
क्वचिच्छाकाहारः क्वचिदपि च शाल्योदनरुचिः ।
क्वचित् कन्थाधारी क्वचिदपि च दिव्याम्बरधरो
मनस्वी कार्य्यार्थी न गणयति दुःखन्न च सुखम् ॥ १७ ॥
ये सन्तोषसुखप्रमोदमुदितास्तेषां न भिन्ना मुदो
ये त्वन्ये धनलोभसंकुलधियस्तेषान्न तृष्णा हता ।

दूत्यं कस्य कृते कृतः स विधिना तादृक् पदं सम्पदां
स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥ १८ ॥
नमस्यामो देवान्ननु हत विधेस्तेऽपि वशगा
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः।
फलंकर्मायत्तं यदि किममरैः किञ्च विधिना
नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ १९ ॥
दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात्सुतोलालनात्
विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात्
ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रयात्।
मैत्री चाप्रणयात्समृद्धिरनयात् त्यागात् प्रमादाद्धनम्॥२०॥
रक्तत्वं कमलानां सुपुरुषाणां परोपकारित्वम्।
असताञ्च निर्दयत्वं स्वभावसिद्धं त्रिषु त्रितयम् ॥ २१ ॥
जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवम्
शूरे निर्घृणता ऋजौ विमतिता दैन्यं प्रियालापिनि।
तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे
तत्कोनाम गुणोभवेत्सुगुणिनां योदुर्जनैर्नाङ्कितः ॥२२॥
जातिर्यातु रसातलं गुणगणस्तस्याप्यधोगच्छतु
शीलं शैलतटात्पतत्वभिजनः सन्दह्यतां वह्निना।
शौर्यं वैरिणि वज्रनिरस्तमस्तु च तथाप्यर्थस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ २३ ॥
भग्नाशस्य करण्डपीडिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः।

त्वमस्तत्पिपिपतिन सत्वरमसौ तेनैव यातः पथा
स्वस्थास्तिष्ठत दैवमेव हि नृणां वृद्धौ चये कारणम् ॥२४॥
पतितोऽपि कराघातैरुत्पतत्येव कन्दुकः ।
प्रायेण साधुवृत्तीनामस्थायिन्यो विपत्तयः ॥ २५ ॥
प्रायः कन्दुकपातेन पतत्यार्यः पतन्नपि ।
तथात्वनार्यः पतति मृत्पिण्डपतनं यथा ॥ २६ ॥
प्रीणाति यः सुचरितैः पितरं स पुत्रो
यद्भर्त्तुरेव हितमिच्छति तत्कलत्रम् ।
तन्मित्रमापदि सुखे च समं प्रयाति
एतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ २७ ॥
सम्पत्सु महतां चित्तम्भवेदुत्पलकोमलम् ।
आपत्सु च महाशैलशिलासंघातकर्कशम् ॥ २८ ॥
दुर्जनः परिहर्तव्यो विद्ययापि समन्वितः ।
मणिनालङ्कृतः सर्पः किमसौ न भयङ्करः ॥ २९ ॥
क्षीरेणात्मगतोदकाय हि गुणा दत्ता पुरा तेऽखिलाः
क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः ।
गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदम्
युक्ता तेन जलेन सम्प्रति सतां मैत्री पुनस्त्वीदृशी ॥३०॥
या साधून् हि खलान् करोति विदुषोमूर्खान् हितान् द्वेषिणः
प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात्
तामाराधय शङ्करीम्भगवतीमिन्द्रावीं फलं वाञ्छितं
हे ! साधो त्वमतो गुणेषु विफलेष्वास्थां वृथा मा कृथाः ॥३१॥

कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं
निरुपमरसप्रीत्या खादन् नरास्थि निरामिषम्।
सुरपतिमपि श्वा पार्श्वस्थं विलोक्य विशङ्कते
न हि गणयति क्षुद्रो जन्तुः परिग्रहफलफल्गुताम्॥ ३२॥
स्वल्पं स्नायुवसावशेषमलिनं निर्मांसमप्यस्थिकं
श्वा लब्ध्वा परितोषमेति न च तत्तस्य क्षुधाशान्तये।
सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम्॥ ३३॥
पापान्निवारयति योजयते हिताय
गुह्यानि गूहति गुणान् प्रकटीकरोति।
आपद्गतञ्च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः॥ ३४॥
मृगमीनसज्जनानां तृणजलसन्तोषविहितवृत्तीनाम्।
लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति॥ ३५॥
सन्तप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रे स्थितं राजते।
स्वात्यां सागरशुक्तिमध्यपतितं मुक्ताफलं जायते
प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते॥ ३६॥
ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे॥ ३७॥

कुसुमस्तवकस्येव द्वे वृत्ती तु मनस्विनः ।
सर्वलोकस्य वा मूर्ध्नि विशीर्य्येत वनेऽथवा ॥ ३८ ॥

मौनान्मूकः प्रवचनपटुर्वातुलो जल्पको वा
चान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः ।
धृष्टः पार्श्वे स भवति जनो दूरतश्चाप्रगल्भः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ ३९ ॥

नम्रत्वेनोन्नमन्तः परगुणनुतिभिः स्वान् गुणान् ख्यापयन्तः
स्वार्थान् सम्पादयन्तो विततपृथुतरारम्भयत्नाः परार्थे ।
चान्त्यैवाक्षेपरूक्षाचरमुखरमुखान्दुर्मुखान्दूषयन्तः
सन्तः साश्चर्यचर्या जगति बहुमता कस्य नाभ्यर्थनीयाः ॥ ४० ॥

लोभश्चास्ति गुणेन किं ? पिशुनता यद्यस्ति किम्पातकैः ?
सत्यञ्चेत्तपसा च किं ? शुचिमनो यद्यस्ति तीर्थेन किं ?
सौजन्यं यदि किं निजैः ? स्वमहिमा यद्यस्ति किम्मण्डनैः ?
सद्विद्या यदि किं ? धनैरपयशो यद्यस्ति किं मृत्युना ?॥ ४१ ॥

अम्भोजिनीवननिवासविलासहेतुं
हंसस्य हन्तुमपरामपि तां विधाता ।
नो तस्य दुग्धजलभेदविधौ प्रशस्ताम्
वैदग्ध्यकीर्त्तिमपहन्तुमसौ समर्थः ॥ ४२ ॥

खल्वाटो दिवसेश्वरस्य किरणैः सन्तापिते मस्तके
वाञ्छन्देशमनातपं विधिवशात्तालस्य मूलङ्गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः॥ ४३ ॥

नैवाकृतिः फलति नैव कुलं न शीलं
विद्यापि नैव न च यत्नकृतापि सेवा।
भाग्यानि पूर्वतपसा किल सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः॥ ४४॥

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः शमस्य विनयो वित्तस्य पात्रे व्ययः।
अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलम्परम्भूषणम्॥ ४५॥

ते ते सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये।
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे॥४६॥

जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति।
चेतः प्रसादयति दिक्षु तनोति कीर्त्तिं
सत्सङ्गतिः कथय किं न करोति पुंसाम्॥ ४७॥

वाञ्छा सज्जनसङ्गमे गुणिगणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम्।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले
एते यत्र वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः॥ ४८॥

अग्राह्यं हृदयन्तथैव वदनं यद्दर्पणान्तर्गतं
भावः पर्वतसूक्ष्ममार्गविषमः स्त्रीणां न विज्ञायते।

चित्तं पुष्करपत्रतोयतरलं विद्वद्भिराशंसितम्
नारी नाम विषाङ्कुरैरिव लता दोषैः समं वर्धिता ॥ ४९ ॥
तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं माकृथाः
सत्यं ब्रूह्यनुयाहि साधु पदवीं सेवस्व विद्वज्जनान् ।
मान्यान्मानय विद्विषोऽप्यनुनय प्रच्छादय स्वान् गुणान्
कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां चेष्टितं ॥ ५० ॥

गुणवदगुणवद्वा कुर्वता कार्यजातं
परिणतिरवधार्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्मणामाविपत्तेः
भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ५१ ॥

एको देवः केशवो वा शिवो वा
एकं मित्रं भूपतिर्वा यतिर्वा ।
एको वासः पत्तने वा वने वा
एका भार्या सुन्दरी वा दरी वा ॥ ५२ ॥

वने रणे शत्रुजलाग्निमध्ये
महार्णवे पर्वतमस्तके वा ।
सुप्तं प्रमत्तं विषमस्थितं वा
रक्षन्ति पुण्यानि पुराकृतानि ॥ ५३ ॥

भीमं वनम्भवति तस्य पुरं प्रधानं
सर्वो जनः सुजनतामुपयाति तस्य ।
कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा
यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥ ५४ ॥

यन्नागा मदभिन्नगण्डकरटास्तिष्ठन्ति निद्रालसा
द्वारे हेमविभूषणाश्च तुरगा वल्गन्ति यद्दर्पिताः ।
वीणावेणुमृदङ्गशंखपटहैः सुप्तस्तु यो बोध्यते
तत्सर्वं सुरलोकदेवसदृशं धर्मस्य विस्फूर्जितम् ॥ ५५ ॥

मज्जत्वम्भसि यातु मेरुशिखरं शत्रुं जयत्वाहवे
वाणिज्यं कृषिसेवनादिसकला विद्याः कलाः शिक्षतु ।
आकाशं विपुलं प्रयातु खगवत् कृत्वा प्रयत्नं परं
नाभाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः ॥ ५६ ॥

वरं पक्षच्छेदः समदमघवन्मुक्तकुलिश
प्रहारैरुद्गच्छद्बहुलदहनोद्गारगुरुभिः ।
तुषाराद्रेः सूनोरहह ! पितरि क्लेशविवशे
न चासौ सम्पातः पयसि पयसां पत्युरुचितः ॥ ५७ ॥

नेता यत्र बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः
स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावतो वाहनम्
इत्यैश्वर्यसमन्वितोऽपि बलभिद्भग्नः परैः सङ्गरे
तद्युक्तं ननु दैवमेव शरणं धिग्धिग् ! वृथा पौरुषम् ॥ ५८ ॥

कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी
तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ ५९ ॥

आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः
नास्त्युद्यमसमो बन्धुः कृत्वा यं नावसीदति ॥ ६० ॥

वरं गहनदुर्गेषु भ्रान्तं वनचरैः सह
न मूर्खजनसंसर्गः सुरेन्द्रभवनेष्वपि ॥ ६१ ॥

दानभोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य
यो न ददाति न भुंक्ते तस्य तृतीया गतिर्भवति ॥ ६२ ॥

यस्यास्ति वित्तं स नरः कुलीनः
सएव वक्ता स च दर्शनीयः ।
स पण्डितः स श्रुतवान् गुणज्ञः
सर्वेगुणाः काञ्चनमाश्रयन्ति ॥ ६३ ॥

रत्नैर्महार्हैं स्तुतुषु र्न देवाः
न भेजिरे भीमविषेण भीतिम् ।
सुधांविना न प्रययु र्विरामं
विनिश्चितार्थाद्विरमन्तिधीराः ॥ ६४ ॥

सन्त्यन्येऽपि बृहस्पतिप्रभृतयः सम्भाविताः पञ्चषा
स्तान् प्रत्येष विशेषविक्रमरुची राहुर्नवैरायते ।
द्वावेव ग्रसते दिनेश्वरनिशाप्राणेश्वरौ भास्वरौ
भ्रातः ! पर्वणि पश्य दानवपतिः शीर्षावशेषीकृतः ॥ ६५ ॥

इयत्ये तस्मिन् वा निरवधिचमत्कात्यतिशये
वराहो वा राहुः प्रभवति चमत्कारविषयः ।
महीमेको मग्नां यदयमवहद्दन्तसलिलैः
शिरःशेषः शत्रुर्निगिलति परं सन्त्यजति च ॥ ६६ ॥

श्रोत्रं श्रुतेनैव न कुण्डलेन
दानेन पाणिर्न च कङ्कणेन ।
आभाति कायः करुणापराणां
परोपकारेण न चन्दनेन ॥ ६७ ॥

जयन्ति ते सुकृतिनो रसवैद्याः कवीश्वराः
नास्ति येषां यशःकाये जरामरणजम्भिः॥ ६८॥

यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा फलं
तत् प्राप्नोति मरुस्थलेऽपि नियतं मेरौ च नातोधिकम्।
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटा गृह्णन्ति तुल्यंजलम्॥६९॥

लाङ्गूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनञ्च।
श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु
धीरंविलोकयति चाटुशतैश्च भुंक्ते॥ ७०॥

राजन्! दुधुक्षसि यदि क्षितिधेनुमेतां
तेनाद्य वत्समिव लोकमिमं पुषाण।
तस्मिंश्च सम्यगनिशम्परिपोष्यमाणे
नानाफलैः फलति कल्पलतेव भूमिः॥ ७१॥

सत्यानृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या।
नित्यव्यया प्रचुरनित्यधनागमा च
वाराङ्गनेव नृपनीतिरनेकरूपा॥ ७२॥

न कश्चिच्चण्डकोपानामात्मीयोनाम भूभुजाम्।
होतारमपि जुह्वन्तं स्पृष्टो दहति पावकः॥ ७३॥

विपदि महतान्धैर्य्यध्वंसं यदीप्सितु मीहसे
विरम विरसायासादस्माद्दुरध्यवसायतः।

अपि जड़विधेः कृत्यापाये व्यपेतनिजक्रमाः
कुलशिखरिणः क्षुद्रा नैते न चापि जलाशयाः ॥ ७४ ॥

अकरुणत्वमकारणविग्रहः परधनाय रतिः परयोषिति ।
सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम् ७५

कान्ताकटाक्षविशिखा न खनन्ति यस्य
चित्तं न निर्दहति कोपकृशानुतापः ।
कर्षन्ति भूरिविषयाश्च न लोभपाशा
लोकत्रयं जयति कृत्स्नमिदं स वीरः ॥ ७६ ॥

आरम्भगुर्व्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्द्धपरार्द्धभिन्ना छायेव मैत्री खलु सज्जनानाम् ७७

प्रदानं प्रच्छन्नं गृहमुपगते सम्भ्रमविधिः
प्रियं कृत्वा मौनं सदसि कथनञ्चाप्युपकृतेः ।
अनुत्सेकोलक्ष्म्यानिरभिभवसाराः परकथाः
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ७८ ॥

छिन्नोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चन्द्रः ।
इति विमृशन्तः सन्तः सन्तप्यन्ते न ते विपदा ॥ ७९ ॥

भवन्ति नम्रास्तरवः फलोद्गमैः
नवाम्बुभिर्भूमिविलम्बिनोघनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभावएवैष परोपकारिणाम् ॥ ८० ॥

कदर्थितस्यापि हि धैर्य्यवृत्तेः
बुद्धेर्विनाशो न हि शङ्कनीयः ।

अधःकृतस्यापि तनूनपातो
नाधःशिखा याति कदाचिदेव ॥ ८१ ॥

अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः ।
परपरिवादनिवृत्तैः क्वचित् क्वचिन्मण्डिता वसुधा ॥ ८२ ॥

पद्माकरन्दिनकरोविकचीकरोति
चन्द्रोविकाशयति कैरवचक्रवालम् ।
नाभ्यर्थितोऽपि जलदः सलिलन्ददाति
सन्तः स्वयं परहितेषु कृताभियोगाः ॥ ८३ ॥

एकेनापि हि शूरेण पादाक्रान्तं चमातलम् ।
क्रियते भास्करेणेव स्फारं स्फुरिततेजसा ॥ ८४ ॥

वरं तुङ्गात् शृङ्गाद्गुरुशिखरिणः क्वापि पुलिने
पतित्वायङ्कायः कठिनदृषदन्तर्विदलितः ।
वरं न्यस्तोहस्तः फणिपतिमुखे तीव्रदशने
वरं वह्नौ पातस्तदपि न कृतः शीलविलयः ॥ ८५ ॥

वह्निस्तस्य जलायते जलनिधिः कूपायते तत्क्षणात्
मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते ।
व्यालोमाल्यगुणायते विषरसः पियूषवर्षायते
यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥ ८६ ॥

यदचेतनोऽपि पादैःस्पृष्टः प्रज्वलति सवितुरविकान्तः ।
तत्तेजस्वी पुरुषः परकृतनिकृतं कथं सहते ॥ ८७ ॥

आज्ञा कीर्त्तिः पालनं ब्राह्मणानां
दानम्भोगोमित्रसंरक्षणञ्च ।

येषामेते षड्गुणा न प्रवृत्ताः
कोऽर्थस्तेषां पार्थिवोपाश्रयेण ॥ ८८ ॥

व्यालम्बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते
भेत्तुं वज्रमणिं शिरीषकुसुमप्रान्तेन सन्नह्यति ।
माधुर्य्यं मधुविन्दुना रचयितुं क्षाराम्बुधेरीहते
नेतुंवाञ्छति यः सतां पथि खलान् सूक्तैः सुधास्यन्दिभिः॥८९॥

स्वायत्तमेकान्तहितं विधात्रा
विनिर्मितं छादनमज्ञतायाः ।
विशेषतः सर्वविदां समाजे
विभूषणं मौनमपण्डितानाम् ॥ ९० ॥

अकारिताखिलजनस्य विशृङ्खलस्य
प्राग्जातविस्मृतनिजाधमकर्मवृत्तेः ।
दैवादवाप्तविभवस्य गुणद्विषोऽस्य
नीचस्य गोचरगतैः सुखमास्यते कैः ॥ ९१ ॥

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तन्धनं
विद्या भोगकरी यशः सुखकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनोविदेशगमने विद्या परन्दैवतं
विद्या राजसु पूजिता नहि धनं विद्याविहीनः पशुः॥९२

दाक्षिण्यं स्वजने दया परिजने शाठ्यं सदा दुर्जने
प्रीतिः साधुजने क्षमा गुरुजने नारीजने धूर्त्तता ।
शौर्य्यं शत्रुजने क्षमः खलजने विद्वज्जने चार्जवं
ये त्वेवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितः ॥ ९३॥

करे श्लाघस्त्यागः शिरसि गुरुपादप्रणयिता
मुखे सत्यावाणी विजयभुजयोर्वीर्य्यमतुलम् ।
हृदि स्वच्छा वृत्तिः श्रुतमधिगतञ्च श्रवणयोः
विनाप्यैश्वर्य्येण प्रकृतिमहतां मण्डनमिदम् ॥ ९४ ॥
वहति भुवनश्रेणीं फणी फणाफलकस्थितां
कमठपतिना मध्येपृष्ठं सदा स च धार्य्यते ।
तमपि कुरुते क्रोड़ाधानं पयोनिधिरनादरात्
अहह ! महतां निःसीमानश्चरित्रविभूतयः ॥ ९५ ॥
स्पृहयति भुजयोरन्तरमायतकरवालकरे ।
गृहदीर्णं विजयश्रीर्वीराणां मत्तप्रौढ़वनितेव ॥ ९६ ॥
स जातो येन जातेन याति वंशः समुन्नतिम् ।
परिवर्त्तिनि संसारे मृतः कोवा न जायते ॥ ९७ ॥
लज्जां गुणौघजननीं जननीमिव स्वां
अत्यन्तशुद्धहृदयामनुवर्त्तमानाः ।
तेजस्विनः सुखमसूनपि सन्त्यजन्ति
सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥ ९८ ॥
सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु ।
प्रकृतिरियं सत्ववतां न खलु वयस्तेजसो हेतुः ॥ ९९ ॥
किं कूर्मस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्
किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ।
किन्त्वङ्गीकृतमुत्सृजन्न मनसा श्लाघ्यो जनो लज्जते
निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥ १०० ॥

दूरादर्थं घटयति नवन्दूरतश्चापशब्दं
त्यक्त्वा भूयो भवति नियतं सत्सभारञ्जनेषु ।
मन्दम्मन्दं रचयति पदं लोकचित्तानुवृत्त्या
कामं मन्त्री कविरिव सदा खेदभारैरमुक्तः ॥ १०१ ॥
दैवेन प्रभुणा स्वयञ्जगति यद्यस्य प्रमाणीकृतं
तत्तस्योपनयेन्मनागपि महान्नैवाश्रयः कारणम् ।
सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं
सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोविन्दवः ॥१०२॥
अभिमुखनिहतस्य सतस्तिष्ठतु तावज्जयोऽथवा स्वर्गः ।
उभयबलसाधुवादः श्रवणसुखस्यैव तात्पर्य्यम् ॥ १०३ ॥
को न याति वशं लोके मुखे पिण्डेन पूरितः
मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥ १०४ ॥
केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला
न स्नानं न विलेपनं सुकुसुमं नालंकृता मूर्द्धजाः ।
वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्य्यते
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥१०५॥
यदि नाम दैवगत्या जगदसरोजं कदाचिदपि जातम् ।
अवकारनिकरं विकिरति तत्किं कृकवाकुरिव हंसः ।१०६॥
परिचरितव्याः सन्तो यद्यपि कथयन्ति न सदुपदेशम्
यास्तेषां स्वैरं कथास्ता एव भवन्ति शास्त्राणि ॥ १०७ ॥
कमठकुलाचलदिग्गजफणिप्रतिविधृतापि चलति वसुधेयम् ।
प्रतिपन्नममलमनसां न फलति पुंसां युगान्तेऽपि ॥ १०८ ॥

इति श्रीभर्तृहरिविरचितं नीतिशतकं समाप्तम् ।

# वैराग्यशतकम्।

चूडोत्तंसितचारुचन्द्रकलिकाचञ्चच्छिखाभासुरो
लीलादग्धविलोलकामशलभः श्रेयोदशाग्रेस्फुरन्।
अन्तस्फूर्जदपारमोहतिमिरप्राग्भारमुच्चाटयन्
चेतः सद्मनि योगिनां विजयते ज्ञानप्रदीपो हरः॥ १॥

## तृष्णादूषणम्।

बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः
अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम्॥ २॥
न संसारोत्पन्नं चरितमनुपश्यामि कुशलं
विपाकः पुण्यानां जनयति भयं मे विमृशतः।
महद्भिः पुण्यौघैश्चिरमपि गृहीताश्च विषया
महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम्॥ ३॥
भ्रान्त्वा देशमनेकदुर्गविषमं प्राप्तं न किञ्चित्फलं
त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला।
भुक्तं मानविवर्जितं परगृहेष्वाशङ्कया काकवत्
तृष्णे! जृम्भसि पापकर्मपिशुने नाद्यापि सन्तुष्यसि॥ ४॥
उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन सन्तोषिताः।

मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः
प्राप्तः काणवराटकोऽपि न मया तृष्णे ! ऽधुना मुञ्च माम् ॥५॥

खलोल्लापाः सोढाः कथमपि तदाराधनपरैः
निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा ।
कृतश्चित्तस्तम्भःप्रतिहतधियामञ्जलिरपि
त्वमाशे ! मोघाशे किमु परमतो नर्तयसि माम् ॥ ६ ॥

अमीषां प्राणानां तुलितविसिनीपत्रपयसां
कृते किन्नास्माभिर्विगलितविवेकैर्व्यवसितम् ।
यदाढ्यानामग्रे द्रविणमदनिःसंज्ञमनसां
कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ७ ॥

भोगा न भुक्ता वयमेव भुक्ता स्तपो न तप्तं वयमेव तप्ताः ।
कालो न यातोबयमेव याता स्तृष्णा नजीर्णा वयमेव जीर्णाः ॥८॥

विलभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः ।
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ ९ ॥

निवृत्ता भोगेच्छा पुरुषबहुमानोऽपि गलितः
समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः
शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने
अहो ! दुष्टः कायस्तदपि मरणोपायचकितः ॥ १० ॥

आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कविहगा धर्मद्रुमध्वंसिनी ।
मोहावर्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥११॥

विषयपरित्यागविडम्बना।

अवश्यं यातारश्चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत् स्वयममून्।
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः
स्वयन्त्यक्तास्त्वेते शमसुखमनन्तं विदधति॥ १२॥

ब्रह्मज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करं
यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निस्पृहाः।
न प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढ़प्रत्यया
वाञ्छामात्रपरिग्रहाण्यपि परित्यक्तुं न शक्तावयम्॥ १३॥

धन्यानां गिरिकन्दरेषु वसतां ज्योतिः परं ध्यायताम्
आनन्दाश्रुकणान् पिबन्ति शकुना निःशङ्कमङ्केशयाः।
अस्माकन्तु मनोरथोपरचितप्रासादवापीतट
क्रीड़ाकाननकेलिकौतुकजुषामायुः परं क्षीयते॥ १४॥

स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ
मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितम्।
स्रवन्मूत्रक्लिन्नं करिवरकरस्पर्द्धि जघनं
मुहुर्निन्द्यं रूपं कविवरविशेषैर्गुरु कृतम्॥ १५॥

भिक्षाशनं तदपि नीरसमेकवारं
शय्या च भूः परिजनो निजदेहमात्रम्।
वस्त्रं च जीर्णशतखण्डमलीनकन्था
हाहा! तथापि विषयान्न परित्यजन्ति॥ १६॥

अजानन्माहात्म्यम्पततु शलभस्तीव्रदहने
स मीनोऽप्यज्ञानाद्बडिशयुतमश्नातु पिशितम् ।
विजानन्तोऽप्येते वयमिह विपज्जालजटिलान्
न मुञ्चामः कामानहह ! गहनो मोहमहिमा ॥ १७ ॥
तुङ्गं वेश्म सुताः सतामभिमताः संख्यातिगाः सम्पदः
कल्याणी दयिता वयश्च नवमित्यज्ञानमूढो जनः ।
मत्वा विश्वमनश्वरं निविशते संसारकारागृहे
संदृश्य क्षणभङ्गुरं तदखिलं धन्यस्तु संन्यस्यति ॥ १८ ॥

याच्ञादैन्यदूषणम् ।

दीना दीनमुखैः सदैव शिशुकैराकृष्टजीर्णाम्बरां
क्रोशद्भिः क्षुधितैर्निरन्नजठरां दृष्ट्वैव चेद्गेहिनीम् ।
याच्ञाभङ्गभयेन गद्गदगलत्त्रुट्यद्विलीनाक्षरं
को देहीति वदेत्स्वदग्धजठरस्यार्थे मनस्वी पुमान् ॥ १९ ॥
अभिमतमहामानग्रन्थिप्रभेदपटीयसी
गुरुतरगुणग्रामाम्भोजस्फुटोज्ज्वलचन्द्रिका ।
विपुलविलसल्लज्जावल्लीवितानकुठारिका
जठरपिठरी दुष्पूरेयं करोति विडम्बनाम् ॥ २० ॥
पुण्यग्रामे वने वा महति सितपटच्छन्नपालीं कपाली
मादाय न्यायगर्भं द्विजहुतहुतभुग्धूमधूम्रोपकण्ठम् ।
द्वारं द्वारं प्रविष्टो वरमुदरदरीपूरणाय क्षुधार्तो
मानी प्राणी सनाथो न पुनरनुदिनं तुल्यकुल्येषु दीनः ॥ २१ ॥

गङ्गातरङ्गकणशीकरशीतलानि
विद्याधराध्युषितचारुशिलातलानि।
स्थानानि किं हिमवतः प्रलयं गतानि
यत्सावमानपरपिण्डरता मनुष्याः॥ २२॥

किं कन्दाः कन्दरेभ्यः प्रलयमुपगता निर्झरा वा गिरिभ्यः
प्रध्वस्ताः किं महीजाः सरसफलभृतो वल्कलिन्यश्च शाखाः।
वीक्ष्यन्ते किं मुखानि प्रसभमुपगतप्रश्रयाणां खलानां
दुःखोपात्ताल्पवित्तस्मयपवनवशान्नर्तितभ्रूलतानि॥ २३॥

पुण्यैर्मूलफलैः प्रियैश्च सलिलैर्वृत्तिं कुरुष्वाधुना
भूशय्यां नवपल्लवैर्वितनुतामुत्तिष्ठ यामो वनम्।
क्षुद्राणामविवेकमूढमनसां तत्रेश्वराणां सदा
वित्तव्याधिविकारविह्वलगिरां नामापि न श्रूयते॥ २४॥

फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां
पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम्।
मृदुस्पर्शा शय्या सुललितलता पल्लवमयी
सहन्ते सन्तापं तदपि धनिनां द्वारि कृपणाः॥ २५॥

ये वर्धन्ते धनपतिपुरः प्रार्थनादुःखभाजो
ये चाल्पत्वं दधति विषयाक्षेपपर्यस्तबुद्धेः।
तेषामन्तःस्फुरितहसितं वासराणां स्मरेयं
ध्यानच्छेदे शिखरिकुहरग्रावशय्यानिषण्णः॥ २६॥

भिक्षाहारमदैन्यमप्रतिहतं भीतिच्छिदं सर्वदा
दुर्मात्सर्यमदाभिमानमथनं दुःखौघविध्वंसनम्।

सर्वत्रान्वहमप्रयत्नसुलभं साधुप्रियं पावनं
शम्भोःसत्रमवार्यमक्षयनिधिं शंसन्ति योगीश्वराः ॥२७॥
भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं
माने दैन्यभयं बले रिपुभयं रूपे तरुण्या भयम् ।
शास्त्रे वादिभयं गुणे खलभयं काये कृतान्ताद्भयं
सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥ २८ ॥
आक्रान्तं मरणेन जन्म जरसा यात्युत्तमं यौवनं
सन्तोषोधनलिप्सया शमसुखं प्रौढाङ्गनाविभ्रमैः ।
लोकैर्मत्सरिभिर्गुणा वनभुवोव्यालै र्नृपा दुर्जनैः
अस्थैर्य्येण विभूतयोऽप्युपहता ग्रस्तं न किं केन वा ॥२९॥
आधिव्याधिशतैर्जनस्य विविधैरारोग्यमुन्मूल्यते
लक्ष्मीर्यत्र पतन्ति तत्र विवृतद्वारादिव ह्यापदः ।
आयु र्यातमवश्यमाशु विवशं मृत्युः करोत्यात्मसात्
तत् किं केन निरङ्कुशेन विधिना यन्निर्मितं सुस्थिरम्॥३०॥
भोगास्तुङ्गतरङ्गतुल्यतरलाः प्राणाः क्षणध्वंसिनः
स्तोकान्येव दिनानि यौवनसुखं स्फूर्त्तिः क्रियासु स्थिता ।
तत्संसारमसारमेव निखिलं बुद्ध्वा बुधा बोधका
लोकानुग्रहपेशलेन मनसा यत्नः समाधीयताम् ॥ ३१ ॥
भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चला
आयुर्वायुविघट्टिताभ्रपटलीच्छिन्नाम्बुवद्भङ्गुरं ।
लोला यौवमलालसास्तनुभृतामित्याकलय्य द्रुतं
योगे धैर्य्यसमाधिसिद्धिसुलभे बुद्धिं विदध्वं बुधाः । ३२ ।

आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्रीः
अर्थाः सङ्कल्पकल्पा घनसमयतडिद्विभ्रमा भोगपूगाः।
कण्ठाश्लेषोपगूढं तदपि च न चिरं यत्प्रियाभिः प्रणीतं
ब्रह्मण्यासक्तचित्ता भवत भवभयाम्भोधिपारं तरन्तः॥३३॥

कृच्छ्रेणामेध्यमध्ये नियमिततनुभिः स्थीयते गर्भवासे
कान्ताविश्लेषदुःखव्यतिकरविषमे यौवने चोपभोगः।
वामाक्षीणामवज्ञाविहसितवसतिर्वृद्धभावोऽप्यसाधुः
संसारे रे मनुष्या! वदत यदि सुखं स्वल्पमप्यस्ति किञ्चित्॥३४॥

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रवइव प्रहरन्ति देहे।
आयुः परिस्रवति भिन्नघटादिवाम्भो
लोकस्तथाप्यहितमाचरतीति चित्रम्॥ ३५ ॥

भोगा भङ्गुरवृत्तयो बहुविधास्तैरेव चायम्भवः
तत्कस्येहकृतेपरिभ्रमत हे लोकाः! कृतं चेष्टितम्।
आशापाशशतोपशान्तिविशदं चेतः समाधीयतां
काम्योत्पत्तिवशे स्वधामनि यदि श्रद्धेयमस्मद्वचः॥ ३६ ॥

ब्रह्मेन्द्रादिमरुद्गणांस्तृणगणान् यत्रस्थितो मन्यते
यत्स्वादाद्विरसा भवन्ति विभवास्त्रैलोक्यराज्यादयः।
बोधः कोऽपि सएकएव परमो नित्योदितो जृम्भते
भोः साधो! क्षणभङ्गुरे तदितरे भोगे रतिं मा कृथाः॥३७॥

सा रम्या नगरी महान् स नृपतिः सामन्तचक्रञ्च तत्
पार्श्वे तस्य च सा विदग्धपरिषत्ताश्चन्द्रविम्बाननाः।

उन्मत्तः स च राजपुत्रनिवहस्ते वन्दिनस्ताः कथाः
सर्वं यस्य वशादगात् स्मृतिपथं कालाय तस्मै नमः॥ ३८॥
यत्रानेकः क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते ।
इत्थञ्चेमौ रजनिदिवसौ दोलयन् द्वाविवाक्षौ
कालः काल्या भुवनफलके क्रीडति प्राणिसारैः ॥ ३९ ॥
आदित्यस्य गतागतैरहरहः संक्षीयते जीवनं
व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते ।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतञ्जगत् ॥ ४० ॥
रात्रिः सैव पुनः स एव दिवसो मत्वा मुधा जन्तवो
धावन्त्युद्यमिनस्तथैव निभृतं प्रारब्धतत्तत्क्रियाः ।
व्यापारैः पुनरुक्तभूतविषयैरित्थं विधिनामुना
संसारेण कदर्थिता वयमहो मोहं न जानीमहे ॥ ४१ ॥
न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये
स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः ।
नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितं
मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥ ४२ ॥
नाभ्यस्ता भुवि वादिवृन्ददमनी विद्या विनीतोचिता
खड्गाग्रैः करिकुम्भपीठदमनैर्नाकं न नीतं यशः ।
कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये
तारुण्यङ्गतमेव निष्फलमहो शून्यालये दीपवत् ॥ ४३ ॥

विद्या नाधिगता कलङ्करहिता वित्तञ्च नोपार्जितं
शुश्रूषापि समाहितेन मनसा पित्रोर्न सम्पादिता
आलोलायतलोचना युवतयः स्वप्नेऽपि नालिङ्गिताः।
कालोऽयं परपिण्डलोलुपतया काकैरिव प्रेषितः॥ ४४ ॥
वयं येभ्यो जाताश्चिरपरिगताएव खलु ते
समा येषां वृद्धाः स्मृतिविषयतां तेऽपि गमिताः।
इदानीमेतेस्मत्प्रतिदिवसमापन्नपतना
गता स्तुल्यावस्थां सिकतिलनदीतीरतरुभिः॥ ४५ ॥
आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनाम्॥४६॥
क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च सम्पूर्णविभवः।
जराजीर्णैरङ्गैर्नट इव वलीमण्डिततनुः
नरः संसारान्ते विशति यमधानीयवनिकाम्॥ ४७ ॥

यतिनृपतिसम्वादः।

त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः
ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः।
इत्थं मानधनातिदूरमुभयोरप्यावयोरन्तरं
यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततोनिस्पृहाः॥४८॥

अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्ठे वा कुसुमशयने वा दृषदि वा।
तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः
क्वचित्पुण्येऽरण्ये शिवशिवशिवेति प्रलपतः॥ ४९॥

एकाकी निस्पृहः शान्तः पाणिपात्रो दिगम्बरः।
कदा शम्भो भविष्यामि कर्मनिर्मूलनक्षमः॥ ५०॥

पाणिं पात्रयतां निसर्गशुचिना भैक्ष्येण सन्तुष्यताम्
यत्र क्वापि निषीदतां बहुतृणं विश्वं मुहुः पश्यताम्।
अत्यागेऽपि तनोरखण्डपरमानन्दावबोधस्पृहां
मर्त्यः कोऽपि शिवप्रसादसुलभां सम्पत्स्यते योगिनाम्॥ ५१॥

अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदर्थं
शूरस्त्वं वादिदर्पज्वरशमनविधावक्षयं पाटवं मे।
सेवन्ते त्वां धनाढ्या मतिमलहतये मामपि श्रोतुकामा
मय्यप्यास्था न ते चेत्त्वयि मम नितरामेव राजन्! गतासीत्॥ ५२

वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः
सम इह परितोषो निर्विशेषो विशेषः।
स तु भवतु दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः॥ ५३॥

फलमलमशनाय स्वादु पानाय तोयं
शयनमवनिपृष्ठे वाससी वल्कले च।
धनलवमधुपानभ्रान्तसर्वेन्द्रियाणा
मविनयमनुमन्तुं नोत्सहे दुर्जनानाम्॥ ५४।

अश्नीमहि वयं भिक्षामाशावासो वसीमहि ।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥ ५५ ॥

न नटा न विटा न गायका न च सभ्येतरवादचञ्चवः ।
नृपसंसदि नाम के वयं स्तनभारानमिता न योषितः ॥ ५६ ॥

विपुलहृदयैरीशैः कैश्चिज्जगज्जनितं पुरा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा ।
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥ ५७ ॥

अभुक्तायां यस्यां क्षणमपि न यातं नृपशतै-
र्भुवस्तस्या लाभे क इह बहुमानः क्षितिभृताम् ।
तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो
विषादे कर्तव्ये विदधति जडाः प्रत्युत मुदम् ॥ ५८ ॥

परेषां चेतांसि प्रतिदिवसमाराध्य बहुधा
प्रसादं किन्नेतुं विशसि हृदय ! क्लेशकलितम् ।
प्रसन्ने त्वय्यन्तः स्वयमुदितचिन्तामणिगुणे
विविक्तः सङ्कल्पः किमभिलषितं पुष्यति न ते ॥ ५९ ॥

परिभ्रमसि किं वृथा क्व च न चित्त विश्राम्यतां
स्वयम्भवति यद्यथा भवति नान्यथा तत्तथा ।
अतीतमपि न स्मरन्नपि च भाव्यसङ्कल्पयन्
न तर्कितगमागमाननुभवस्व भोगानिह ॥ ६० ॥

एतस्माद्विरमेन्द्रियार्थगहनादायासकादाश्रयात्
श्रेयोमार्गमशेषदुःखशमनव्यापारदक्षं क्षणात् ।

आत्मीभावमुपैहि सन्त्यज निजां कल्लोललोलां मतिं
मा भूयो भज भङ्गुराम्भवरतिं चेतः प्रसीदाधुना ॥ ६१ ॥
मोहं मार्जय तामुपार्जय रतिं चन्द्रार्द्धचूड़ामणौ
चेतः स्वर्गतरङ्गिणीतटभुवि व्यासङ्गमङ्गीकुरु
कोवा वीचिषु बुद्बुदेषु च तड़िल्लेखासु च श्रीषु च
जालाग्रेषु च पन्नगेषु च सरिद्वेगेषु च प्रत्ययः ॥ ६२ ॥
चेतश्चिन्तय मा रमां सक्रदिमामस्थायिनीमास्थया
भूपालभ्रुकुटीकुटीरविहरव्यापारपण्याङ्गनाम् ।
कन्थाकञ्चुकिताः प्रविश्य भवनद्वाराणि वाराणसी
रथ्यापंक्तिषु पाणिपात्रपतितां भिक्षामपेक्षामहे ॥ ६३ ॥
अग्रे गीतं सरसकवयः पार्श्वयो र्दाक्षिणात्याः
पश्चाल्लीलावलयरणितं चामरग्राहिणीनाम् ।
यद्यस्त्येवं कुरु भवरसास्वादने लम्पटत्वं
नोचेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥ ६४ ॥
प्राप्ताः श्रियः सकलकामदुघास्ततः किं
न्यस्तं पदं शिरसि विद्विषतां ततः किम् ।
सम्पादिताः प्रणयिनोविभवास्ततः किं
कल्पंस्थितास्तनुभृतान्तनवस्ततः किम् ॥ ६५ ॥
भक्तिर्भवे मरणजन्मभयं हृदिस्थं
स्नेहो न बन्धुषु च मन्मथजा विकाराः
संसर्गदोषरहिताविजना वनान्ता
वैराग्यमस्ति किमतः परमर्थनीयम् ॥ ६६ ॥

तस्मादनन्तमजरं परमं विकासि
तद्ब्रह्म चिन्तय किमेभिरसद्विकल्पैः ।
यस्यानुषङ्गिण इमे भुवनाधिपत्य
भोगादयः कृपणलोकमता भवन्ति ॥ ६७ ॥
पातालमाविशसि यासि नभो विलंघ्य
दिङ्मण्डलं भ्रमसि मानस ! चापलेन ।
भ्रान्त्यापि जातु विमलं कथमात्मनीनं
न ब्रह्म संस्मरसि निर्वृतिमेषि केन ॥ ६८ ॥

नित्यानित्यविचारः ।

किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः
स्वर्गग्रामकुटीनिवासफलदैः कर्मक्रियाविभ्रमैः ।
मुक्त्वैकं भवदुःखभाररचनाविध्वंसकालानलं
स्वात्मानन्दपदप्रकाशकलनं शेषा वणिग्वृत्तयः ॥ ६९ ॥
गात्रं सङ्कुचितं गतिर्विगलिता भ्रष्टा च दन्तावली
दृष्टिर्नश्यति वर्द्धते वधिरता वक्त्रञ्च लालायते ।
वाक्यं नाद्रियते च बान्धवजनो भार्या न शुश्रूषते
हा कष्टं ! पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते ॥ ७० ॥
वर्णं सितं समववीक्ष्य शिरोरुहाणां
स्थानं जरापरिभवस्य तदेव पुंसाम् ।
आरोपितास्थिशकलं परिहृत्य यान्ति
चाण्डालकूपमिव दूरतरं तरुण्यः ॥ ७१ ॥

यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो
यावच्चेन्द्रियशक्तिरप्रतिहता यावत् क्षयो नायुषः ।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्
सन्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥ ७२ ॥

तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं
गुणोदारान्दारानुत परिचरामः सविषयान् ।
पिवामः शास्त्रौघानुत विविधकाव्यामृतरसान्
न विद्मः किं कुर्मः कतिपयनिमेषायुषि जने ॥ ७३ ॥

दुराराध्यः स्वामी तुरगचलचित्ताः क्षितिभुजो
वयञ्च स्थूलेच्छाः सुमहति पदे बद्धमनसः ।
जरा देहे मृत्युर्हरति दयितं जीवितमिदं
सखे ! नान्यच्छ्रेयोजगति विदुषामन्न तपसः ॥ ७४ ॥

रम्यं हर्म्यतलं न किं वसतये श्राव्यं न गेयादिकं
किं वा प्राणसमासमागमसुखं नैवाधिकं प्रीतये ।
किन्तु भ्रान्तपतङ्गपक्षपवनव्यालोलदीपाङ्कुर
च्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तङ्गताः ॥ ७५ ॥

शिवार्चनपद्धति ।

आसंसारं त्रिभुवनमिदं चिन्वतां तात तादृक्
नैवास्माकं नयनपदवीं श्रोत्रमार्गं गतोवा ।
योऽयं धत्ते विषयकरिणीगाढ़गूढ़ाभिमानः
क्षीवस्यान्तःकरणकरिणः संयमालानलीलाम् ॥ ७६ ॥

जीर्णा एव मनोरथाश्च हृदये यातञ्च तद्यौवनं
हन्ताङ्गेषु गुणाश्च वन्ध्यफलतां याता गुणज्ञैर्विना।
किं युक्तं सहसाभ्युपैति बलवान् कालः कृतान्तोऽक्षमी
न ध्यातं मदनान्तकाङ्घ्रि युगलं मुक्त्वास्तु नान्यागतिः ॥७७॥
महेश्वरे वा जगतामधीश्वरे जनार्दने वा जगदन्तरात्मनि।
न वस्तुतो मे प्रतिपत्तिरस्ति तथापि भक्तिस्तरुणेन्दुशेखरे ॥७८॥

स्फुरत्स्फारज्योत्स्नाधवलिततले क्वापि पुलिने
सुखासीनाः शान्तध्वनिषु रजनीषु द्युसरितः।
भवाभोगोभग्नाः शिवशिवशिवेत्युच्चवचसः
कदा यास्यामोऽन्तर्गतवहुलवाष्पाकुलदृशः ॥ ७९ ॥
वितीर्णे सर्वस्वे तरुणकरुणापूर्णहृदया
स्मरन्तः संसारं विरसपरिणामावधिगतम्।
कदा पुण्यारण्ये परिगतशरच्चन्द्रकिरणा
स्त्रियामा नेष्यामो हरचरणचित्तैकशरणाः ॥ ८० ॥
कदा वाराणस्याममरतटिनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम्।
अये गौरीनाथ! त्रिपुरहर! शम्भो! त्रिनयन!
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ८१ ॥
स्नात्वा गाङ्गैः पयोभिः शुचिकुसुमफलैरर्चयित्वा विभो! त्वां
ध्येये ध्यानं निवेश्य क्षितिधरकुहरग्रावशय्यानिषण्णः।
आत्मारामः फलाशी गुरुवचनरतस्त्वत्प्रसादात् स्मरारे!
दुःखं मोक्ष्ये कदाहं समकरचरणे पुंसि सेवासमुत्थम् ॥८२॥

महीशय्या शय्या विपुलमुपधानं भुजलता
वितानञ्चाकाशं व्यजनमनुकूलोऽयमनिलः ।
स्फुरद्दीपश्चन्द्रो विरतिवनितासङ्गमुदितः
सुखं शान्तः शेते मुनिरतनुभूतिर्नृप इव ॥ ८३ ॥

अवधूतचर्य्या ।

कौपीनं शतखण्डजर्जरतरं कन्था पुनस्तादृशी
नैश्चिन्त्यं निरपेक्ष्यभैक्ष्यमशनं निद्रा श्मशाने वने ।
स्वातन्त्र्येण निरंकुशं विहरणं स्वान्तं प्रशान्तं सदा
स्थैर्य्यं योगमहोत्सवेऽपि च यदि त्रैलोक्यराज्येन किम् ॥ ८४ ॥
भूः पर्य्यङ्को निजभुजलता कन्दुकः खं वितानं
दीपश्चन्द्रोविरतिवनितालब्धसङ्गप्रमोदः ।
दिक्कान्ताभिः पवनचमरैर्वीज्यमानः समन्तात्
भिक्षुः शेते नृप इव भुवि त्यक्तसर्वस्पृहोऽपि ॥ ८५ ॥
ब्रह्माण्डो मण्डलीमात्रं को लोभोऽयं मनस्विनः
शफरीस्फुरितेनाब्धे क्षुब्धता जातु जायते ॥ ८६ ॥
यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदा दृष्टं नारीमयमिदमशेषं जगदिति ।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ ८७ ॥
रम्याश्चन्द्रमरीचयस्तृणवती रम्या वनान्तस्थली
रम्यं साधुसभा समागमसुखं काव्येषु रम्याः कथाः ।

कोपोपाहितवाष्पविन्दुतरलं रम्यं प्रियाया मुखं
सर्वं रम्यमनित्यतामधिगतं चित्ते न किञ्चित् पुनः ॥८८॥
भिक्षाशी जनमध्यसङ्गरहितः स्वायत्तचेष्टः सदा
हानादानविभिन्नवर्णरहितः कश्चित्तपस्वी स्थितः ।
रथ्याकीर्णविशीर्णजीर्णवसनैरास्यूतकन्थाधरो
निर्मानो निरहंकृतिः शमसुधाभोगैकबद्धस्पृहः ॥ ८९ ॥
मातर्मेदिनि ! तात मारुत ! सखे ज्योतिः ! सुबन्धो जल !
भ्रातर्व्योम ! निबद्ध एष भवतामग्रे प्रणामाञ्जलिः ।
युष्मत्सङ्गवशोपजातसुकृतोद्रेकस्फुरन्निर्मल
ज्वालापास्तसमस्तमोहमहिमा लीये परे ब्रह्मणि ॥ ९० ॥
स्वादिष्ठं मधुनो घृताच्च रसवद्यत् प्रस्रवत्यक्षरं
दैवीवागमृतात्मनो रसवतस्तेनैव तृप्ता वयम् ।
कुक्षौ यावदिमे भवन्ति धृतये भिक्षाहृताः शक्तवः
तावद्दास्यकृतार्जनैर्नहि धनैर्वृत्तिं समीहामहे ॥ ९१ ॥
निवृत्ता भोगेच्छा पुरुषबहुमानो विगलितः
समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः ।
शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने
अहो भ्रष्टः ! कायस्तदपि मरणोपायचकितः ॥ ९२ ॥
हिंसाशून्यमयत्नलभ्यमशनं वायुः कृतो वेधसा
व्यालानां पशवस्तृणाङ्कुरभुजः पुष्टाः स्थलीशायिनः ।
संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां
यामन्वेषयतां प्रयान्ति सहसा सर्वे समाप्तिं गुणाः ॥९३॥

कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो
व्रणी पूयक्लिन्नः कृमिकुलशतैरावृततनुः।
क्षुधाक्षामो जीर्णः पिठरकपालार्पितगलः।
शुनीमन्वेति श्वा हतमपि निहन्त्येव मदनः॥ ९४॥

मृत्पिण्डो जलरेखया वलयितः सर्वोऽप्ययं नन्वणुः
स्वयीकृत्य तमेव संयुगशतैराज्ञां गणाः भुञ्जते।
दद्युर्न्ते ददतोऽथवा किमपरे क्षुद्रा दरिद्रा भृशं
धिग्धिक् कापुरुषाधमान् धनलवं तेभ्योऽपि वाञ्छन्ति ये॥९५॥

ददतु ददतु गालीर्गालिमन्तो भवन्तः
वयमपि तदभावाद्गालिदानेऽसमर्थाः।
जगति विदितमेतद्दीयते विद्यमानं
नहि शशकविषाणं कोऽपि कस्मै ददाति॥ ९६॥

पुरा विद्वत्तासीदमलिनधियां क्लेशहतये
गता कालेनासौ विषयसुखसिद्धौ विषयिणाम्।
इदानीं सम्प्रेक्ष्य क्षितिलवभुजः शास्त्रविमुखान्
अहो कष्टं! सापि प्रतिदिनमधोऽधः प्रविशति॥ ९७॥

स जातः कोऽप्यासीन्मदनरिपुणा मूर्ध्नि धवलं
कपालं यस्योच्चैर्विनिहितमलङ्कारविधये।
नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना
नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः॥ ९८॥

यदा किञ्चिज्ज्ञोऽहं द्विपइव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः।

यदा किञ्चित् किञ्चिद्गुरुजनसकाशादधिगतं
तदा मूर्खोऽस्मीति ज्वरइव मदो मे व्यपगतः ॥ ९९ ॥
माने म्लायिनि खण्डिते च वसुनि व्यर्थे प्रयातेऽर्थिनि
क्षीणे बन्धुजने गते परिजने नष्टे शनै र्यौवने
युक्तं केवलमेतदेव सुधियां यज्जह्नुकन्यापयः
पूतग्रावगिरीन्द्रकन्दरदरीकुञ्जे निवासः क्वचित् ॥ १००॥

इति श्रीभर्तृहरिविरचितं वैराग्य शतकं समाप्तम्।

---

# सूर्यशतकम्।

---

## रश्मिवर्णनम्।

जम्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुं
रक्ताः सक्तैरिवौघैरुदयगिरितटीधातुधाराद्रवस्य।
आयान्त्या तुल्यकालं कमलवनरुचेवारुणा वो विभूत्यै
भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीयाः ॥ १ ॥
भक्तिप्रह्वाय दातुं मुकुलपुटकुटीकोटरक्रोड़लीनां
लक्ष्मीमाक्रष्टुकामाइव कमलवनोद्घाटनं कुर्वते ये
कालाकारान्धकारानलपतितजगत्साध्वसध्वंसकल्याः
कल्याणं वः क्रियासुः किसलयरुचयस्ते करा भास्करस्य॥२॥
गर्भेष्वम्भोरुहाणां शिखरिषु च शिताग्रेषु तुल्यं पतन्तः
प्रारम्भे वासरस्य व्युपरतिसमये चैकरूपास्तथैव।

निष्पर्य्यायं पतन्तस्त्रिभुवनभवनप्राङ्गणे पान्तु युष्मान्
उष्मानं सन्तताध्वश्रमजमिव भृशं बिभ्रतो ब्रध्नपादाः ॥३॥
प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीतावृतीन् प्राग्
जन्तूंस्तन्तून् यथा यानतनु वितनुते तिग्मरोचिर्मरीचीन् ।
ते सान्द्रीभूय सद्यः क्रमविशददशाशादशालीविशालं
शश्वत्सम्पादयन्तोऽम्बरममलमलं मङ्गलं वो दिशन्तु ॥४॥
न्यक् कुर्वन्नोषधीशे मुषितरुचि शुचेवौषधीः प्रोषिताभा
भास्वद्ग्रावोद्गतेन प्रथममिव कृताभ्युद्गतिः पावकेन ।
पक्षच्छेदव्रणासृक्स्रुतइव दृषदो दर्शयन् प्रातरद्रेः
आताम्रस्तीव्रभानोरनभिमतनुदे स्ताद्गभस्त्युद्गमो वः ॥ ५ ॥
शीर्णघ्राणाङ्घ्रिपाणीन् घृणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन् यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्तेः
दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥ ६ ॥
बिभ्राणा वामनत्वं प्रथम मथ तथैवांशवः प्रांशवो वः
क्रान्ताकाशान्तरालास्तदनु दश पूरयन्तस्ततोऽपि ।
ध्वान्तादाच्छिद्य देवद्विष इव बलितो विश्वमाश्वश्नुवानाः
कृच्छ्राण्युच्छ्रायहेलावहसितहरयो हारिदश्वा हरन्तु ॥ ७ ॥
उद्गाढेनारुणिम्ना विदधति बहुलं येऽरुणस्यारुणत्वं
मूर्द्धोद्धूतौ खलीनक्षतरुधिररुचो ये रथाश्वाननेषु ।
शैलानां शेखरत्वं श्रितशिखरिशिखास्तन्वते ये दिशन्तु
प्रेङ्खन्तः खे खरांशोः खचितदिनमुखास्ते मयूखाः सुखं वः ॥८॥

दत्तानन्दाः प्रजानां समुचितसमयाक्लिष्टसृष्टैः पयोभिः
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः ।
दीप्तांशोर्दीर्घदुःखप्रभवभयोदन्वदुत्तारनावो
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु ॥ ९ ॥
बन्धध्वंसैकहेतुं शिरसि नतिवशाबद्धसन्ध्याञ्जलीनां
लोकानां ये प्रबोधं विदधति विपुलाम्भोजषण्डाशयेव ।
ते युष्माकं स्वचित्तप्रथितपृथुतरप्रार्थनाकल्पवृक्षाः
कल्पन्तां निर्विकल्पं दिनकरकिरणाः केतवः कल्मषस्य ॥१०॥
धारा रायोधनायापदि सपदि कराखम्बभूताः प्रपाते
तत्त्वालोकैकदीपास्त्रिदिवपतिपुरःप्रस्थितौ वीथ्य एव ।
निर्वाणोद्योगियोगिप्रशमनिजतनुद्वारि वेत्रायमाणा
स्त्रायन्तां तीव्रभानोर्दिवसमुखसुखा रश्मयः कल्मषाद्वः ॥ ११ ॥
प्राचि प्रागाचरन्त्योऽनतिचिरमचले चारुचूडामणित्वं
कुर्वन्त्यो रोचनाम्बुप्रचुरमिव दिशामुच्चकैश्चर्चनाय ।
चाटूत्कैश्चक्रनाम्नां चतुरमविचलैर्लोचनैरर्च्यमानाः
चेष्टन्तां चिन्तितानामुचितमचरमाश्चण्डरोचीरुचो वः ॥ १२ ॥
एकं ज्योतिर्दृशौ द्वे त्रिजगति गदितान्यब्जजास्यैश्चतुर्भि
र्भूतानां पञ्चमं यान्यलमृतुषु तथा षट्सु नानाविधानि ।
युष्माकं तानि सप्तत्रिदशमुनिनुतान्यष्टदिग्भाञ्जि भानोः
यान्ति प्राह्णे नवत्वं दश दधतु शिवं दीधितीनां शतानि ॥१३॥
आवृत्तिभ्रान्तविश्वाः श्रममिव दधतः शोषिणः स्वोष्मणेव
ग्रीष्मे दावाग्नितप्ता इव रसमसकृद्ये धरित्र्या धयन्ति ।

ते प्रावृष्यात्तपानातिशयरुज इवोद्दान्ततोया हिमर्त्तौ
मार्त्तण्डस्य प्रचण्डाश्चिरमशुभभिदे भीषवो वो भवन्तु ॥ १४ ॥
तन्वाना दिग्वधूनां समधिकमधुरालोकरम्यामवस्था
मारूढप्रौढिलेशोत्कलितकपिलिमालंकृतिः केवलैव ।
उज्जृम्भाम्भोजनेत्रद्युतिनि दिनमुखे किञ्चिदुन्निद्र्यमाना
श्मश्रुश्रेणीव तासां दिशतु दशशती शर्म घर्मत्विषो वः ॥ १५ ॥
मौलीन्दोर्मैषमोषीद्द्युतिमिति वृषभाङ्केन यः शङ्किनेव
प्रत्यग्रोद्घाटिताम्भोरुहकुहरगुहासुस्थितेनेव धात्रा ।
कृष्णेन ध्वान्तकृष्णस्वतनुपरिभवत्रस्नुनेव स्तुतोऽलं
त्राणाय स्तात्तनीयानपि तिमिररिपोः स त्विषामुद्गमो वः॥१६॥
विस्तीर्णं व्योमदीर्घाः सपदि दश दिशोव्यस्तवेलाम्भसोऽब्धीन्
कुर्वद्भिर्दृश्यमानां नगनगरगणाभोगपृथ्वीश्च पृथ्वीं ।
पद्मिन्युच्छ्वास्यते यैरुषसि जगदपि ध्वंसयित्वा तमिस्रा
मुस्रावि स्रंसयन्तु द्रुतमनभिमतं ते सहस्रत्विषो वः ॥ १७ ॥
अस्तव्यस्तत्वशून्यो निजरुचिरनिशानश्वरः कर्त्तुमीशो
विश्वं वेश्मेव दीपः प्रतिहततिमिरं यः प्रदेशे स्थितोऽपि ।
दिक्कालापेक्षयासौ त्रिभुवनमटतस्तिग्मभानोर्नवाख्यां
यातः शातक्रतव्यां दिशि दिशतु शिवं सोऽर्चिषामुद्गमो वः॥१८॥
मागान् म्लानिं मृणालीमृदुरितिदययेवाप्रविष्टोऽहिलोकं
लोकालोकस्य पार्श्वं प्रतपति न परं यस्तदाख्यार्थमेव ।
ऊर्द्ध्वं ब्रह्माण्डखण्डस्फुटनभयपरित्यक्तदैर्घ्योद्युसीम्नि
स्वेच्छावश्यावकाशावधिरवतु स वस्तापनो रोचिरोघः ॥ १९ ॥

अश्यामः कालएको न भवति भुवनान्तेऽपि वीतेऽन्धकारे
सद्यः प्रालेयपादो न विलयमचलश्चन्द्रमाश्चाभ्युपैति ।
बन्धः सिद्धाञ्जलीनां नहि कुमुदवनस्यापि यन्नोज्जिहाने
तत्प्रातः प्रेक्षणीयं दिशतु दिनपतेर्धाम कामाधिकं वः ॥ २० ॥
यत्कान्तिं पङ्कजानां न हरति कुरुते प्रत्युताधिक्यरम्यां
नो धत्ते तारकाभां तिरयति नितरामाशु यन्नित्यमेव ।
कर्त्तुं नालं निमेषं दिवसमपि परं यत्तदेकं त्रिलोक्याः
चक्षुः सामान्यचक्षुर्विसदृशमघभिद्भास्वतस्ताम्महो वः ॥ २१ ॥
क्ष्मां क्षेपीयः क्षपाम्भः शिशिरतरलस्पर्शतर्षाद्दतेव
द्रागाशा नेतुमाशाद्विरदकरसरः पुष्कराणां विबोधम् ।
प्रातः प्रोल्लङ्घ्य विष्णोः पदमपि घृणये वातिवेगाद्दवीय
स्युद्दामद्योतमाना दहतु दिनपतेर्दुर्निमित्तं द्युतिर्वः ॥२२॥
नो कल्पापायवायोरदयरयदलत् क्ष्माधरस्यापि गम्या
गाढोद्गीर्णोज्ज्वलश्रीरहनि न रहिता नो तमः कज्जलेन ।
प्राप्तोत्पत्तिः पतङ्गान्न पुनरुपगता मोषमुष्णत्विषो वो
वर्तिः सैवान्यरूपा सुखयतु निखिलद्वीपदीपस्य दीप्तिः ।२३॥
निःशेषाशावपूरप्रवणगुरुगुणश्लाघनीयस्वरूपा
पर्य्याप्ता नोदयादौ दिनगमसमयोपप्लवेऽप्युन्नतैव ।
अत्यन्तं यानभिज्ञा क्षणमपि तमसा साकमेकत्र वस्तुं
ब्रध्नस्येष्टा रुचिर्वो रुचिरिव रुचितस्याप्तये वस्तुनोऽस्तु ॥२४॥
बिभ्राणः शक्तिमाशु प्रशमितबलवत्तारकोर्जित्यगुर्वीं
कुर्वाणो लीलयाधः शिखिनमपि लसच्चन्द्रकान्तावभासम् ।

आदध्यादन्धकारे रतिमतिशयिनीमावहन् वीक्षणानां
बालो लक्ष्मीमपारामपर इव गुहोऽहर्पतेरातपो वः ॥ २५ ॥
तीव्रं निर्वाणहेतुर्यदपि च विपुलं यत् प्रकर्षेण चाणु
प्रत्यक्षं यत् परोक्षं यदिह यदपरं नश्वरं शाश्वतञ्च ।
यत् सर्वस्य प्रसिद्धं जगति कतिपये योगिनो यद्विदन्ति
ज्योतिस्तद्द्विप्रकारं सवितुरवतु वो बाह्यमाभ्यन्तरञ्च ॥ २६ ॥
ज्योत्स्नांसाक्रान्तत्स्नपाण्डुद्युतितिमिरमसीशेषकल्माषमीषत्
जृम्भोद्भूतेन पिङ्गं सरसिजरजसा सन्ध्यया शोणशोचिः ।
प्रातः प्रारम्भकाले सकलमिव जगच्चित्रमुन्मीलयन्ती
कान्तिस्तीक्ष्णत्विषोऽक्ष्णांमुदमुपनयतान्तूलिकेवातुलां वः ॥२७॥
आयान्ती किं सुमेरोः सरणिररुणिता पाद्मरागैःपरागैः
आहोस्वित्स्वस्य माहारजनविरचिता वैजयन्ती रथस्य ।
माञ्जिष्ठी पृष्ठवाहावलिविधृतशिरश्चामराली नु लोकैः
आशङ्क्यालोकितैवं सवितुरघनुदे स्यात् प्रभाते प्रभा वः ॥ २८ ॥
ध्वान्तध्वंसं विधत्ते न तपति नितरां नातिरूपं व्यनक्ति
न्यक्त्वं नीत्वापि नक्तं न वितरतितरां तावदह्नस्त्विषं यः ।
स प्रातर्माविरंसीदसकलपटिमा पूरयन् युष्मदाशा
माशाकाशावकाशावतरणतरुणप्रक्रमोऽर्कप्रकाशः ॥ २९ ॥
रत्नानां मण्डनाय प्रभवति नियतोद्देशलब्धावकाशं
वह्नेर्दीवादि दग्धुं निजजड़िमतया कर्त्तुमानन्दमिन्दोः ।
यत्तु त्रैलोक्यभूषाविधिरघदहनं ह्लादि वृष्ट्याशु तद्वो
बाहुल्योत्पाद्य कार्याधिकतरमवतादेकमेवार्कतेजः ॥ ३० ॥

मीलच्चक्षुर्विजिघ्र श्रुतिजडरसनं विघ्नितघ्राणवृत्ति
स्वव्यापाराक्षमत्वक् परिमुषित मनः श्वासमात्रावशेषम्।
विस्रस्ताङ्गं पतित्वा स्वपदपहरतादप्रियं वोऽर्कजन्मा
कालव्यालावलीढं जगदगद इवोत्थापयन् प्राक् प्रतापः॥२१॥
निःशेषं नैशमम्भः प्रसभमपनुदन्नश्रुलेशानुकारि
स्तोकस्तोकापनीतारुणरुचिरचिरादस्तदोषानुषङ्गः।
दाता दृष्टिं प्रसन्नां त्रिभुवननयनस्याशु युष्मद्विरुद्धं
बध्याद् व्रध्नस्य सिद्धाञ्जनविधिरपरः प्राक्तनोऽर्चिः प्रचारः॥२२॥
भूत्वा जम्भस्य भेत्तुः ककुभि परिभवारम्भभूः शुभ्रभानोः
बिभ्राणा बभ्रुभावं प्रसभमभिनवाम्भोजजृम्भा प्रगल्भा।
भूषाभूयिष्ठशोभा त्रिभुवनभवनस्याशु वैभाकरी प्राग्
विभ्रान्तिं भ्राजमाना विभवतु विभवोद्भूतये सा विभा वः॥२३॥
संसक्तं सिक्तमूलादभिनवभुवनोद्यानकौतूहलिन्या
यामिन्या कन्ययेवामृतकरकलशावर्जितेनामृतेन।
अर्कालोकः क्रियाद्वो मुदमुदयशिरश्चक्रवालालवालाद्
उद्यन्बालप्रवालप्रतिमरुचिरहः पादपप्राक्प्रवालः॥ २४ ॥
भिन्नं भासारुणस्य क्वचिदभिनवया विद्रुमाणां त्विषेव
भिन्नं नक्षत्ररत्नद्युतिनिकरकरालाम्बरालं क्वचिच्च।
अन्तर्निःशेषकृष्णप्रियमुदधिमिव ध्वान्तराशिं पिबंस्ता
दौर्वः पूर्वोऽप्यपूर्वोऽग्निरिव भवदघप्लुष्टयेऽर्कावभासः॥ २५ ॥
गन्धर्वैर्गद्यपद्यव्यतिकरितवचो हृद्यमातोद्यवाद्यैः
यो देवो नारदाद्यैर्मुनिभिरभिनुतो वेदवेद्यैर्विभिद्य।

आसाद्यापाद्यते यं पुनरपि च जगद्यौवनं सद्य उद्यन्
उद्योतोद्योतितद्योर्यं तु दिवसकृतो सावविद्यानिवोऽद्य ॥ २६ ॥
आरालैश्चन्द्रकान्तैश्च्युततिमिरतया भानवात्तारकाणाम्
एणाङ्कालोकलोपादुपहतमहसामोषधीनां लयेन ।
आरादुत्प्रेक्ष्यमाणाच्चणमुदयतटान्तर्हितस्याहिमांशोः
आभा प्राभातकी वोऽवतु न तु नितरान्तावदाविर्भवन्ती ॥ २७ ॥
सानौ सा नौदयेनारुणितदलपुनर्यौवनानां वनानाम्
आलीमालीढपूर्वा परिहृतकुहरोपान्तनिम्नातनिम्ना ।
भावोभावोपशान्तिं दिशतु दिनपतेर्भासमाना समाना
राजी राजीवरेणोः समसमयमुदेतीव यस्या वयस्या ॥ २८ ॥
उज्जृम्भाम्भोरुहाणां प्रभवति पयसां या श्रिये नोष्णतायै
पुष्णात्यालोकमात्रं न तु दिशति दृशां दृश्यमाना विघातम् ।
पूर्वाद्रेरेव पूर्वन्दिवमनु च पुनः पावनी दिङ्मुखानां
एनांस्येनोविभासीमुदतनुतिपदैकास्पदं प्राक्तनी वः ॥ २९ ॥
वाचां वाचस्पतेरप्यचलभिदुचिता चार्यकाणां प्रपञ्चैः
वैरिञ्चानां तथोच्चारिततरुचिर ऋचामाननानां चतुर्णाम् ।
उच्चेताश्वास्तु वाच्यच्युतिशुचिचरितं यस्य नोच्चैर्विविच्य
प्राच्यं वर्चश्चकासच्चिरमुपचिनुतात्तस्य चण्डार्चिषो वः ॥ ४० ॥
मूर्ध्न्यद्रेर्धातुरागस्तरुषु किशलयो विद्रुमौघः समुद्रे
दिङ्मातङ्गोत्तमाङ्गेष्वभिनवनिहितः सान्द्रसिन्दूररेणुः ।
सीम्नि व्योम्नश्च हेम्नः सुरशिखरिभुवो जायते यः प्रकाशः
शोणिम्नाऽसौ खरांशोरुषसि दिशतु वः शर्म्म शोभैकदेशः ॥ ४१ ॥

यस्ताद्रीशोत्तमाङ्गे श्रितशशिनि तमः कालकूटे निपीते
याति व्यक्तिं पुरस्तादरुणकिसलये प्रत्युषः पारिजाते ।
उद्यन्त्या रक्तपीताम्बरविशदतरोद्दीपिता तीक्ष्णभानोः
लक्ष्मीर्लक्ष्मीरिवास्तु स्फुटकमलपुटोपाश्रया श्रेयसे वः ॥४२ ॥
नोदन्वान् जन्मभूमिर्न तदुदरभुवो बान्धवाः कौस्तुभाद्या
यस्याः पाणौ न पद्मं नच नरकरिपूरस्थलीवासवेश्म ।
तेजोरूपा परैव त्रिषु भुवनतटेष्वादधाना व्यवस्थां
सा श्रीः श्रेयांसि दिश्यादशिशिरमहसो मण्डलाग्रोद्गता वः ॥४३॥

अश्ववर्णना ।

रक्षन्त्वक्षुद्रहेमोपलपटलमलं लाघवादुत्पतन्तः
पातङ्गाः पङ्क्तिशाजितपवनजवा वाजिनस्ते जगन्ति ।
येषां वीतान्यचिह्नोन्वयमपि वहतां मार्गमाख्याति मेरा
वुद्यन्नुद्दामदीप्तिद्युमणिमणिशिलावेदिकाजातवेदाः ॥ ४४ ।
मुष्टाः पृष्टिं शुपातैरतिनिकटतया दत्तदाहातिरेकैः
एकाहाक्रान्तकृत्स्नत्रिदिवपथपृथुश्वासशोषाः श्रमेण ।
तीव्रोदन्वास्त्वरन्तामहितविहतये सप्तयः सप्तसप्ते
रभ्यासाकाशगङ्गाजलशवलगलावर्जिताश्राननना वः ॥ ४५ ॥
मत्वाऽन्यान् पार्श्वतोऽश्वान् स्फटिकतटदृषद्दृष्टदेहाद्रवन्तो
व्यस्तेऽह्न्यस्तसन्धेयमिति मृदुपदा पद्मरागोपलेषु ।
सादृश्यात् दृश्यमूर्त्तिर्मरकततटभुवि क्लिष्टसूता सुमेरोः
मूर्द्धन्यावृत्तिलब्धध्रुवगतिरवतु ब्रध्नवाहावली वः ॥ ४६ ॥

हेलालोलं वहन्ती विषधरदमनस्याग्रजेनावकृष्टां
स्वर्वाहिन्याः सुदूरं जनितजवपयाःस्यन्दनस्य स्वदेन ।
निर्व्याजं तापमाने हरितिमनि निजेस्फीतफेनाहितश्रीः
श्रेयांस्यश्वपङ्क्तिः समयतु यमुनेवापरा तापनी वः ॥ ४७ ॥
मार्गोपान्ते सुमेरोर्नुवतिकृतनतौ नाकधाम्नां निकाये
वीक्ष्य व्रीडावतीनां प्रतिकुहरमुखं किन्नरीणां मुखानि ।
सूतेऽसूयत्यपीषज्जडगतिवहतां कन्धरार्द्धैर्वलद्भिः
वाहानां व्यस्यतादः सममसमहरेर्ह्रेषितं कल्मषाणि ॥ ४८ ॥
धुन्वन्तो नीरदालीर्निजरुचिहरिताः पार्श्वयोः पक्षतुल्या
स्तानूत्तानैः खलीनैः खचितमुखरुचःस्रोतता लोहितेन ।
उड्डीयेव व्रजन्तो वियति गतिवशादर्कवाहाः क्रियासुः
क्षेमं हेमाद्रिहृद्यद्रुमशिखरशिरःश्रेणिशाखाशुका वः ॥ ४९ ॥

सारथिवर्णना ।

प्रातः शैलाग्ररङ्गेरजनिजवनिकापायसंलक्ष्य लक्ष्मीः
विक्षिप्यापूर्वपुष्पाञ्जलिमुडुनिकरं सूत्रधारायमाणः ।
यामेष्वङ्केष्विवाङ्कः कृतरुचिषु चतुर्ष्वेव यातः प्रतिष्ठा
मव्यात् प्रस्तावयन् वो जगदटनमहानाटिकां सूर्यसूतः ॥ ५० ॥
आक्रान्त्यावाह्यमानं पशुमिव हरिणां वाहकोऽग्र्योहरीणां
भ्राम्यन्तं पक्षपाताज्जगति समरुचिः सर्वकर्मैकसाक्षी ।
शत्रुं नेत्रश्रुतीनामवजयति वयोज्येष्ठभावे समेऽपि
स्थाम्ना धाम्नां निधिर्यः सभवदघनुदे नूतनस्तादनूरुः ॥ ५१ ॥

दत्तार्घैर्दूरनम्रैर्वियति विनयतो वीक्षितः सिद्धसङ्घैः
सामर्थ्यं सारथिर्वः स दृशशततनुः सातिरेकं करोतु।
आपीय प्रातरेव प्रततहिमपयः स्यन्दिनीरिन्दुभासो
यः काष्ठादीपनोऽग्रे जड़ित इव भृशं सेवते पृष्ठतोऽर्कम्॥५२॥
मुञ्चन् रश्मीन् दिनादौ दिनगमसमये संहरंश्च स्वतन्त्रः
स्तोत्रप्रख्यातवीर्य्यो विरतहरिपदाक्रान्ति वद्धाभियोगः।
कालोत्कर्षाल्लघुत्वं प्रसभमधिपतौ योजयन् यो द्विजानां
सेवाप्रीतेन पूष्णा स्वसम इव कृतस्त्रायतां सोऽरुणो वः॥५३॥
शात श्यामाललतायाः परशुरिव तमोऽरण्यवह्नेरिवार्चिः
प्राच्येवाग्रे ग्रहीतुं ग्रहकुमुदवनं प्रागुदस्तो ग्रहस्तः।
ऐक्यं भिन्दन् द्युभूम्योरवधिरिव विधातेव विश्वप्रबोधं
वाहानां वोविनेता व्यपनयतु विपन्नाम धामाधिपस्य॥५४॥
पौरस्त्यस्तोयदर्त्तोः पवन इव पतन् पावकस्येव धूमो
विश्वस्येवादिसर्गः प्रणव इव परं पावनं वेदराशेः।
सन्ध्यानृत्योत्सवेच्छोरिव मदनरिपोर्नन्दिनान्दीनिनादः
सौरस्याग्रेसुखं वो वितरतु विनतानन्दनः स्यन्दनस्य॥५५॥
पर्य्याप्तं तप्तचामीकरकटकतटे श्लिष्टशीतेतरांशो
रासीदत् स्यन्दनाश्वानुकृतिमरकतं पद्मरागायमाणः।
यः सोत्कर्षां विभूषां कुरुत इव कुलक्ष्माभृदीशस्य मेरोः
एनां स्यन्नाय दूरं समयतु स गुरुः काद्रवेयद्विषो वः॥५६॥
नीत्वाश्वान् सप्तकक्षा इव नियमवशं वेत्रकल्पप्रतोद
स्तूर्णं ध्वान्तस्य राशावितरजन इवोत्सारिते दूरभाजि।

पूर्वं प्रष्ठो रथस्य क्षितिभृदधिपतीन् दर्शयंस्त्रायतां व
स्त्रैलोक्यास्थानदानोद्यतदिवसपतेः प्राक् प्रतीहारपालः ॥५७॥
वह्निन् जातं विकाशोन्मुखकमलवनं भासि मो भासि वङ्के
तातं नत्वाश्वपार्श्वान्नय यम महिषं राक्षसा वीक्षिताः स्थ ।
सप्तान् सिञ्च प्रचेतः पवन भज जवं वित्तपा वोदितस्त्वं
वन्देशर्वेति जल्पन् प्रतिदिशमधिपान् पातु पूष्णोऽग्रणीर्वः ॥५८
पाशानाशान्तपालाद्वरुण वरुणतो मा ग्रहीः प्रग्रहार्थं
तृष्णां कृष्णस्य चक्रे जहिहि नहि रथो याति मे नैकचक्रः ।
योक्तुं योग्यं किमुच्चैःश्रवसमभिलषस्यष्टमं व्रत्रशत्रो
स्त्यक्तान्यापेक्षविश्वोपकृतिरिति रविः शास्ति यं सोऽवताद्वः ।५९॥
नोमूर्च्छां छिन्नवाञ्छः श्रमविवशवपुर्नैवनाप्यास्य शोषी
पान्थः पथ्यतराणि क्षपयतु भवतां भास्वतोऽग्रेसरः सः ।
यः संश्रित्यत्रिलोकीमटति पटुतरैस्ताप्यमानो मयूखैः
आरादारामरेखामिवहरितमणिश्यामलामश्वपंक्तिम् ॥ ६० ॥
शीर्दन्तोऽन्तर्निमज्जज्जडखुरमुषलाः सैकते नाकनद्याः
स्कन्दन्तःकन्दराली कनकशिखरिणो मेखलासु स्खलन्तः ।
दूरं दूर्वास्थलोत्का मरकतदृषदि स्थाणवो यत्र याताः
पूष्णोऽश्वाः पूरयंस्तैस्तदवतु जवनैर्लङ्घितनाग्रगो वः ॥ ६१॥
पीनोरःप्रेरिताभ्रैश्चरमखुरपुटाग्रस्थितैः प्रातरद्रा
वादीर्घाङ्गैरुदस्तो हरिभिरपगतासङ्गनिःशब्दचक्रः ।
उत्तानानूरुमूर्धावनतिहठभवद्विप्रतीपप्रणामः
प्राक्श्रेयो विधत्तांसवितुरवतरन् व्योमवीथीं रथो वः ॥६२ ॥

उत्कीर्णस्वर्णरेणुद्रुतखुरदलितापार्श्वयोः शश्वदश्वैः
अश्रान्तभ्रान्तचक्रभ्रमनिखिलमिलन्नेमि निम्ना भरेण ।
मेरोर्मूर्द्धन्यधं वो विघटयतु रवेरेकवीथी रथस्य
स्रोणोदन्नाम्बुरिक्तप्रकटितपुलिनोद्धूसरा स्वर्धुनी वः ॥ ६३ ॥
ध्वान्तौघध्वंसदीक्षाविधिगुरु वहता प्राक्समस्तंकराणां
अर्यम्णा यो गरिम्णः पदमतुलमुपानीयताध्यासनेन ।
सश्रान्तानां नितान्तं भरमिव मरुतामक्षमाणां विसोढुं
स्कम्भात् स्कन्धं व्रजन् वो वृजिनविजितये भास्वतः स्यन्दनोऽस्तु॥६४
योक्त्रीभूतान् युगस्य ग्रसितुमिवपुरो दन्दशूकान् दधानो
द्वेधाव्यस्ताम्बुवाहावलिविहितबृहत्पक्षविक्षेपशोभः
सावित्रः स्यन्दनोऽसौ निरतिशयरयप्रीणितानूरुरेनः
क्षेपीयो वो गरुत्मानिव हरतु हरीच्छाविधेयप्रचारः ॥ ६५॥
धूर्ध्वस्ताग्र्यग्रहाणि ध्वजपटपवनान्दोलितेन्दूनि दूरं
राहौ ग्रासाभिलाषादनुसरति पुनर्दत्तचक्रव्यथानि ।
श्रान्ताश्वश्वासहेलाधुतविबुधधुनीनिर्झराम्भांसि भद्रं
देयासुर्वोदवीयो दिवि दिवसपतेः स्यन्दनप्रस्थितानि ॥६६॥
अक्षे रक्षां निबध्य प्रतिसरवलयैर्योजयन्त्यो युगाग्रं
धूस्तम्भे दग्धधूपाः प्रतिहतसुमनो गोचरे कूबरस्य ।
चर्चाश्चक्रे ददत्यो मलयजरजसा सिद्धसाध्यस्त्रिसन्ध्यं
वन्दन्तेयं द्युमार्गे स दहतु दुरितान्यंशुमत्स्यन्दनो वः ॥६७॥
नन्तुं नाकालयानामनिशमुपनताम्भहतिः पंक्तिरेव
चोदेः नक्षत्रराशेरक्षशरयमिलच्चक्रपिष्टस्य धूलिः ।

क्लेषाङ्कादौ हरीणां सुरशिखरिदरीः पूरयन्नेमिनादै
र्यस्याव्यात्तीव्रभानोः स दिवि भुवि यथा व्यक्तचिह्नोरथो वः ॥ ६८॥
एकाहेनैव दीर्घां त्रिभुवनपदवीं लङ्घयन् यो लघिष्ठः
पृष्ठे मेरोर्गरीयान्दलितमणिदृषत्त्विंषि पिंषन् शिरांसि
यः सर्वस्योपरिष्टादथच पुनरधस्तादिवास्तादिमूर्ध्नि
ब्रघ्नस्याव्यात्स एवं दुरधिगमपरिस्पन्दनः स्यन्दनो वः ॥ ६९ ॥
निष्पन्दानां विमानावलिविततदिवां देववृन्दारकाणां
वृन्दैरानन्दसान्द्रोद्यममपि वहतां विन्दतां वन्दितुं नो ।
मन्दाकिन्याममन्दः पुलिनभृति मृदुर्मन्दरे मन्दराभे
मन्दारैर्मण्डितोऽरं दधदपि दिनकृत्स्यन्दनस्ताम्मुदे वः ॥ ७० ॥
चक्री चक्रारपंक्तिं हरिरपि च हरीन् धूर्जटिर्धूर्ध्वजाग्रान्
अक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूवराग्रं कुवेरः ।
रंहः सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौतिप्रीतिप्रसन्नोन्वहमहिमरुचेःसोऽवतात्स्यन्दनो वः ॥ ७१॥
नेत्राहीनेन मूले विहितपरिकरः सिद्धसाध्यैर्मरुद्भिः
पादोपान्ते स्तुतोऽलं वलिहरिरभसाकर्षणाबद्धवेगः ।
भ्राम्यन् व्योमाम्बुराशावशिशिरकिरणस्यन्दनः सन्ततं वो
दिश्याल्लक्ष्मीमतुल्यामतुलितमहिमेवापरो मन्दराद्रिः ॥ ७२॥

मण्डलवर्णनम् ।

यज्ज्यायो वीजमह्नामपहततिमिरं चक्षुषामञ्जनं यत्
यद्द्वारं मुक्तिभाजां यदखिलभुवनज्योतिषामेकमोकः ।

यद्दुग्धाम्भोनिधानं धरणिरससुधापानपात्रं महद्यद्
दिग्याद्दीप्तस्य भासां सततमविकलं मण्डलं मङ्गलं वः ॥७३॥
वेलावर्द्धिष्णुसिन्धोः पय इव स्वमिवार्द्धोद्गतोऽग्रग्रहीढ्
स्तोकोद्भिन्नस्वचिह्नप्रसवमिव मधोरास्यमस्यन् महांसि ।
प्रातः पूष्णोऽंशुभानि प्रशमयतु शिरःशेखरीभूतमद्रेः
पौरस्त्यस्योद्गभस्तिस्तिमिततमतमः खण्डनं मण्डलं वः ॥ ७४ ॥
प्रत्युप्तस्तप्तहेमोज्ज्वलरुचिरचलः पद्मरागेण येन
ध्यायः किञ्जल्कपुञ्जं यदलिकुलसितैरम्बरेन्दीवरस्य ।
कालव्यालस्य चिह्नं महिततममहोमूर्द्धि रत्नं महद्यत्
दीप्तांशोः प्रातरव्यात्तदविकलजगन्मण्डनंमङ्गलं वः ॥ ७५ ॥
कस्त्राता तारकाणां पतति तनुरवश्यायबिन्दुर्यथेन्दु
निद्राणात्क्स्मरारेरुषसि मुररिपोःकौस्तुभोनोद्गभस्तिः ।
वह्नेः सापह्नुतेव द्युतिरुदयगते यत्र तन्मण्डलं वो
मार्तण्डीयं पुनीयाद्दिवि भुवि च तमांसीव मुष्णन् महांसि ।७६॥
यत्प्राच्यांप्राक्चकास्ति प्रभवति च यतः प्राच्यसावुज्जिहाना
दिवं मध्ये यदह्नो भवति ततरुचा येन चोत्पाद्यतेऽह्नः ।
यत्पर्य्यायेण लोकानवति च जगतां जीवितं यच्च तद्वो
विश्वानुग्राहि विश्वंसृजदपि च रवेर्मण्डलं मुक्तयेऽस्तु ॥ ७७ ॥
शुष्यन्त्यूढान्धकारामकरवसतयोमारवीणां स्थलीनां
येनोत्तप्ताः स्फुटन्तस्तडिति तिलतुलां यान्त्यगेन्द्रायुगान्ते ।
तच्चण्डांशोरकाण्डत्रिभुवनदहनाशङ्कया धाम कृत्स्नं
संहृत्यालोकमात्रं प्रलघुविदधतस्तान्मुदे मण्डलं वः ॥ ७८ ॥

उद्यद्यूद्यानवाप्यां बहुलतमतमः पङ्कपूरं विदार्य
प्रोज्झितं पत्रपार्श्वैर्विमलमरुणच्छायया विस्फुरन्त्या ।
कल्याणानि क्रियाद्वः कमलमिव महन्मण्डलं चण्डभानोः
अन्वीतं व्यक्तिहेतोरसकृदलिकुलाकारिणा राहुणा यत् ॥ ७९ ॥
चक्षुर्दक्षद्विषो यन्न तु दहति पुरा पूरयत्येव कामं
नास्तं जुष्टं मरुद्भिर्यदिह नियमिनां यानपात्रं भवाब्धौ ।
यद्वीतभ्रान्तिमग्रघ्नमदपि जगतां भ्रान्तिमभ्रान्ति हन्ति
व्रध्नस्याव्याद्विरुद्धक्रियमथ च हिताधायि तन्मण्डलं वः ॥ ८० ॥
सिद्धैः सिद्धान्तमिश्रं श्रितविधिविबुधैश्चारणैश्चाटुगर्भं
गीत्वा गन्धर्वमुख्यैर्मुहुरहिपतिभिर्यातुधानैर्यतात्मा ।
साध्यैःसाध्यैर्मुनीन्द्रैर्मुदिततममनो मोक्षिभिः पक्षपातात्
प्रातः प्रारभ्यमाणस्तुतिरवतु रविर्विश्ववन्द्योदयो वः ॥ ८१ ॥
भासामासन्नभावाधिकतरपटुलश्चक्रवालस्य तापात्
छेदादच्छिन्नगच्छत्तुरगखुरपुटन्यासनिःशङ्कटङ्कैः ।
निःसङ्गस्यन्दनाङ्ग भ्रमणनिकषणात्पातु वस्त्रिप्रकारं
तप्तांशुस्तत्परीक्षापर इव परितः पर्यटन् हाटकाद्रिम् ॥ ८२ ॥
नोशुष्कं नाकनद्या विकसितकनकाम्भोरुहाभ्राजितन्तु
मुष्टानैवोपभोग्या भवति भृशतरं नन्दनोद्यानलक्ष्मीः ।
नोशृङ्गाणि द्रुतानि द्रुतममरगिरेः कामधौतानि धौता
नीढं धाम द्युमार्गेऽन्नदयति दयया यत्र सोव्याद्दिनो वः ॥ ८३ ॥
ध्वान्तस्यैवान्तहेतुर्न भवति मलिनैकात्मनः पाप्मनोऽपि
प्राक्पादोपान्तभाजां जनयति नपरम्पङ्कजानां प्रबोधम् ।

कर्त्ता निःश्रेयसानामपि नतु खलु यः केवलं वासराणां
सोऽव्यादेकोद्यमेच्छाविहितबहुबहिर्दिष्टकार्योऽर्यमा वः ॥ ८४ ॥
लोठल्लोष्टाविचेष्टः श्रितशयनतलो निःसहीभूतदेहः
सन्देही प्राणितव्येसपदिदशदिशः प्रेक्षमाणोऽन्धकाराः ।
निःश्वासायासनिष्ठः परमपरवशोजायते जीवलोकः
शोकेनान्यत्र लोकाभ्युदयकृतिगते यत्र सोऽर्कोऽवताद्वः ॥ ८५ ॥
क्रामल्लोलोपिलोकांस्तदुपकृतिकृतावाश्रितः स्थैर्यकोटीं
तृष्णां दृष्टिं विजिह्मां विदधदपि करोत्यन्तरत्यन्तभद्राम् ।
यस्तापस्यापि हेतुर्भवति नियमिनामेकनिर्वाणदायी
भूयात्प्रागवस्थाधिकतरपरिणामोदयोऽर्कः श्रिये वः ॥ ८६ ॥
व्यापन्नर्त्तुर्नकालो व्यभिचरति फलं नौषधीर्वृष्टिरिष्टा
नेष्टैस्तुष्यन्ति देवा नहि वहति मरुन्निर्मलाभानि भानि ।
आशाः शान्तानभिन्दन्त्यवधिमुदधयो बिभ्रति क्ष्माभृतः क्ष्मां
यस्मिंस्त्रैलोक्यमेवं न चलतितपतिस्तात् ससूर्यः श्रिये वः ॥ ८७
कैलासे कृत्तिवासा विहरतिविरहत्रासदेहोढकान्तः
श्रान्तः शेते महाहावधिजलधिविनाच्छद्मना पद्मनाभः ।
योगी योगैकतानो गमयति सकलं वासरं स्वं स्वयम्भू
र्भूरित्रैलोक्य चिन्ताभृतिभुवनविभो यत्र भास्वान् स वोऽव्यात् ८८
एतद्यन्मण्डलं खे तपति दिनकृतस्तानृचोर्चींषि यानि
द्योतन्ते तानि सामान्ययमपि पुरुषोमण्डलेण्वयजूंषि ।
एवं यं वेद वेदत्रितयमयमयं वेद वेदीसमग्रो
वर्गः स्वर्गापवर्गं प्रकृतिरविकृतिः सोऽस्तु सूर्यः श्रिये वः ॥ ८९ ॥

नाकौकः प्रत्यनीकक्षतिपटुमहसां वासवाग्रेसराणां
सर्वेषां साधुपातां जगदिदमदितेरात्मजत्वे समेऽपि ।
येनादित्याभिधानं निरतिशयगुणे नात्मनि न्यस्तमस्तु
स्तुत्यस्त्रैलोक्यवन्द्यैस्त्रिदशमुनिगणैः सोंऽशुमान् श्रेयसे वः ॥९०

भूमिं धाम्नोभिवृष्ट्या जगति जलमयीं पावनीं संस्मृताव
प्याग्नेयीं दाहशक्तिं मुहुरपि यजमानात्मिकां प्रार्थितानाम् ।
लीलामाकाश एवामृतकरघटितां ध्वान्तपक्षस्य पर्व
ण्येवं सूर्योऽष्टभेदो भव इव भवतः पातु बिभ्रत् स्वमूर्त्तिम् ॥९१॥

प्राक्कालोन्निद्रपद्माकरपरिमलनाविर्भवत्पादशोभो
भक्त्यात्यक्तोरुखेदोन्नतिर्दिवि विनतासूनुना नीयमानः ।
सप्ताब्धाम्नापरान्तान्यधिकमधरयन् योजगन्ति स्तुतोऽलं
देवैर्दैवः सपायादपर इव मुरारातिरक्ष्णां पतिर्वः ॥ ९२ ॥

यः स्रष्टापां पुरस्तादचलवरसमभ्युन्नतेर्हेतुरेको
लोकानां यस्त्रयाणां स्थित उपरिपदेदुर्विलंघ्येन धाम्ना ।
सद्यः सिद्धैः प्रसन्नद्युतिशुभचतुराशामुखस्ताद्विभक्तो
द्वेधाविधाइवाविष्कृतकमलरुचिः सोऽर्चिषामाकरो वः ॥९३॥

साद्रिद्यर्वीनदीकादिशति दशदिशोदर्शयन् प्राग् दृशो यः
सादृश्यं दृश्यते नो सदशशतदृशि त्रैदशेयस्य देशे ।
दीप्तांशुर्वः स दिश्यादशिवयुगदशा दर्शितद्वादशात्मा
शंशास्त्यश्वांश्च यस्याशयविदतिशयं दन्दशूकासनाद्यः ॥ ९४ ॥

तीर्थानि व्यर्थकानि ह्रदनदसरसीनिर्झराम्भोजिनीनां
नोदन्वन्तो नुदन्ति प्रतिदिनमशुभं शुभ्रपातानुबन्धि ।

आपो नाकापगाया अपि कलुषमुषो मज्जतां नैव यत्र
त्रातुं यातेऽन्यलोकान् स दिशतु दिवसस्यैकहेतुर्हितं वः ॥ ९५ ॥
एतत्पातालपङ्कप्लुतमिव तमसा साकमुद्गाढ़मासी
दप्रज्ञाताप्रतर्क्यं निरवगति तथालक्षणं सुप्तमन्तः ।
यादृक् सृष्टेः पुरस्तान्निशि निशि निखिलं जायते तादृगेव
त्रैलोक्यं यद्वियोगादवतु रविरसौ सर्गतुल्योदयो वः ॥ ९६ ॥
द्वीपे योऽस्ताचलोऽस्मिन् भवति खलु स एवापरत्रोदयाद्रिः
या यामिन्युज्ज्वलेन्दुद्युतिरिह दिवसोऽन्यत्र दीप्तातपः सः ।
यद्वश्यौ देशकालाविति हि नियमतो नोभयं देशकाला
वव्यात्तत्स्वप्रभुत्वाङ्कितभुवनहितो हेतुरह्नामिनो वः ॥ ९७ ॥
व्यग्रैरुग्रग्रहोडुग्रसनगुरुतरैर्नोसमग्रैरुदग्रैः
प्रत्यग्रैरीषदुग्रैरुदयगिरिगतो गोगणैर्गौरयन् गाम् ।
उद्भूमार्चिर्विलीनामरनगरनगग्राममगर्भामिवाग्राम्
अग्रेश्रेयोविधत्ते क्षपयतु गहनं स ग्रहग्रामणीर्वः ॥ ९८ ॥
योनिः साम्नां विधाता मधुरिपुरजितो धूर्जटिः शङ्करोऽसौ
मृत्युः कालोऽलकायाः पतिरपि धनदः पावको जातवेदाः
इत्थं संज्ञा हवित्यादिवदमृतभुजां या यदृच्छाप्रवृत्ता
स्तासामेकोऽभिधेयस्तदनुगुणगणो यः स सूर्योऽवताद्वः ॥ ९९ ॥
देवः किं बान्धवः स्यात्प्रियसुहृदथवाचार्य आहोस्विदार्यो
रक्षा चक्षुर्नु दीपो गुरुरुत जनको जीवितं बीजमोकः ।
एवं निर्णीयते यः क इव न जगतां सर्वदा सर्वदोऽसौ
सर्वाकारोपकारी दिशतु दशशताभीषुरभ्यर्थितं वः ॥ १०० ॥

श्लोका लोकस्य भूत्यै शतमिति रचिताः श्रीमयूरेण भक्त्या
युक्तश्चैतान् पठेद्यः सकृदपि पुरुषः सर्व्वपापैर्विमुक्तः ।
आरोग्यं सत्कवित्वं मतिमतुलबलं कीर्त्तिमायुः प्रकर्षं
विद्यामैश्वर्य्यमर्थं सुखमपि लभते सोऽत्र सूर्य्यप्रसादात् ॥ १०१ ॥

इति महाकवि श्रीमयूरभट्टकृतं सूर्य्यशतकं समाप्तम् ।

---

## चाणक्यशतकम् ।

---

नानाशास्त्रोद्धृतं वक्ष्ये राजनीतिसमुच्चयम् ।
सर्व्वबीजमिदं शास्त्रं चाणक्यं सारसंग्रहम् ॥ १ ॥
मूलसूत्रं प्रवक्ष्यामि चाणक्येन यथोदितम् ।
यस्य विज्ञानमात्रेण मूर्खो भवति पण्डितः ॥ २ ॥
विद्वत्त्वञ्च नृपत्वञ्च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्व्वत्र पूज्यते ॥ ३ ॥
पण्डिते च गुणाः सर्व्वे मूर्खे दोषा हि केवलम् ।
तस्मान्मूर्खसहस्रेषु प्राज्ञ एको विशिष्यते ॥ ४ ॥
मातृवत् परदारेषु परद्रव्येषु लोष्ट्रवत् ।
आत्मवत् सर्व्वभूतेषु यः पश्यति स पण्डितः ॥ ५ ॥
किं कुलेन विशालेन गुणहीनस्तु यो नरः ।
अकुलीनोऽपि शास्त्रज्ञो दैवतैरपि पूज्यते ॥ ६ ॥

रूपयौवनसम्पन्ना विशालकुलसम्भवाः।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥ ७ ॥
नक्षत्रभूषणं चन्द्रो नारीणां भूषणं पतिः।
पृथिवीभूषणं राजा विद्या सर्व्वस्य भूषणम् ॥ ८ ॥
माता शत्रुः पिता वैरी येन बालो न पाठितः।
न शोभते सभामध्ये हंसमध्ये वको यथा ॥ ९ ॥
वरमेको गुणी पुत्रो नच मूर्खशतैरपि।
एकश्चन्द्रस्तमो हन्ति न च तारागणैरपि ॥ १० ॥
लालयेत् पञ्च वर्षाणि दश वर्षाणि ताड़येत्।
प्राप्ते तु षोड़शे वर्षे पुत्रं मित्रवदाचरेत् ॥ ११ ॥
लालने बहवो दोषास्ताड़ने बहवो गुणाः।
तस्मात् पुत्रञ्च शिष्यञ्च ताड़येन्नतु लालयेत् ॥ १२ ॥
एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना।
वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥ १३ ॥
एकेनापि कुवृक्षेण कोटरस्थेन वह्निना।
दह्यते तद्वनं सर्वं कुपुत्रेण कुलं यथा ॥ १४ ॥
दूरतः शोभते मूर्खो लम्बशाटपटावृतः।
तावच्च शोभते मूर्खो यावत् किञ्चिन्न भाषते ॥ १५ ॥
विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम्।
नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ १६ ॥
उत्सवे व्यसने चैव दुर्भिक्षे शत्रुविग्रहे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ १७ ॥

परोक्षे कार्य्यहन्तारं प्रत्यक्षे प्रियवादिनम्।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम्॥ १८॥
सकृद् दुष्टञ्च मित्रं यः पुनः सन्धातुमिच्छति।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥ १९॥
न विश्वसेदविश्वस्तं मित्रञ्चापि न विश्वसेत्।
कदाचित् कुपितं मित्रं सर्वदोषं प्रकाशयेत्॥ २०॥
जानीयात् प्रेषणे भृत्यान् बान्धवान् व्यसनागमे।
मित्रञ्चापदि काले च भार्य्याञ्च विभवक्षये॥ २१॥
उपकारगृहीतेन शत्रुणा शत्रु मुद्धरेत्।
पादलग्नं करस्थेन कण्टकेनेव कण्टकम्॥ २२॥
न कश्चित् कस्यचिन्मित्रं न कश्चित् कस्यचिद्रिपुः।
कारणेन हि जानाति मित्राणि च रिपूंस्तथा॥ २३॥
दुर्जनः प्रियवादी च नैतद्विश्वासकारणम्।
मधु तिष्ठति जिह्वाग्रे हृदये तु हलाहलम्॥ २४॥
दुर्जनः परिहर्तव्यो विद्ययालङ्कृतोऽपि सः।
मणिना भूषितः सर्पः किमसौ न भयङ्करः॥ २५॥
सर्पः क्रूरः खलः क्रूरः सर्पात् क्रूरतरः खलः।
मन्त्रौषधिवशः सर्पः खलः केन निवार्य्यते॥ २६॥
नखिनाञ्च नदीनाञ्च शृङ्गिणां शस्त्रपाणिनाम्।
विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च॥ २७॥
हस्ती हस्तसहस्रेण शतहस्तेन वाजिनः।
शृङ्गिणो दशहस्तेन स्थानत्यागेन दुर्जनः॥ २८॥

आपदर्थे धनं रक्षेत् दारान् रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि॥ २९॥
परदारं परद्रव्यं परीवादं परस्य च।
परीहासं गुरोः स्थाने चापल्यञ्च विवर्जयेत्॥ ३०॥
त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥ ३१॥
चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान्।
नासमीक्ष्य परं स्थानं पूर्व्वमायतनं त्यजेत्॥ ३२॥
लुब्धमर्थेन गृह्णीयात् क्रुद्धमञ्जलिकर्म्मणा।
मूर्खं छन्दोऽनुवृत्तेन तथा तथ्येन पण्डितम्॥ ३३
अर्थनाशं मनस्तापं गृहे दुश्चरितानि च।
वञ्चनञ्चापमानञ्च मतिमान् न प्रकाशयेत्॥ ३४
धनधान्यप्रयोगेषु तथा विद्यागमेषु च।
आहारे व्यवहारे च त्यक्तलज्जः सदा भवेत्॥ ३५॥
धनिनः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः।
पञ्च यत्र न विद्यन्ते तत्र वासं न कारयेत्॥ ३६॥
यस्मिन् देशे न सम्मानं न प्रीतिर्न च बान्धवाः।
न च विद्यागमः कश्चित् तं देशं परिवर्जयेत्॥ ३७॥
मनसा चिन्तितं कर्म्म वचसा न प्रकाशयेत्।
अन्यलक्षितकार्य्यस्य यतः सिद्धिर्नजायते॥ ३८॥
कुदेशञ्च कुवृत्तिञ्च कुभार्य्यां कुनदीं तथा।
कुद्रव्यञ्च कुभोज्यञ्च वर्जयेत्तु विचक्षणः॥ ३९॥

ऋणशेषोऽग्निशेषश्च व्याधिशेषस्तथैव च ।
पुनश्च वर्द्धते यस्मात्तस्मात् शेषं हि कारयेत् ॥ ४० ॥
चिन्ताज्वरो मनुष्याणां वस्त्राणामातपो ज्वरः ।
असौभाग्यं ज्वरः स्त्रीणामश्वानां मैथुनं ज्वरः ॥ ४१ ॥
अस्ति पुत्त्रो वशे यस्य भृत्यो भार्य्या तथैव च ।
अभावे सति सन्तोषः स्वर्गस्थोऽसौ महीतले ॥ ४२ ॥
दुष्टा भार्य्या शठं मित्रं भृत्यश्चोत्तरदायकः ।
ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥ ४३ ॥
माता यस्य गृहे नास्ति भार्य्या चाप्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ ४४ ॥
ऋणकर्त्ता पिता शत्रुर्माता च व्यभिचारिणी ।
भार्य्या रूपवती शत्रुः पुत्रः शत्रुरपण्डितः ॥ ४५ ॥
कोकिलानां स्वरो रूपं नारीरूपं पतिव्रता ।
विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् ॥ ४६ ॥
अविद्याजीवनं शून्यं दिक् शून्या चेदबान्धवा ।
पुत्रहीनं गृहं शून्यं सर्व्वशून्या दरिद्रता ॥ ४७ ॥
अदाता वंशदोषेण कर्म्मदोषाद्दरिद्रता ।
उन्मादो मातृदोषेण पितृदोषेण मूर्खता ॥ ४८ ॥
गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेको गुरुः स्त्रीणां सर्व्वत्राभ्यागतो गुरुः ॥ ४९ ॥
अतिदर्पे हता लङ्का अतिमाने च कौरवाः ।
अतिदाने बलिर्बद्धः सर्व्वमत्यन्तगर्हितम् ॥ ५० ॥

वस्त्रहीनस्त्वलङ्कारो घृतहीनञ्च भोजनम् ।
स्तनहीना च या नारी विद्याहीनञ्च जीवनम् ॥ ५१ ॥
भोज्यं भोजनशक्तिश्च रतिशक्तिर्वराः स्त्रियः ।
विभवो दानशक्तिश्च नाल्पस्य तपसः फलम् ॥ ५२ ॥
पुत्रप्रयोजना दाराः पुत्रः पिण्डप्रयोजनः ।
हितप्रयोजनं मित्रं धनं सर्व्वप्रयोजनम् ॥ ५३ ॥
दुर्लभं प्राकृतं वाक्यं दुर्लभः क्षेमकृत् सुतः ।
दुर्लभा सदृशी भार्य्या दुर्लभः स्वजनः प्रियः ॥ ५४ ॥
शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो न हि सर्वत्र चन्दनन्न वने वने ॥ ५५ ॥
अशोच्यो निर्धनः प्राज्ञोऽशोच्यः पण्डितबान्धवः ।
अशोच्या विधवा नारी पुत्रपौत्रप्रतिष्ठिता ॥ ५६ ॥
अविद्यः पुरुषः शोच्यः शोच्यं मैथुनमप्रजम् ।
निराहाराः प्रजाः शोच्याः शोच्यं राज्यमराजकम् ॥ ५७॥
कुलीनैः सह सम्पर्कं पण्डितैः सह मित्रताम् ।
ज्ञातिभिश्च समं मेलं कुर्वाणो न विनश्यति ॥ ५८ ॥
कष्टा वृत्तिः पराधीना कष्टो वासो निराश्रयः ।
निर्धनो व्यवसायश्च सर्वकष्टा दरिद्रता ॥ ५९ ॥
तस्करस्य कुतो धर्म्मो दुर्जनस्य कुतः क्षमा ।
वेश्यानाञ्च कुतः स्नेहः कुतः सत्यञ्च कामिनाम् ॥ ६० ॥
प्रेषितस्य कुतो मानं कोपनस्य कुतः सुखम् ।
स्त्रीणां कुतः सतीत्वञ्च कुतो मैत्री खलस्य च ॥ ६१ ॥

दुर्बलस्य बलं राजा बालानां रोदनं बलम् ।
बलं मूर्खस्य मौनित्वं चौराणामनृतं बलम् ॥ ६२ ॥
यो ध्रुवाणि परित्यज्य अध्रुवं परिषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥ ६३ ॥
शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि ।
प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् ॥ ६४ ॥
सद्यो मांसं नवान्नञ्च बाला स्त्री क्षीरभोजनम् ।
घृतमुष्णोदकञ्चैव सद्यः प्राणकराणि षट् ॥ ६५ ॥
सिंहादेकं वकादेकं षट् शुनस्त्रीणि गर्दभात् ।
वायसाच्चचतुः शिक्षेत् चत्वारि कुक्कुटादपि ॥ ६६ ॥
प्रभूतमल्पकार्यं वा यो नरः कर्तुमिच्छति ।
सर्वारम्भेण तत् कुर्यात् सिंहादेकं प्रकीर्त्तितम् ॥ ६७ ॥
सर्वेन्द्रियाणि संयम्य वकवत् पतितो जनः ।
कालदेशोपपन्नानि सर्वकार्यानि साधयेत् ॥ ६८ ॥
वह्वाशी स्वल्पसन्तुष्टः सुनिद्रः शीघ्रचेतनः ।
प्रभुभक्तश्च शूरश्च ज्ञातव्याः षट् शुनो गुणाः ॥ ६९ ॥
अविश्रामं वहेद्भारं शीतोष्णञ्च न विन्दति ।
ससन्तोषस्तथा नित्यं त्रीणि शिक्षेत गर्दभात् ॥ ७० ॥
गूढमैथुनधर्मञ्च काले काले च संग्रहम् ।
अप्रमादमनालस्यं चतुः शिक्षेत वायसात् ॥ ७१ ॥
युद्धञ्च प्रातरुत्थानं भोजनं सह बन्धुभिः ।
स्त्रियमापद्गतां रक्षेच्चतुः शिक्षेत कुक्कुटात् ॥ ७२ ॥

कोऽतिभारः समर्थानां ? किं दूरं व्यवसायिनाम् ?
को विदेशः सविद्यानां ? कः परः प्रियवादिनाम् ? ॥७३॥
आपदां कथितः पन्था इन्द्रियाणामसंयमः।
तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यताम् ॥ ७४ ॥
नच विद्यासमो बन्धुर्न च व्याधिसमो रिपुः ।
न चापत्यसमः स्नेहो नच दैवात् परं बलम् ॥ ७५ ॥
समुद्रावरणा भूमिः प्राकारावरणं गृहम् ।
नरेन्द्रावरणा देशाश्चरित्रावरणाः स्त्रियः ॥ ७६ ॥
घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमान् ।
तस्माद् घृतञ्च वह्निञ्च नैकत्र स्थापयेद्बुधः ॥ ७७ ॥
आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा ।
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥ ७८ ॥
जीर्णमन्नं प्रशंसीयात् भार्याञ्च गतयौवनाम् ।
रणात् प्रत्यागतं शूरं शस्यञ्च गृहमागतम् ॥ ७९ ॥
असन्तुष्टा द्विजा नष्टाः सन्तुष्टा इव पार्थिवाः ।
सलज्जा गणिका नष्टा निर्लज्जाश्च कुलस्त्रियः ॥ ८० ॥
अवंशपतितो राजा मूर्खपुत्रश्च पण्डितः ।
अधनेन धनं प्राप्य तृणवन्मन्यते जगत् ॥ ८१ ॥
ब्रह्महापि नरः पूज्यो यस्यास्ति विपुलं धनम् ।
शशिनस्तुल्यवंशोऽपि निर्धनः परिभूयते ॥ ८२ ॥
पुस्तकस्था तु या विद्या परहस्तगतं धनम् ।
कार्यकाले समुत्पन्ने न सा विद्या न तद्धनम् ॥ ८३ ॥

पादपानां भयं वातात् पद्मानां शिशिराद् भयम्।
पर्वतानां भयं वज्रात् साधूनां दुर्जनाद् भयम्॥ ८४ ॥
प्राज्ञे नियोज्यमाने तु सन्ति राज्ञस्त्रयो गुणाः।
यशः स्वर्गनिवासश्च विपुलश्च धनागमः॥ ८५ ॥
मूर्खे नियोज्यमाने तु त्रयो दोषा महीपतेः।
अयशश्चार्थनाशश्च नरके गमनं तथा॥ ८६ ॥
बहुभिर्मूर्खसङ्घातैरन्योन्यपशुवृत्तिभिः।
प्रच्छाद्यन्ते गुणाः सर्वे मेघैरिव दिवाकरः॥ ८७ ॥
यस्य चैवं नदीतीरे भार्य्या वापि परप्रिया।
पुत्रस्य विनयो नास्ति मृत्युरेव न संशयः॥ ८८ ॥
असम्भाव्यं न वक्तव्यं प्रत्यक्षमपि दृश्यते।
शिला तरति पानीयं गीतं गायति वानरः॥ ८९ ॥
सुभिक्षं क्षपके नित्यं नित्यं सुखमरोगिणि।
भार्य्या भर्तुः प्रिया यस्य तस्य नित्योत्सवं गृहम्॥९० ॥
हेला स्यात् कार्यनाशाय बुद्धिनाशाय निर्धनम्।
याचना माननाशाय कुलनाशाय भोजनम्॥ ९१ ॥
सेवितव्यो महावृक्षः फलच्छायासमन्वितः।
यदि दैवात् फलं नास्ति छाया केन निवार्यते ?॥ ९२ ॥
प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम्।
तृतीये नार्जितं पुण्यं चतुर्थे किं करिष्यति ?॥ ९३ ॥
नदीकूले च ये वृक्षाः परहस्तगतं धनम्।
कार्यं स्त्रीगोचरी यत् स्यात् सर्वं तद्विफलम्भवेत्॥ ९४ ॥

कुदेशमासाद्य कुतोऽर्थसञ्चयः ?
कुपुत्रमासाद्य कुतो जलाञ्जलिः ?।
कुगेहिनीं प्राप्य गृहे कुतः सुखं ?
कुशिष्यमध्यापयतः कुतो यशः ? ॥ ९५ ॥

कूपोदकं वटच्छाया श्यामा स्त्री चेष्टकालयम्।
शीतकाले भवेदुष्णं ग्रीष्मकाले च शीतलम् ॥ ९६ ॥

विषं चंक्रमणं रात्रौ विषं राज्ञोऽनुकूलता।
विषं स्त्रियोऽप्यन्यहृदो विषं व्याधिरवीक्षितः ॥ ९७ ॥

दुरधीता विषं विद्या अजीर्णे भोजनं विषम्।
विषं गोष्ठी दरिद्रस्य वृद्धस्य तरुणी विषम् ॥ ९८ ॥

प्रदोषे निहतः पन्थाः पतिता निहताः स्त्रियः।
अल्पबीजं हतं क्षेत्रं भृत्यदोषाद् हतः प्रभुः ॥ ९९ ॥

हतमश्रोत्रियं श्राद्धं हतो यज्ञस्त्वदक्षिणः।
हता रूपवती बन्ध्या हतं सैन्यमनायकम् ॥ १०० ॥

वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः।
आशीर्वादवचोयुक्त एष राजपुरोहितः ॥ १०१ ॥

कुलशीलगुणोपेतः सर्वधर्मपरायणः।
प्रवीणः प्रेषणाध्यक्षो धर्माध्यक्षो विधीयते ॥ १०२ ॥

आयुर्वेदकृताभ्यासः सर्वेषां प्रियदर्शनः।
आर्यशीलगुणोपेत एष वैद्यो विधीयते ॥ १०३ ॥

सकृदुक्तगृहीतार्थो लघुहस्तो जिताक्षरः।
सर्वशास्त्रसमालोकी प्रकृष्टो नाम लेखकः ॥ १०४ ॥

समस्तनीतिशास्त्रज्ञो वाहने पूजितश्रमः।
शौर्यवीर्यगुणोपेतः सेनाध्यक्षो विधीयते ॥ १०५ ॥
मेधावी वाक्पटुः प्राज्ञः परचित्तोपलक्षकः।
धीरो यथोक्तवादी च एष दूतो विधीयते ॥ १०६ ॥
पुत्रपौत्रगुणोपेतः शास्त्रज्ञो मिष्टपाचकः।
शूरश्च कठिनश्चैव सूपकारः स उच्यते ॥ १०७ ॥
इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः।
अप्रमादी सदा दक्षः प्रतीहारः स उच्यते ॥ १०८ ॥
यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम्।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ १०९ ॥
किं करिष्यन्ति वक्तारः श्रोता यत्र न विद्यते।
नग्नक्षपणके देशे रजकः किं करिष्यति ॥ ११० ॥

इति श्रीचाणक्यशतकं समाप्तं।

---

## शान्तिशतकम्।

---

नमस्यामो देवान् ननु हतविधेस्तेऽपि वशगा
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः।
फलं कर्मायत्तं किममरगणैः किञ्च विधिना
नमस्तत् कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ १ ॥

यदि शान्तो मनो देयं यदि मुक्तिपदे रतिः।
तदा शिह्लनमिश्रस्य पद्यमाराध्यतां धिया॥ २॥

सन्तोषसन्ततिकरं विदुषां कवीनां
सांसारिकाप्रतिमदुःखविनाशबीजम्।
यत्नेन शान्तिशतकं विदधे विवेकी
श्रीशिह्लनः प्रकृतिसुन्दरशुद्धबुद्धिः॥ ३॥

आत्मज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करम्
यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निःस्पृहाः।
न प्राप्तानि पुरा न सम्प्रति न च प्राप्तौ दृढप्रत्यया
वाञ्छामात्रपरिग्रहाण्यपि वयं त्यक्तुं न तानि क्षमाः॥ ४॥

धन्यानां गिरिकन्दरोदरभुवि ज्योतिः परं ध्यायता-
मानन्दाश्रुजलं पिबन्ति शकुना निःशङ्कमङ्के स्थिताः।
अस्माकन्तु मनोरथोपरचितप्रासादवापीतट
क्रीडाकाननकेलिमण्डपजुषामायुः परं क्षीयते॥ ५॥

विशीर्णः प्रारम्भो वपुरपि जराव्याधिविधुरं
गतं दूरे विप्रस्वजनभरणं वाञ्छितमपि।
इदानीं व्यामोहादहह! विपरीते हतविधौ
विधेयं यत्तत्त्वं स्फुरति मम नाद्यापि हृदये॥ ६॥

बीभत्साः प्रतिभान्ति किन्न विषयाः किन्तु स्पृहायुष्मती
देहस्यापचयो मतो निविशते गाढो गृहेषु ग्रहः।
ब्रह्मोपास्यमिति स्फुरत्यपि हृदि व्यावर्तिका वासना
का नामेयमतर्क्यहेतुगहना दैवी सतां यातना॥ ७॥

अजानन्दाहार्त्तिं विशति शलभो दीपदहनं
न मीनोऽपि ज्ञात्वा हृतवडिशमश्नाति पिशितम् ।
विजानन्तोऽप्येतान् वयमिह विपज्जालजटिलान्
न मुञ्चामः कामानहह ! गहनो मोहमहिमा ॥ ८ ॥

क्षान्तं न क्षमया गृहोचितसुखं त्यक्तन्न सन्तोषतः
सोढ़ा दुःसहशीतवाततपनक्लेशा न तप्तन्तपः ।
ध्यातं वित्तमहर्निशं नच पुनर्विष्णोः पदं शाश्वतं
तत् तत् कर्म्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चितम् ॥ ९ ॥

कृत्वा शस्त्रविभीषिकां कतिपयग्रामेषु दीनाः प्रजा
मथ्नन्तोविटजल्पितैरपहृता क्षौणीभुजस्ते किल ।
विद्वांसोऽपि वयं किल त्रिजगतीसर्गस्थितिव्यापदां
ईशस्तत्परिचर्य्यया न गणितो यैरेष नारायणः ॥ १० ॥

नाथे श्रीपुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा
सेव्ये स्वस्य पदस्य दातरि सुरे नारायणे तिष्ठति ।
यं कञ्चित् पुरुषाधमं कतिपयग्रामेशमल्पार्थदं
सेवायै मृगयामहे नरमहो मूढ़ा वराका वयम् ॥ ११ ॥

जन्मेदं बन्ध्यतां नीतं भवभोगोपलिप्सया ।
काचमूल्येन विक्रीतो हन्त ! चिन्तामणिर्मया ॥ १२ ॥

याच्ञाशून्यमयत्नलभ्यमशनं वायुः कृतो वेधसा
व्यालानां पशवस्तृणाङ्कुरभुजः स्वस्थाः स्थलीशायिनः ।
संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां
यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥ १३ ॥

यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटुं मृषा
नैषां गर्वगिरः शृणोषि न पुनः प्रत्याशया धावसि।
काले बालतृणानि खादसि सुखं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरङ्ग! कुत्र भवता किं नाम तप्तन्तपः? ॥१४॥
कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन।
विदधति धनिषु न दैन्यं ते खलु पशवो वयं सुधियः॥१५॥
आस्वाद्य स्वयमेव वच्मि महती मर्म्मच्छिदो वेदना
मा भूत् कस्यचिदप्ययं परिभवो याच्ञेति संसारिणः।
पश्य भ्रात! रियं हि यौवनजराधिक्कारकेलिस्थली
मानम्लानमसी गुणव्यतिकरप्रागल्भ्यगर्वच्युतिः॥१६॥
क्व गन्तासि? भ्रातः! कृतवसतयो यत्र धनिनः
किमर्थं? प्राणानां स्थितिमनुविधातुं कथमपि।
धनैर्याच्ञालब्धैर्ननु परिभवोऽभ्यर्थनफलं
निकारोऽग्रे पश्चाद्धनमहह! भो! स्तद्धि निधनम्॥१७॥
प्राणानां बत किं ब्रुवे कठिनतां तैरेव सा विस्मृता
निष्क्रामन्ति कथञ्चिदेव हि न ये याच्ञावचोभिः समम्।
आत्मानं पुनराक्षिपामि विदितस्थैर्य्योऽपि येषामहो
मिथ्याशङ्कितत्तद्वियोगविधुरो यत् प्रार्थये सर्वशः॥१८॥
अमीषां प्राणानां तुलितबिसिनीपत्रपयसां
कृते किं नास्माभिः विगलितविवेकैः व्यवसितम्।
यदीशानामग्रे द्रविणकणमोहान्धमनसां
कृतं वीतव्रीडैः निजगुणकथापातकमपि॥१९॥

बीभत्सा विषया जुगुप्सिततमः कायो वयो गत्वरं
प्रायोबन्धुभिरध्वनीव पथिकैः योगो वियोगावहः ।
हातव्योऽयमसार एष विरसः संसार इत्यादिकं
सर्वस्यैव हि वाचि चेतसि पुनः कस्यापि पुण्यात्मनः ॥ २० ॥

तडिन्मालालोलं प्रतिदिवसदत्तान्धतमसं
भवे सौख्यं हित्वा शमसुखमुपादेयमनघम् ।
इतिव्यक्तोद्गारं चटुलवचसः शून्यमनसो
वयं वीतव्रीडाः शुकइव पठामः परममी ॥ २१ ॥

यदासौ दुर्वारः प्रसरति मदश्चित्तकरिणः
तदा तस्योद्दामप्रसररसरुद्धैः व्यवसितैः ।
क्व तत् धैर्यालानं क्व च निजकुलाचारनिगडः
क्व सा लज्जारज्जुः क्व विनयकठोराङ्कुशमपि ॥ २२ ॥

भिक्षाशनं भवनमायतनैकदेशः
शय्या भुवः परिजनो निजदेहभारः ।
वासश्च जीर्णपटखण्डनिबद्धकन्था
हाहा ! तथापि विषयान् न जहाति चेतः ॥ २३ ॥

त्वामुदर ! साधु मन्ये शाकैरपि यदसि लब्धपरितोषम् ।
हतहृदयं ह्यधिकाधिकवाञ्छा शतदुर्भरं न पुनः ॥ २४ ॥

शुचां पात्रं धात्री परिणतिरमेध्यप्रचयभू
रयं भूतावासो विमृश कियतीं याति न दशाम् ।
तदस्मिन् धीराणां क्षणमपि किमास्थातुमुचितं
खलीकारः कोऽयं यदहमहमेवेति रभसः ॥ २५ ॥

रेतः शोणितयोरियं परिणतिर्यद्वर्म तत्राभवन्
मृत्योरास्पदमाश्रयो गुरुशुचां रोगस्य विश्रामभूः ।
जानन्नप्यवशो विवेकविरहात्मज्जन् न विद्यान्मधो
शृङ्गारीयति पुत्रकाम्यति बत चेक्रीयति स्त्रीयति ॥ २६ ॥

क्वैतद्वक्त्रारविन्दं क्व तदधरमधु क्वायतास्ते कटाक्षाः
क्वालापाः कोमलास्ते क्व च मदनधनुर्भङ्गुरो भ्रूविलासः ।
इत्थं खट्वाङ्गकोटौ प्रकटितदशनं मञ्जुगुञ्जत्समीरं
रागान्धानामिवोच्चैरुपहसति महामोहजालं कपालम् ॥२७॥

शृणु हृदय ! रहस्यं यत् प्रशस्तं मुनीनां
न खलु न खलु योषित्सन्निधिः संविधेयः ।
हरति हि हरिणाक्षी क्षिप्रमक्षिक्षुरप्रैः
पिहितशमतनुत्रं चित्तमप्युत्तमानाम् ॥ २८ ॥

समाश्लिष्यत्युच्चैर्घनपिशितपिण्डं स्तनधिया
मुखं लालाक्लिन्नं पिबति चषकं सासवमिव ।
अमेध्यक्लेदार्द्रे पथि च रमते स्पर्शरसिको
महामोहान्धानां किमपि रमणीयं न भवति ॥ २९॥

इति शान्तिशतके परीतापोपशमो नाम
प्रथमः परिच्छेदः ॥ १ ॥

अयमविचारितचारुतया संसारो भाति रमणीयः ।
अत्र पुनः परमार्थदृशां न किमपि सारमणीयः ॥ १ ॥

केनाप्यनर्थरुचिना कपटं प्रयुक्तं
एतत् सुहृत्तनयबन्धुमयं विचित्रम् ।
कस्यात्र कः परिजनः स्वजनो जनो वा
स्वप्नेन्द्रजालसदृशः खलु जीवलोकः ॥ २ ॥

आरम्भः संशयानामविनयभवनं पत्तनं साहसानाम्
दोषाणां सन्निधानं कपटशतमयं चेत्रमप्रत्ययानाम् ।
दुस्त्याज्यं यन्महद्भिः सुरनरवृषभैः सर्वमायाकरण्डं
स्त्रीरूपं केन लोके विषममृतमयं धर्मनाशाय सृष्टम् ॥ ३ ॥

यदा प्रकृत्यैव जनस्य रागिणो
भृशं प्रदीप्तो हृदि मन्मथानलः ।
तदात्र भूयः किमनर्थपण्डितैः
कुकाव्यहव्याहुतयो निवेशिताः ॥ ४ ॥

दधति तावदमी विषयाःसुखं
स्फुरति यावदियं हृदि मूढ़ता ।
मनसि तत्त्वविदान्तु विवेचके
क्व विषयाः क्व सुखं क्व परिग्रहाः ॥ ५ ॥

निःस्वो वष्टि शतं शती दशशतं लक्षं सहस्राधिपो
लक्षेशः क्षितिपालतां क्षितिपतिश्चक्रेश्वरत्वं पुनः ।
चक्रेशः पुनरिन्द्रतां सुरपति ब्रह्मास्पदं वाञ्छति
ब्रह्मा विष्णुपदं पुनःपुनरहो आशावधिं को गतः ॥ ६ ॥

यदा पूर्वं नासीदुपरि च तथा नैव भविता
तदा मध्यावस्था क्षणपरिचयो भूतनिचयः।
अतः संयोगेऽस्मिन् परिणतिवियोगे च सहजे
किमाधारः प्रेमा: किमधिकरणाः सन्तु च शुचः॥७॥
इन्द्रस्याशुचिशूकरस्य च सुखे दुःखे च नास्त्यन्तरं
स्वेच्छाकल्पनया तयोः खलु सुधा विष्ठा च काम्याशनम्।
रम्भा चाशुचिशूकरी च परमप्रेमास्पदं मृत्युतः
संत्रासोऽपि समः स्वकर्मगतिभिश्चान्योन्यभावः समः॥८॥
कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं
निरुपमरसप्रीत्या खादन्नरास्थि निरामिषम्।
सुरपतिमिव पार्श्वस्थं श्वा सशङ्कितमीक्षते
गणयति नहि क्षुद्रो लोकः परिग्रहफल्गुताम्॥ ९॥
अमीषां जन्तूनां कतिपयनिमेषस्थितिजुषां
वियोगे धीराणां क इह परितापस्य विषयः।
क्षणादुत्पद्यन्ते विलयमपि यान्ति क्षणममी
न केऽपि स्थातारः सुरगिरिपयोधिप्रभृतयः॥ १०॥
पुत्रः स्यादिति दुःखितः सति सुते तस्यामये दुःखितः
तद्दुःखादिकमार्जने तदनये तन्मूर्खता दुःखितः।
जातश्चेत् सगुणोऽथ तन्मृतिभयं तस्मिन्मृते दुःखितः
पुत्रव्याजमुपागतो रिपुरयं मा कस्यचिज्जायताम्॥ ११॥
स्थिरापायः कायः प्रणयिषु सुखं स्थैर्यविमुखं
महाभोगा रोगाः कुवलयदृशः सर्पसदृशः।

महावेशः क्लेशः प्रकृतिचपला श्रीरपि खला
यमः स्वैरी वैरी तदपि न हितं कर्म्म विहितम् ॥ १२ ॥
अर्थं प्राणविनाशसंशयकरीं प्राप्यापदं दुस्तरां
प्रत्यासन्नभयं न वेत्ति विभवं स्वं जीवितं काङ्क्षति ।
उत्तीर्णस्तु ततो धनार्थमपरां भूयो विशत्यापदं
प्राणानाञ्च धनस्य चाधमधिया मन्योन्यभावः पणः ॥१३॥
विमलमतिभिः कैश्चिद्येतज्जगज्जनितं पुरा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा ।
इह हि भुवनान्यन्ये वीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥ १४ ॥
रम्यं हर्म्यतलं न किं वसतये श्राव्यं न गीतादिकं
किं वा प्राणसमासमागमसुखं नैवाधिकप्रीतये ।
किन्तु भ्रान्तपतत्पतङ्गपवनव्यालोलदीपाङ्कुर-
च्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः ॥ १५ ॥
आस्तामकण्टकमिदं वसुधाधिपत्यं
त्रैलोक्यराज्यमपि नैव तृणाय मन्ये ।
निःशङ्कसुप्तहरिणीकुलसङ्कुलासु
चेतः परं वलति शैलवनस्थलीषु ॥ १६ ॥
हरिणचरणक्षुण्णोपान्ताः सशाद्वलनिर्झराः
कुसुमललितैर्विश्वग्वातैस्तरङ्गितपादपाः ।
विविधविहगश्रेणी चित्रध्वनिप्रतिनादिता
मनसि न मुदं केषां दद्युः शिवा वनभूमयः ॥ १७ ॥

ते तीव्रदुर्जननिकारशरैर्न भिन्ना
धीरास्त एव शमसौख्यभुज स्तएव ।
सीमन्तिनीभुजलतागहनं व्युदस्य
येऽवस्थिताः शमफलेषु तपोवनेषु ॥ १८ ॥
कुरङ्गाः कच्चाणं प्रतिविटपमारोग्य मटवीं
श्रयन्ति क्षेमं ते पुलिनकुशलं भद्रमुपलाः ।
निशान्तादस्वन्तात् कथमपि विनिष्क्रान्तमधुना
मनोऽस्माकं दीर्घा मभिलषति युष्मत्परिचितम् ॥ १९ ॥
वासो वल्कल मास्तरः किशलयान्योक स्तरूणां तलं
मूलानि क्षतये क्षुधां गिरिनदीतोयं तृषाशान्तये ।
क्रीड़ा मुग्धमृगैर्वयांसि सुहृदो नक्तं प्रदीपः शशी
स्वाधीने विभवे तथापि कृपणा याचन्त इत्यद्भुतम् ॥ २० ॥
शय्या शाद्वल मासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पान मशनं कन्दः सहाया मृगा ।
इत्यप्रार्थितसर्वलभ्यविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत् परार्थघटनायत्नै र्विना स्थीयते ॥ २१ ॥
पूरयित्वार्थिनामाशां प्रियं कृत्वा द्विषामपि
पारं गत्वा श्रुतौघस्य धन्या वनमुपासते ॥ २२ ॥
अलमति चपलत्वात् स्वप्नमायोपमत्वात्
परिणतिविरसत्वात् सङ्गमेनाङ्गनायाः ।
इति यदि शतकृत्व स्तत्त्वमालोचयाम
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥ २३ ॥

आहारः फलमूलमात्मरचितं शय्या मही वल्कलं
सम्वीताय परिच्छदः कुशसमित्पुष्पाणि पुत्रा मृगाः ।
वस्त्रानाश्रयदानभोगविभवा निर्यन्त्रणाः शाखिनो
मित्राणीत्यधिकं गृहेषु गृहिणां किं नाम दुःखावृते॥२४॥

विवेकः किं सोऽपि स्वरसजनिता यत्र न कृपा
स किं योगो यस्मिन् न भवति परानुग्रहरसः ।
स किं धर्मो यत्र स्फुरति न परद्रोहविरतिः
श्रुतं किं तद्वा स्यादुपशमफलं यन्न भवति ॥ २५ ॥

अग्रे कस्यचिदस्ति कश्चिदभितः केनापि पृष्ठे कृतः
संसारः शिशुभाव-यौवनजराभारावतारादयम् ।
बालस्त्वं बहुमन्यतामसुलभं प्राप्तं युवा सेवतां
वृद्धस्त्वं विषयाद्बहिष्कृत इव व्यावृत्य किं पश्यसि ॥ २६ ॥

पुत्रदारादिसंसारः पुंसां सम्मूढचेतसाम्
विदुषां शास्त्रसंसारः सद्योगाभ्यासविघ्नकृत् ॥ २७ ॥

सार्वभौमभवनं वनवासो निस्वभावभवभावनया ते ।
वालिशो हि विषयेन्द्रियचौरैः मुष्यते स्वभवने च वने च ॥२८॥

स्थूलप्रावरणोऽतिपूर्वकथकः काशाश्रुलालाविलो
भग्नोरःकटिपृष्ठजानुदशनो मुग्धेऽतिथीन् वारयन् ।
शृण्वन् दुष्टवधूवचांसि धनुषा संत्रासयन् वायसान्
आशापाशनिबद्धजीवविभवो वृद्धो गृहे क्लाम्यति ॥ २९ ॥

वनेषु दोषाः प्रभवन्ति रागिणां
गृहेषु पञ्चेन्द्रियनिग्रहस्तपः ।

अकुत्सिते कर्म्मणि यः प्रवर्त्तते
निवृत्तरागस्य गृहं तपोवनम्॥ ३०॥

इति शान्तिशतके विवेकोदयो नाम द्वितीयः
परिच्छेदः॥ २॥

---

महता पुण्यपण्येन क्रीतेयं काय-नौ स्त्वया
पारं दुःखोदधेर्गन्तुं त्वरया यन्न भिद्यते॥ १॥
दिवसरजनीकूलच्छेदैः पतद्भिरनारतं
वहति निकटे कालः स्रोतःसमस्तभयावहम्।
इह हि पततां नास्त्यालम्बो न चापि निवर्त्तनं
तदिह महतां कोऽयं मोहो यदेष मदाविलः॥ २॥
अवश्यं यातारश्चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत् स्वय मिमान्।
व्रजन्तः स्वातन्त्र्यात् परमपरितापाय मनसः
स्वयं भुक्ता ह्येते शमसुखमनन्तं विदधति॥ ३।
भवारण्यं भीमं तनुगृहमिदं छिद्रबहुलं
बली कालश्चौरो नियतमसिता मोहरजनी।
गृहीत्वा ज्ञानासिं विरतिफलकं शीलकवचं
समाधानं कृत्वा स्थिरतरदृशो जागृत जनाः!॥ ४॥
गृहे पर्य्यन्तस्थे द्रविणकणमोषं श्रुतवता
स्ववेश्मान्यारक्षा क्रियत इति मार्गोऽयमुचितः।

नरान् गेहात् गेहात् प्रतिदिवसमाकृष्य नयतः
कृतान्तात् किं शङ्का नहि भवति रे ! जाग्रत जनाः !॥५॥
के यूयं नो वयमिति च वः के भवामो भवाब्धौ
कर्मोर्मीणां विषमवलनैः फेणवत् पुञ्जिताः स्मः ।
तत्क्षेपीयः क्षयिणि विषये चित्तमाधाय धीराः
सर्वारम्भैर्विशति जगतामन्तरात्मन्यनन्ते ॥ ६ ॥
सूक्तिं कर्णसुधां व्यनक्तु सुजनस्तस्मिन्न मोदामहे
ब्रूतां वाचमसूयको विषमुचं तस्मिन्न खिद्यामहे ।
या यस्य प्रकृतिः सतां वितनुतां किं नस्तया जायते
कुर्मस्तत् खलु कर्म्म जन्मनिगड़च्छेदाय यज्जायते ॥ ७ ॥
मन्निन्दया यदि जनः परितोषमेति
नन्वप्रयत्नसुलभोऽयमनुग्रहो मे ।
श्रेयोऽर्थिनोहि पुरुषाः परतुष्टिहेतोः ।
दुःखार्जितान्यपि धनानि परित्यजन्ति ॥ ८ ॥
स्वधर्मपीड़ामपहाय योऽयं मत्पापशुद्ध्यर्थमिह प्रवृत्तः ।
नचेत् क्षमामप्यहमस्य कुर्य्यां मत्तः कृतघ्नो वद कीदृशोऽन्यः॥९॥
कश्चित् पुमान् क्षिपति मां प्रतिरूक्षवाक्यैः
सोऽहं क्षमाभवनमेत्य मुदं प्रयामि ।
शोकं व्रजामि पुनरेवयत स्तपस्वी
चारित्रतः स्खलितवानिति मन्निमित्तम् ॥ १० ॥
नन्वात्मन्यवधीयतां गृहसुखाद्वैराग्यमाधीयताम्
बन्धुभ्यो व्यवधीयतां सुरसरित्तीरे सदा स्थीयताम् ।

भिक्षार्थं व्यवसीयतां प्रतिदिनं सत्कर्म्म सञ्चीयतां
कोपश्चेतसि हीयतां परतरं ब्रह्मानुसन्धीयताम् ॥ ११ ॥
यत् क्षान्तिः समये श्रुतिः शिव शिवेत्युक्तौ मनोनिर्वृतिः
भैक्षे चाभिरुचिर्धनेषु विरतिः शश्वत्समाधौ रतिः।
एकान्ते वसतिर्गुरौ प्रतिनतिः सद्भिः समं सङ्गतिः
सत्त्वे प्रीतिरनङ्गनिर्जिति रसौ सन्मुक्तिमार्गे स्थितिः ॥ १२॥
सम्भोगादिविषयामिषस्य परितस्तैमित्यमस्ताखिल
ज्ञानोन्मेषतया कथं तव भवेदात्मास्पदं देहिनः।
साध्यं तद्धि तदेव साधनमितो व्यावृत्तिरेवामिषात्
तस्यां ज्योतिरुपैत्यनिन्धनमिदं दोषत्रयं धक्ष्यति ॥ १३॥

बुद्धेरगोचरतया न गिरां प्रचारो
दूरे गुरुप्रथितवस्तुकथावतारः।
तत्त्वं क्रमेण विदुषां करुणावदाते
श्रद्धावतां हृदि पदं स्वयमादधाति ॥ १४ ॥

दुःखाङ्गारकतीव्रः संसारोऽयं महानसो गहनः
इह विषयामिषलालस मानस मार्जार मा निपत ॥ १५॥
अरे चेतोमीन भ्रमणमधुना यौवनजले
त्यज त्वं स्वच्छन्दं युवतिजलधौ पश्यसि न किम्।
तनूजालीजालं स्तनयुगलतुम्बीफलयुतं
मनोभूः कैवर्तः क्षिपति परितस्त्वां प्रति मुहुः ॥ १६ ॥
विषयविषधराणां दोषदंष्ट्रोत्कटानां
त्रिषयविषविमर्दव्यक्तदुश्चेष्टितानाम्।

विरम विरम चेतः! सन्निधानादमीषां
सुखकणमणिहेतोः साहसं मास्म कार्षीः ॥ १७ ॥
एकीभूय स्फुटमिव किमप्याचरद्भिः प्रलीनैः
एभिर्भूतैः स्मर कति कृताः स्वान्त ते विप्रलम्भाः ।
तस्मादेषां त्यज परिचयं चिन्तय स्वव्यवस्थाम्
आभाषस्ते किमु न विदितः खण्डितः पण्डितः स्यात् ॥१८॥
धूर्तैरिन्द्रियनामभिः प्रणयितामापादयद्भिः स्वयं
सम्भोक्तुं विषयामिषं किल पुमान् सौख्याशया वञ्चितः ।
तैः शेषे कृतकृत्यतामुपगतैरौदास्यमालम्बितं
सम्प्रत्येष विधेर्नियोगवशगः कर्मान्तरैर्बध्यते ॥ १९ ॥
दैवे समर्प्य चिरसञ्चितमोहजालं
सुस्थाः सुखं वसत किं परयाचनाभिः ।
मेरुं प्रदक्षिणयतोऽपि दिवाकरस्य
ते तस्य सप्त तुरगा न कदाचिदष्टौ ॥ २० ॥
आकाशमुत्पततु गच्छतु वा दिगन्तम्
अम्भोनिधिं विशतु तिष्ठतु वा यथेष्टम् ।
जन्मान्तरार्जितशुभाशुभकृन्नराणां
छायेव न त्यजति कर्मफलानुबन्धः ॥ २१ ॥
उपशमफलाद्विद्याबीजात् फलान्तरमिच्छतां
भवति विफलो यत् प्रारम्भस्तदत्र किमद्भुतम् ।
नियतविषया ह्येते भावा न यान्ति विपर्ययं
जनयति यतः शालेर्बीजं न जातु यवाङ्कुरम् ॥ २२ ॥

यदेते साधूनामुपरि विमुखाः सन्ति धनिनो
नचैषावज्ञैषामपितु निजवित्तव्ययभयम् ।
अतः खेदो नास्मिन् परममनुकम्पैव भवति
स्वमांसत्रस्तेभ्यः कइह हरिणेभ्यः परिभवः ॥ २३ ॥
तस्मादनन्तमजरं परमं विकासि
तद्ब्रह्म वाञ्छत बुधा यदि चेतनास्ति ।
यस्यानुषङ्गत इमे भुवनाधिपत्य-
भोगादयः कृपणवत् सतां विभान्ति ॥ २४ ॥

इति शान्तिशतके कर्त्तव्यतोपदेशो नाम तृतीयः
परिच्छेदः ॥ ३ ॥

---

लक्ष्मीर्निहन्तिमेति हीनचरितैर्यैरेव तच्छिक्षया
किं नाद्यैव करोमि तामनुचरीं रामां सकामामिव ।
ब्रह्माण्डे निपतत्यपि स्खलति न प्रायेण येषां मनः
तेषामार्यमनस्विनामनुपदं गन्तास्मि नाहं यदि ॥ १ ॥
लब्धाः श्रियः सकलकामदुघास्ततः किं ?
सन्तर्पिताः प्रणयिनो विभवैस्ततः किम् ? ।
न्यस्तं पदं शिरसि विद्विषतां ततः किं ?
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ? ॥ २ ॥
निष्कन्दाः किमु कन्दरोदरभुवः क्षीणास्तरूणां त्वचः
किं शुष्काः सरितः स्फुरद्गिरिगुरुग्रावस्खलद्वीचयः ।
प्रत्युत्थानमितस्ततः प्रतिदिनं कुर्वन्निरुद्ग्रीविभिः

यद्द्वारार्पितदृष्टिभिः क्षितिभुजां विद्वद्भिरप्यास्यते ॥ ३ ॥
कामं जीर्णपलाशसंहतिकृतां कन्थां वसानैर्वने
कुर्यामम्बुभिरप्ययाचितसुखैः प्राणानुबन्धस्थितिम् ।
साङ्गग्लानि सवेपितं सचकितं स्वान्तर्निदाघज्वरं
वक्तुं नलहमुत्सहे सकृपणं देहीति दीनं वचः ॥ ४ ॥
सत्यं वक्तुमशेषमस्ति सुलभा वाणी मनोहारिणी
दातुं दानवरं शरण्यमभयं स्वच्छं पितृभ्यो जलम् ।
पूजार्थं परमेश्वरस्य विमलः स्वाध्याययज्ञः परं
क्षुद्बाधेः फलमूलमस्ति शमनं क्लेशात्मकैः किं धनैः ॥ ५ ॥
सन्ति स्वादुफला वनेषु तरवः स्वच्छं पयो निर्झरे
वासो वल्कलमाश्रयो गिरिगुहा शय्या लतावल्लरी ।
आलोकाय निशासु चन्द्रकिरणाः सख्यं कुरङ्गैः सह
स्वाधीने विभवेऽप्यहो नरपतिं सेवन्त इत्यद्भुतम् ॥ ६ ॥
पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्षमक्षय्यमन्नं
वस्त्रं विस्तीर्णमाशादशकममलिनं तल्पमस्वल्पमुर्वी ।
येषां निःसङ्गताङ्गीकरणपरिचितिः स्वान्तसन्तोषिणस्ते
धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्म निर्मूलयन्ति ॥ ७ ॥
महाशय्या भूमिर्विस्तृणमुपधानं भुजलता
वितानश्चाकाशं व्यजनमनुकूलोऽयमनिलः ।
स्फुरच्चन्द्रो दीपः स्वधृतिवनितासङ्गमुदितः
सुखं शान्तः शेते विगतभवभीतिर्नृप इव ॥ ८ ॥
धैर्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी

सत्यं सूनुरयं दया च भगिनी भ्राता मनःसंयमः ।
शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनं
यस्यैते हि कुटुम्बिनो वद सखे ! कस्मात् भयं योगिनः?॥९॥
धिक् धिक् तान् कृमिनिर्विशेषवपुषः स्फूर्जन्महासिद्वयो
निष्पन्दीकृतशान्तयोऽपि च तमःकारागृहेष्वासते ।
तं विद्वांसमिह स्तुमः करपुटीभिक्षान्नशाकेऽपि वा ।
बाला वक्त्रसरोजिनीमधुनि वा यस्या विशेषो रसः ॥१०॥
मातर्लक्ष्मि ! भजस्व कञ्चिदपरं मत्कांक्षिणी मास्मभूः
भोगेभ्यः स्पृहया लवस्तव वशाः का निःस्पृहाणामसि ।
सद्यः स्यूतपलाशपत्रपुटिकापात्रे पवित्रीकृते
भिक्षाशक्तुभिरेव सम्प्रति वयं वृत्तिं समीहामहे ॥ ११ ॥
जिह्वे ! लोचननासिके श्रवण ! हे ! त्वक् ! चापि नो वार्यसे
सर्वेभ्योऽस्तु नमःकृताञ्जलिरहं सप्रश्रयं प्रार्थये ।
युष्माकं यदि सम्मतं तदधुना नात्मानमिच्छाम्यहं
होतुं भूमिभुजां निकारदहनज्वालाकराले गृहे ॥१२॥
गतः कालो यत्र प्रणयिनि मयि प्रेमकुटिलः
कटाक्षः कालिन्दीलघुलहरिवृत्तिः प्रभवति ।
इदानीमस्माकं जठरमकठीपृष्ठकठिना
मनोवृत्तिस्तत् किं व्यसनिनि मुधैव क्लपयसि ॥ १३ ॥
यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदा ज्ञातं तारामयमिदमशेषं जगदपि ।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषां

समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ १४ ॥
गतः कालो यत्र द्विरदरणपशूनां क्षितिभुजां
पुरः स्वस्तीत्युक्त्वा विषयसुखमास्वादितमभूत्।
इदानीमस्माकं तृणमिव समस्तं कलयतां
अपेक्षा भिक्षायामपि किमपि चेतस्त्रपयति ॥ १५ ॥
पूर्वं तावत् कुवलयदृशां लोललोलैरपाङ्गैः
आकर्षद्भिः किमपि हृदयं पूजिता यौवनश्रीः।
सम्प्रत्यन्तर्निहितसदसद्भावलब्धप्रबोध-
प्रत्याहारैर्विशदहृदये वर्त्तते कोऽपि भावः ॥ १६ ॥
गङ्गातीरे हिमगिरिशिलाबद्धपद्मासनस्य
ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य।
किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशङ्काः
सम्प्राप्स्यन्ते जठरहरिणा गात्रकण्डूविनोदम् ॥ १७ ॥
कदा भिक्षाभक्तैः करकलितगङ्गाम्बुतरलैः
शरीरं मे स्थास्यत्युपरतसमस्तेन्द्रियसुखम्।
कदा ब्रह्माभ्यासस्थिरतनुतयारण्यविहगाः
पतिष्यन्ति स्थाणुभ्रमहृतधियः स्कन्धशिरसि ॥ १८ ॥
रथ्यान्तश्चरतस्तथा धृतजरत्कन्थालवस्याध्वगैः
सत्रासश्च सकौतुकश्च सकृपं दृष्टस्य तैर्नागरैः।
निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे
निःशङ्कं करटः कदा करपुटीभिक्षां विलुण्ठिष्यति ॥१९॥
एणाक्षीस्पृहयालुतान कथमप्यास्ते विवेकोदयान्

नित्यं प्रश्नुतियाङ्क्षया क्षणमपि स्वर्गं न मोदामहे ।
अप्यन्येषु विना शिवस्तु विषयाभोगेषु तृष्णा न मे
स्वर्णद्याः पुलिने परं हरिपदध्यानं मनो वाञ्छति ॥२०॥
अयि बोधाम्बुधौ भावः स्वच्छोऽयं विम्बवुद्बुदः
विनीत उदितो वेत्ति विकल्पपटलं मनः ॥ २१ ॥
अहङ्कारः क्वापि व्रजतु जिनहेमात्वमिहभूः
अभूमिर्दर्पाणामहमपसरत्वं पिशुन हे ।
अरे क्रोध ! स्वामान्तरमनुसरानन्यमनसां
त्रिलोकीनाथो मे हृदि वसतु देवो हरिरसौ ॥ २२ ॥
मातर्माये ! भगिनि कुमते ! हे पितर्मोहजाल !
व्यावर्तध्वं भवतु भवतामेष दीर्घो वियोगः ।
सद्यो लक्ष्मीरमणचरणभ्रष्टगङ्गाप्रवाह-
व्यामिश्रायां दृषदि परमब्रह्मदृष्टिर्भवामि ॥ २३ ॥
आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं
व्यापारैर्बहुकार्यकारणशतैः कालोऽपि न ज्ञायते ।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमोदमदिरामुन्मत्तभूतं जगत् ॥ २४ ॥
मातर्मेदिनि ! तात ! मारुत सखे ज्योतिः ! सुबन्धो जल !
भ्रातर्व्योम ! निबद्ध एष भवतामस्तु प्रणामाञ्जलिः ।
युष्मत्सङ्गवशोपजातसुकृतोद्रेकस्फुरन्निर्मल-
ज्ञानापास्तसमस्तमोहमहिमा लीये परे ब्रह्मणि ॥ २५॥
आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला

रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ।
मोहावर्त्तसुदुस्तरा प्रकटितप्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः॥२६॥

इतो न किञ्चित् परतो न किञ्चित्
यतो यतो यामि ततो न किञ्चित् ।
विचार्य्य पश्यामि जगन्नकिञ्चित् ।
स्वात्मावबोधादधिकं न किञ्चित् ॥ २७ ॥

संसारमृगतृष्णां त्वं मनो धावसि किंमुधा ।
अनाविल मिदं ब्रह्मसरः किं नावगाहसे ॥ २८ ॥

इति शान्तिशतके ब्रह्मप्राप्ति नामचतुर्थः
परिच्छेदः सम्पूर्णम् ॥ ४ ॥

---

## वृन्दावन शतकम् ।

---

नमस्तस्मै कस्मैचिदपि पुरुषायाद्भुत मह्रा
महिम्ने विभ्राजत्कनकरुचिधाम्ने स्वकृपया ।
असङ्कोचेनैव श्वपचमखिलेभ्यः स्वयमहो
ददौ यत्तद्भक्तिं विमलतरनानारसमयीम् ॥ १ ॥

यस्मिन्न प्रविशेन्मनोऽपि महतां का तत्त्ववार्त्ता पुनः
शास्त्राणां क्षपितश्च यद्भगवता भक्त्यैव भक्तोत्सवे ।

तद्वृन्दावनमुन्मदेन रसिकद्वंद्वेन केनाप्यहो
नित्यक्रीड़तया गृहीतमिह के विद्युर्न गौरप्रियाः ॥ २ ॥
गुणैः सर्वैर्हीनोऽप्यहमखिलजीवाधमतमो
ऽप्यशेषैः दोषाद्यैरपि च वलितो दुर्मतिरपि ।
प्रसादात्तस्यैवाविदमहह राधां व्रजपतेः
कुमारं श्रीवृन्दावनमपि स गौरो मम गतिः ॥ ३ ॥
श्रीवृन्दावनकेलिरङ्गसहजं सौन्दर्यशोभावयो
वैदग्ध्यादिचमत्कृतेः परतरं विश्रान्तिधामाद्भुतम् ।
तत्सम्मोहनदिव्यनागरवरद्वन्द्वं मिथो जीवनं
गौरश्यामलमुज्ज्वलोन्मदरसाविष्टं हृदि स्फूर्जतु ॥ ४ ॥
इह भ्रामं भ्रामं जगति नहि गन्धोऽपि कलितो
यदीयस्तत्रैवाखिलनिगमदुर्लङ्घ्यशरणौ ।
अपारे श्रीवृन्दावनमहिमपीयूषजलधौ
महाश्चर्यीभूतेने मधुरिमनि चित्तं लगतु मे ॥ ५ ॥
जयति जयते वृन्दारण्यान्यू नसिन्धोः
अनुपममिव सारं शारदाकोटाकाथ्यम् ।
खगमृगतरुवल्लीकुञ्जवापीतड़ाग
स्थलगिरिसरिदिनीनामद्भुतैः सौभगाद्यैः ॥ ६ ॥
वृन्दारण्ये चर चरण दृक् पश्य वृन्दावनश्रीः
जिह्वे ! वृन्दावनगुणगणान् कीर्त्तय श्रोत्र दृष्टान् ।
वृन्दाटव्या भज परिमलं घ्राण गात्र त्वमस्मिन्
वृन्दारण्ये लुठ पुलकितं कृष्णकेलिस्थलीषु ॥ ७ ॥

महोज्ज्वलरसोन्मदप्रणयसिन्धुनिःस्यन्दिनी
महामधुरराधिकारमणखेलनानन्दिनी
रसेन समधिष्ठिता भुवनवन्द्यया वृन्दया
चकास्तु हृदि मे हरेः परमधाम वृन्दाटवी॥ ८॥
जन्मनि जन्मनि वृन्दावनभुवि वृन्दारकेन्द्रवंद्यायाम्
अपि तृणगुल्मकभावे भवतु ममाशासमुल्लासः॥ ९॥
हरिपदपङ्कजसद्मा हिनर समनुभूय पूर्णोऽपि
यत्रैव आशास्ते तृणतां तनोमि राधिकाविपिनम्॥१०॥
राधावल्लभपादपल्लवजुषां सद्धर्मनीतायुषां
नित्यं सेवितवैष्णवांघ्रिरजसां वैराग्यजीवस्पृशाम्।
हन्तैकान्तरसप्रविष्टमनसामप्यस्ति यद्दूरतः
तद्राधाकरुणावलोकमचिरादिन्दन्तु वृन्दावने॥ ११॥
राधानन्दकिशोरौ निरवधिरससागरे निमग्नौ
निजकेलिधाम वृन्दाविपिनमुदीक्ष्यैव सौख्यमाप्नुवतः॥१२॥
उद्दामप्रमदोज्ज्वलैकरसया भक्त्या विधूताः कृते
व्यक्तं कस्यचिदेव चित्तमुकवे तत्तद्दिषाभोगवत्।
यस्मिन् दिव्यविचित्रकेलिमिथुनं तच्छ्यामगौरं विधु
ज्योत्स्नावत् परिचाययेत्तदिह किं विन्देय वृन्दावनम्॥१३॥
विशुद्धाद्वैतैकप्रणयरसपीयूषजलधेः
घनीभूतद्वीपे समुदयति वृन्दावनमहो।
मिथः प्रेमोद्घूर्णद्रसिकमिथुनक्रीडमनिशं
तदेवाध्यासीनं प्रविशति पदे क्वापि मधुरे॥ १४॥

माहं वेद्मि कथं नु माधवपदाम्भोजद्वयी ध्यायते
का वा श्रीशुकनारदाद्यकलिते मार्गेऽस्तु मे योग्यता।
तस्माद्भद्रमभद्रमेव यदि नामास्तां ममैकं परं
राधाकेलिनिकुञ्जमञ्जुलतरं वृन्दावनं जीवनम्॥ १५॥
यत्सीमानमपि स्पृशन्न निगमो दूरात् परं लक्ष्यते
किञ्चिद्दूरतया यदेव परमानन्दोत्सवैकावधिः।
यन्माधुर्य्यकलोऽप्यवेदि न शिवस्वायम्भुवाद्यैरहं
तद्वृन्दावननामधाम विशदं विन्दामि राधापतेः॥ १६॥
कदानु वृन्दावनकुञ्जमण्डले भ्रमंभ्रमं हे मदहरिमणिप्रभम्
संस्मृत्य संस्मृत्य तदङ्गतप्रियं द्वयं द्वयं विस्मृतिमेतु मेऽखिलम्॥१७॥
छिद्येत खण्डश इदं यदि मे शरीरम्
घोरा विपच्चितचयो यदि वा पतन्ति।
हा हन्त हन्त न तथापि ममेह भूयात्
वृन्दावनादितरतीर्थपदे यियासा॥ १८॥
स्वयं पतितपत्रकणामृतवत् क्षुधाभक्षयन्
सदा मिहिरनन्दिनीशुचिपयोञ्जलीभिः पिबन्।
कदा मधुरराधिकारमणरासकेलिस्थलिं
विलोक्य रसशेवधिमधिवसामि वृन्दावनम्॥ १९॥
भूमिर्यत्र सुकोमला बहुविधप्रद्योतिरत्नच्छटा
नानाचित्रमनोहरं खगमृगाद्याश्चर्यरागान्वितम्।
वल्लीभूरुहजातयोऽङ्गततमा यत्र प्रधानादिभिः
तन्मे नन्दकिशोरकेलिभवनं वृन्दावनं जीवनम्॥२०॥

साक्षादिवास्ते पुरुषोत्तमांघ्रि सेवारसादप्यधिको रसौघः ।
स्यन्देत वृन्दाविपिनेऽप्यदृष्टोराधाप्रियो यो भुवनस्य साक्षी ॥२१॥

जागर्ति दुन्दुभिरवः परमोऽत्र राधा
वृन्दावन वनमतिप्रकटं पुराणे ।
तस्याविधेयमसमेद्धमहानुराग
मूर्तेस्तदङ्गनमिहेत्य हरिं क्व पश्ये ॥ २२ ॥

मिलन्तु चिन्तामणिकोटिकोटयः
स्वयं वहिर्दृष्टिमुपैतु वा हरिः ।
तथापि वृन्दावनधूलिधूसरं
न देहमन्यत्र कदापि यातु मे ॥ २३ ॥

कृपयतु मयि वृन्दारण्यराजीमनाग
प्यतिवहनकृपोरुस्नेहभावादुदिष्णुः
फलतु तदनुकम्पाकल्पवल्लीफलं त्वत्
प्रभवतु वसतिर्मे तत्प्रियारामसीम्नि ॥२४॥

तेनाकारि समस्तएव भगवद्धर्मोऽपि तेनाद्भुतः
सर्वस्मात् पुरुषार्थतोऽपि परमः कश्चित् करस्थीकृतः ।
तेनाधायि समस्तमूर्द्धनि पदं ब्रह्मादयस्तं नम-
न्त्यादेहान्तमधारि येन वसतौ वृन्दावने निश्चयः ॥२५॥

पुलिने पुलिने कलिन्दजाया विचरंश्चापि तले तले तरूणाम् ।
सघणीभूतसुसौख्यकन्दवृन्दाविपिने हन्त कदा दिनानि नेष्ये॥२६॥

गौरश्यामलमिथुनं खेलति कन्दर्पं लीलया यत्र ।
राधामाधवनाम्ना प्रथितं तन्नौमि काननं किमपि ॥२७॥

खगवृन्दं पशुवृन्दं द्रुमवल्लीवृन्दमुन्मदप्रेम्णा ।
प्रीणयदमृतरसेन ख्यातं वृन्दावनं नमत ॥ २८ ॥

अपरमपि हरिभक्तैः नाना दुर्मार्गनिष्ठमप्यधमम् ।
वृन्दाविपिनमचिन्त्यप्रभावमुन्मादये प्रेम्णा ॥ २९ ॥

भक्त्यैकयान्यत्र कृतार्थमानिनो धीरास्तदेतन्न वयं विद्मः ।
श्रीराधिकामाधववल्लभं नः परन्तु वृन्दावनमेव संश्रयः ॥३०॥

दोषाकरोऽहं गुणलेशहीनः सर्वाधमो दुर्लभवस्तुकांक्षी ।
वृन्दाटवीमुज्ज्वलभक्तिसारवीजं कदा प्राप्य भवामि पूर्णः ॥३१॥

शुद्धोज्ज्वलप्रेमरसामृताब्धेः अनन्तपारस्य किमप्युदारम् ।
राधाभिधाय प्रचकास्ति सारं तदेव वृन्दाविपिनं गतिर्मे ॥३२॥

सर्वसाधनहीनोऽपि वृन्दारण्यैकसंश्रयः ।
यः कोऽपि प्राप्नुयादेव राधाप्रियरसोत्सवम् ॥ ३३ ॥

त्यजन्तु स्वजनाः कामं देहवृत्तीश्च मास्नुवन् ।
न वृन्दावनसीमातः पदं मे चलतु क्वचित् ॥ ३४ ॥

सा मे न माता स च मे पिता न
स मे न बन्धुः स च मे सखा न ।
स मे न मित्रं स च मे गुरुर्न
यो मे न वृन्दावनवासमादिशेत् ॥ ३५ ॥

तच्छास्त्रं मम कर्णमूलमपि न स्वप्नेऽपि यायादहो
श्रीवृन्दाविपिनस्य यत्र महिमा नात्यद्भुतः श्रूयते ।
ते मे दृष्टिपथं न यान्तु नितरां सम्भाष्यतामाप्नुयुः
ये वृन्दावनवैभवे श्रुतिगते नोल्लासिनो नोऽखिलाः ॥३६॥

अलमलमिह योषिद्गर्द्दभीसङ्गरङ्गैः
अलमलमिह वित्तापत्यविद्यायशोभिः।
अलमलमिह नानासाधनायासदुःखैः
भवत भवत वृन्दारण्यमाश्रित्य धन्याः॥ ३७॥

वैकुण्ठं कोटिकोटिप्रगुणितमपिनो यत्र जालेशमात्रां
प्रोन्मीलत्सौभगाब्धेर्लवमपि लभते शुद्धभावोज्ज्वलायाः।
कुर्वीरन् भक्तिकोटीर्भगवति न तथाप्यङ्गुतप्रेममूर्त्तेः
श्रीराधाया अभक्ताः किमपि न कलितां नौमि वृन्दाटवीं ताम्॥ ३८॥

इदमपि भविता किं यत्र कुत्रापि वृन्दा
पदमपि मम जातं श्रीनवीथीमकस्मात्।
मधुरमधुरराधामाधवानङ्गखेला-
वनमुपनयदन्तर्दास्यति प्रेममूर्च्छाम्॥ ३९॥

कदा नु वृन्दावनवीथिकास्वहं
परिभ्रमन् श्यामलगौरमङ्गुतम्।
किशोरमूर्त्तिद्वयमेकजीवनं
पुरःस्फुरद्वीक्ष्य पतामि मूर्च्छितः॥ ४०॥

किमेतादृग्भाग्यं मम कलुषमूर्त्तेरपिभवेन्
निवासो देहान्तावधि यदिह वृन्दावनभुवि।
तयोः श्रीदम्पत्योः नवनवविलासैर्विहरतोः
पदज्योतिःपूरैरपितु मम सङ्गोऽपि भविता॥ ४१॥

भूतं स्थावरजङ्गमात्मकमहो यत्र प्रविष्टं किम-
प्यानन्दैकघनाकृतिस्वमहसा नित्योत्सवं भासते।

मायान्धीकृतदृष्टिभिस्तु कलितं नानाविरूपात्मना
तद्वृन्दाविपिनं कदाधिवसतः स्यान्मे तनुश्चिन्मयी ॥४२॥
यत्र प्रविष्टः सकलोऽपि जन्तुः सर्वः पदार्थोऽप्यबुधैरदृश्यः ।
स्वानन्दसन्दोहघनत्वमेति तदेव वृन्दावनमाश्रयन्तु ॥ ४३ ॥

वृन्दावनस्थेष्वपि येऽत्र दोषान्
आरोपयन्ति स्थिरजङ्गमेषु ।
आनन्दमूर्तिष्वपराधिनस्ते
श्रीराधिकामाधवयोः कथं स्युः ॥ ४४ ॥

ये वृन्दावनवासिनिन्दनरता ये वा न वृन्दावनं
साधन्ते तुलयन्ति ये च कुधियः केनापि वृन्दावनम् ।
ये वृन्दावनमत्र नित्यसुखचिद्रूपं सहन्ते न वा
तैः पापिष्ठनराधमैः न भवतु स्वप्नेऽपि मे सङ्गतिः ॥ ४५ ॥

असह्य बहुदुर्वचो यदिह वदन्ति साक्षान्मम
स्त्रियं बलादपहरन्ति चेत् प्रियसुतादिकं घ्नन्ति वा
धनान्यपि च जीवनं यदि हरन्ति वृन्दावनस्थिता-
स्तदपि ते प्रिया मम भवन्ति वन्द्याः परम् ॥ ४६ ॥

परस्वस्तेयैकव्यसनमपि नित्यं परवधू-
प्रसक्तं विप्रेषामहह बहुधा हिंसकमपि ।
दुराचारं लोभादपहृतमपि भ्रातरक्ण -
दिवान्धस्त्वं वृन्दावनगतजनं नावगणये ॥ ४७ ॥

परधनपरदारद्वेषमात्सर्य्यलोभा-
नृतपरुषपराभिद्रोहमिथ्याभिलापान् ।

त्यजति य इह भक्तो राधिकाप्राणनाथे
न खलु भवति बन्ध्या तस्य वृन्दावनाशा ॥ ४८ ॥
कुरु सकलमधर्मं मुञ्च सर्वं स्वधर्मं
त्यज गुरुमपि वृन्दारण्यवासानुरोधात् ।
स तव परमधर्मः सा च भक्तिर्गुरूणां
स किल कलुषराशिर्यश्च वासान्तरायः ॥ ४९ ॥

निर्मर्य्यादाश्चर्य्यकारुण्यपूर्णौ
राधाकृष्णौ पश्यतश्चेत् कदाचित् ।
यः कोऽप्यस्मिन् यादृशस्तादृशो वा
देहस्यान्ते प्राप्नुयादेव सिद्धिम् ॥ ५० ॥

राधामधुपतिपादाम्बुजभक्ताद्दूरमुक्तस्य ।
अजितेन्द्रियस्य कृपया मम वृन्दारण्यमाश्रयो भवतु ॥५१॥

राधामाधवपादपङ्कजरजः प्रेमोन्मदैतत्प्रिय-
क्रीडाकाननवासिषु स्थिरचरप्राणिष्वपि द्रोहिषु ।
प्रद्वेषं परमापराधमहह ! त्यक्तैतरैरप्यघैः
युक्तोऽप्यामरणान्तलब्धवसतिर्वृन्दावने स्यात् कृती ॥ ५२ ॥

न लोकवेदोद्धतमार्गभेदैः आविश्य संक्लिश्यत रे विमूढाः ।
हठेन सर्वं परिहृत्य वृन्दावनान्तरे पर्णकुटीं कुरुध्वम् ॥ ५३ ॥

यत्तद्वल्गन्तु शास्त्राण्यहह ! जनतया गृह्यतां यत्तदेव
स्वं स्वं यत्तन्मतं स्थापयतु लघुमतिस्तर्कमात्रे प्रवीणः
अस्माकं तूज्ज्वलैकोन्मदविमलरसप्रेमपीयूषमूर्त्तेः
श्रीराधाया विहाराटविमिहमविमान्यत्रनिर्याति चेतः ॥५४॥

स्निग्धश्यामाभिरामच्छविमृदुमसृणोत्तप्तहेमावदातं
ज्योतिर्द्वन्द्वं किशोराकृतिमधुरमहो घूर्णमानं रसेन ।
नित्यं यत्रैव खेलायति मदनकलाकौतुकेनात्युदारं
सारं सारादशेषादवतु दशदिशःश्रीलवृन्दावनं नः ॥ ५५ ॥
अपारकरुणाकरं व्रजविलासिनीनागरं
मुहुः सुबहुकाकुभिर्नतिभिरेतदभ्यर्थये ।
अनर्गलवहन्महाप्रणयसीधुसिन्धौ मम
क्वचिज्जनुषि जायतां रतिरिहैव वृन्दावने ॥ ५६ ॥
नानामार्गरतोऽपि दुर्मतिरपि त्यक्तस्वधर्मोऽपि हि
स्वच्छन्दाचरितोऽपि दूरभगवत्सम्बन्धगन्धोऽपि च ।
कुर्वन् यत्र च कामलोभवशतो वासं समस्तोत्तमं
यायादेव रसात्मकं परमहं तन्नौमि वृन्दावनम् ॥ ५७ ॥
इह सकलसुखेभ्यः सूत्तमं भक्तिसौख्यं
तदपि चरमकाष्ठां सम्यगाप्नोति यत्र ।
तदिह परमपुंसो धाम वृन्दावनाख्यं
निखिलनिगमगूढं मूढबुद्धिर्न वेद ॥ ५८ ॥
भजन्तमपि देवतान्तरमथाक्षरब्रह्मणि स्थितं
पशुवदेव वा विषयभोगमात्रे रतम् ।
अचिन्त्यनिजशक्तितः स्वगतराधिकामाधव-
प्रगाढरसदुर्मदं कुरुत एव वृन्दावनम् ॥ ५९ ॥
यत्कोटांशमपि स्पृशेन्न निगमो यन्नो विदुर्योगिनः
श्रीशब्रह्मशुकार्जुनोद्धवमुखाः पश्यन्ति यन्न क्वचित् ।

अन्यत् किं व्रजवासिनामपि न यत् दृश्यं कदालोकये
तद्वृन्दावनरूपमद्भुतमहं राधापदैकाश्रयः ॥ ६० ॥
विस्मृत्य द्वैतमात्रं प्रणयमयमहो ज्योतिरेकार्णवान्तः
श्रीवृन्दारण्यमत्युच्चलदतुलरसाम्भोधितस्मिन् सखे त्वम्।
वेषं किञ्चिद्गृहीत्वोज्ज्वलमखिलकलाकोमलाभीरबाला
प्राणाः श्रीराधिकायाः किमपि रसनिधेश्चाटुकारं भजेथाः॥६१

दुर्वासनासुदृढरज्जुशतैर्निबद्धम्
आकृष्य सर्वत इदं स्वबलेन कृष्ण !।
वृन्दावने विहरतः सह राधया ते
पादारविन्दसविधं नय मानसं मे ॥ ६२ ॥

वशीकर्त्तुं शक्यो नहि नहि मनागिन्द्रियगणो
गुणोभूतैकोऽपि प्रविशति सदा दोषनिचयः।
क्व याम किं कुर्मो हरि हरि मयोशोऽप्यकरुणः
स्ववासं श्रीवृन्दावन वितर मानन्यगतिकम् ॥ ६३ ॥

जातिप्राणधनानि यान्तु सुयशोराशिः परिक्षीयतां
सद्धर्मो विलयं प्रयान्तु सततं सर्वैश्च निर्भर्त्स्यताम्।
आधिव्याधिशतेन जीर्य्यतु वपुर्लुप्तप्रतीकारतः
श्रीवृन्दाविपिनं तथापि न मनाक् त्यक्तुं ममास्तां मतिः॥६४॥

रक्षति संसारभयाद्दोषाकरम् अप्यशेषदेहभृद्वृन्दम्।
वृन्दावनमिति तेन प्रथितं तं नौमि काननं किमपि ॥६५॥

वृन्दारण्यदन्यत् प्रकृतेरन्तर्बहिर्वापि।
नैवास्ति मधुरवस्त्वित्यवकलितं यैः नमस्तेभ्यः ॥ ६६ ॥

विभ्राजत्तिलका कलिन्दतनयानीरौघनीलाम्बरा
उद्यत्काञ्चनचम्पकच्छविरहो नानारसोल्लासिनी ।
कृष्णप्रेमपयोभरेण रसदेनात्यन्तसम्मोहिनी
गोपस्त्रीव्रजवल्लभा विजयते राधेव वृन्दाटवी ॥ ६७ ॥

यस्मिन् कोटिसुरद्रुमैः क्षुरयुता भूमीरुहः पोषका
भक्तिः सहनिता मन्दारसमयी यत्र स्वयं श्लिष्यति ।
यत्र श्रीहरिदासवर्यवनिताः खट्वायमानाः शिलाः
तद् वृन्दावनमद्भुतं सुखमयं को नाम नालम्बते ॥ ६८ ॥

विन्दन्ति यावत् प्रणयं न मन्दा वृन्दावने प्रेमविलासकन्दे ।
तावन्न गोविन्दपदारविन्दे स्वच्छन्दसद्भक्तिरहस्यलाभः ॥ ६९ ॥

स्मारं स्मारं नवजलधरश्यामलं धामविद्युत्
कोटिज्योतिस्तनुलतिकया राधयाश्लिष्यमाणः।
उच्चैरुच्चैः सरससरसी प्राञ्जवी जृम्भमाण-
प्रेमाविष्टो भ्रमति सुकृती कोऽपि वृन्दावनान्तः ॥ ७० ॥

राधापदाङ्कभूषितवृन्दारण्यस्थलीषु निर्भरप्रेम्णा हरि हरि ।
कदा लुठामि प्रतिपद गलदश्रुकम्पसत्पुलकः ॥ ७१ ॥

पूर्णोज्ज्वलत्प्रेमरसैकमूर्तिः यत्रैव राधाविजयी हरीति ।
तदेव वृन्दावनमाश्रितानां भवेत् परं भक्तिरहस्यलाभः ॥७२॥

सर्वं त्यक्त्वा सरसविशदप्रेमपीयूषसान्द्रे
वृन्दारण्येऽद्भुततरुलतागुल्मकाद्यैः मनोज्ञे ।
राधाकृष्णोज्ज्वलगुणगणोद्गानमत्तालिकारैः
नीरेणापि स्थितिमिह तनोरध्यवस्या वसन्तु ॥ ७३ ॥

श्रीराधायाः कनकरुचिरज्योतिरङ्गच्छटौघैः
शुद्धप्रेमोज्ज्वलरसमयैः सेव्यमानं समन्तात्।
गोविन्दस्याम्बुदरुचितनोर्ज्योतिरम्भोधिपूरैः
सान्द्रानन्दात्मभिरपि चितं नौमि वृन्दावनं तत्॥ ७४॥
निन्दा वा स्तुतिरेव वा बहुविपत् सम्पत्तिरेवास्तु वा
पाण्डित्यं बत मूर्खतापि यदि वा रागो विरागोऽथवा।
यत् किंचिद्भवतु श्रुतेरपि मनाग्लक्ष्यं न यद्वैभवं
तद्वृन्दाविपिनं न जीवनमहं स्वप्नेऽपि हातुं क्षमः॥ ७५॥
चाण्डालश्वखरादिवा यदि जनाः कुर्वन्ति सर्वे तिर-
स्कारं दुर्विषहञ्च तेन नहि मे खेदोऽस्त्यणीयानपि।
देवा दैत्य इमे च भूतनिवहाः प्राणाश्च दद्युर्मेहा-
स्नेहात्तुष्टिमतो न मे गुरुतथा वृन्दावनीये वसे॥ ७६॥
भ्रातः! समस्तान्यपि साधनानि
विहाय वृन्दावनमाश्रयस्व
यथा तथा प्राक्तनवासनावशात्।
शरीरवाणी हृदयं विचेष्टताम्॥ ७७॥
तादृक् कालो भवतु भगवान् येन कस्यापि देवी
दृश्या शक्तोऽप्यहह न वहिर्यामि वृन्दाटवीतः।
तादृक् दम्भोऽप्युदयतु तथाहङ्कृतिश्चापि मे स्याद्
येनाप्यस्मिन्विस्मयवने रोचये नित्यवासम्॥ ७८।
वरं वृन्दारण्ये हरि हरि करैः खर्परभृतो
भ्रमामो भैक्षार्थं स्वपचगृहवीथीषु दिनशः।

तथापि प्राचीनैः परमसुकृतैरत्र मिलितं
न नेष्यामोऽन्यत्र क्वचिदपि कथञ्चिद्वपुरिदम्॥ ७९॥
जरत्कन्थामेकां दधदपि च कौपीनमनिशं
प्रगायन् श्रीराधामधुपतिरहःकेलिलहरीम्।
फलं वा मूलं वा किमपि दिवसान्ते कवलयन्
कदा नेष्ये वृन्दावनभुवि दशां जीवनमयीम्॥ ८०॥
प्रकृत्युपरि केवले सुखनिधौ परब्रह्मणि
श्रुतिप्रथितवैभवं परपदं विकुण्ठाभिधम्।
तदन्तरखिलोज्वलं जयति माथुरं मण्डलं
महारसमयं सखे! कलय तत्र वृन्दावनम्॥ ८१॥
कदा वृन्दारण्यं श्रवणवसनस्पर्शनगिरी-
क्षणघ्राणाद्यैः मे स्फुरति वसमिच्छन् श्रवदिव।
कदा वा तल्लोकोत्तरवसमदान्धो मधुपते
गुणानुच्चैरुच्चैः सरसमुपगास्यामि परितः॥ ८२॥

स्वानन्दसच्चिद्घनरूपतामतिः
यावन्न वृन्दावनवासिजन्तुषु।
तावत् प्रविष्टोऽपि न तत्र विन्दते
ततोऽपराधात् पदवीं परात्पराम्॥ ८३॥
यदैव सच्चिद्रसरूपबुद्धिः
वृन्दावनस्थस्थिरजङ्गमेषु।
स्यान्निर्व्यलीकं पुरुषस्तदैव
चकास्ति राधाप्रियसेविरूपः॥ ८४॥

सकलविभवसारं सर्वधर्मैकसारं
सकलभजनसारं सर्वसिद्धैकसारम् ।
सकलमहिमसारं वस्तु वृन्दावनान्तः
सकलमधुरिमाम्भोराशिसारं विहारम् ॥ ८५ ॥

दैवी वाक् प्रतिषेधिनी भवतु मे स्याद्वा गुरूणां गिरां
श्रेणी शास्त्रविदामिहास्तु बहुधा यः कोऽपि कोलाहलः ।
त्यक्ता साधनसाध्यजातमखिलं प्रलगेत् मे राधिका
क्रीडाकाननवाससम्पदि मनाक् व्यावर्तते नो मनः ॥ ८६ ॥

प्रगायन्नटन्नुद्धसन्नालुठन्
वप्रे धावन् रुदन् सम्पतन् मूर्छितो वा ।
कदा वा महाप्रेममाध्वीमदान्धः
विचरिष्यामि वृन्दावने लोकवाह्यः ॥ ८७ ॥

न लोकं न धर्मं न गेहं न देहं
न निन्दां स्तुतिर्वापि सौख्यं न दुःखम् ।
विजानन् किमप्युन्मदप्रेममाध्वा-
ग्रहग्रस्तवत् कर्हि वृन्दावने स्याम् ॥ ८८ ॥

हरे कृष्ण कृष्णेति कृष्णेति मुख्यान्
महाश्चर्य्यनामावलीसिद्धमन्त्रान् ।
कृपामूर्त्तिचैतन्यदेवेन गीतान्
कदाभ्यस्य वृन्दावने स्यां कृतार्थः ॥ ८९ ॥

हैमस्फाटिकपद्मरागरचितैर्माहेन्द्रनीलैर्द्रुमैः
नानारत्नमयस्थलीभिरलिभिर्झङ्कारितोद्यल्लिभिः ।

चित्रैः कीरमयूरकोकिलमुखैर्नानाविहङ्गैर्लसत्
पद्माद्यैश्च सरोभिरद्भुतमहं ध्यायामि वृन्दावनम् ॥ ९० ॥

ताम्बूलपानकमनोहरमोदकादि-
रम्ये लसन्मृदुलपल्लवचारुतल्पे ।
दूरेस्थितालिभिरहोसुहृदावपेक्ष्य
वृन्दावनं स्मर निकुञ्जगृहैः मनोज्ञम् ॥ ९१ ॥

क्वचिद्रतिविमर्दितप्रसवतल्पकैः कुत्रचिद्
क्वचितोपकरणाद्रिन्वतप्रियमृदुप्रसूनास्तरैः ।
क्वचित् प्रमदराधिकामधुपतिप्रवृत्तोत्सवैः
सदानवनिकुञ्जकैः स्मर सुमञ्जु वृन्दावनम् ॥ ९२ ॥

राधाकृष्णरहःसुहृद्दिचितिधरस्योपत्यकासु स्फुरन्
नानाकेलिनिकुञ्जवीथिषु नवोत्फुल्लत्कदम्बादिषु ।
भ्रामं भ्राममहर्निशं ननु परं श्रीवासकेलिस्थली
रम्यास्वेव कदा प्रकाशितरहः प्रेमा भवेयं कृती ॥ ९३ ॥

अलं त्वयिसुदुःखदैः युवतिपुत्रवित्तादिकैः
विमुक्तिकथयाप्यलं मम नमो विकुण्ठप्रिये ।
परंत्विह भवेभतु भवे वासमानव्ययो
भजे नन्दतनयो वने लसति यत्र तस्मिन् रतिः ॥ ९४ ॥

नमामि वृन्दावनमेवमूर्ध्ना वदामि वृन्दावनमेव वाचा ।
स्मरामि वृन्दावनमेव बुद्ध्या वृन्दावनादन्यदहं न जाने ॥९५॥

राधापतिरतिकन्दं वृन्दावनमेव जीवनं येषाम् ।
तच्चरणाम्बुजरेणो राशामेवाहमाशासे ॥ ९६ ॥

शृण्वन्ति शुकसारिकाः सुचरितानि राधापते
स्तदेकपरितुष्टये तरुलतासदोत्फुल्लिताः ।
सरांसि कमलोत्पलादिभिरधुश्च यत्र श्रियं
तदुल्लवक्षति मनः स्मरतदेववृन्दावनम् ॥ ९७ ॥
नानाकेलिनिकुञ्जमण्डपयुते नानासरोवापिका
रम्ये गुल्मलताद्रुमैश्च परितो नानाविधैः शोभिते ।
नानाजातिसमुल्लसत्खगमृगैः नानाविलासस्थली
प्रद्योतद्युति रोचिषि प्रिय कदा ध्येयोऽसि वृन्दावने ॥ ९८ ॥
यत्रैवातिरसम्मदं विहरति मत्प्रेष्ठवस्तुद्वयं
भक्तिः कापि महारसोत्सवमयी यत्रैव निस्यन्दते ।
तत्रैव प्रविशन्ति नैव निगमश्रेणीगिरां भङ्गय
स्तस्मिन्नेव ममास्तु धीः प्रणयिनी वृन्दावने पावने ॥ ९९ ॥
वाण्या गद्गदया कदा मधुपतेः नामानि संकीर्तये
धाराभिर्नयनाम्भसां तरुतलच्चोणीं कदा पङ्कये ।
दृष्ट्वा भावनया पुरोमिलदिव स्वन्तस्वभोग्यं महो
द्वन्द्वं हेमहरिन्मणिच्छवि कदा नं स्ये मुहुर्विह्वलः ॥१०० ॥
वृन्दारण्यनिकुञ्जसीमनि वसन् प्रेमान्तरश्चिन्तयन्
स्वप्राणैकघनं किशोरमिथुनं द्रक्ष्याम्यकस्मात् कदा ।
श्यामाकाञ्चनचन्द्रिका रसमयी गौरीश्च काश्चित् छटाः ।
पश्यामि शृणुयांच शीतमधुरा काश्चिन्मिथोवाक्सुधा ॥१०१॥
वृन्दारण्ये किमपि जनतादुःप्रवेशं प्रदेशं
गत्वा प्रद्यैर्निजदयितयोर्नामजल्पश्चुदश्रुः ।

अत्यन्तार्त्या विकलविकलोदिव्यमूर्त्तैकयापि
श्रीश्वर्यास्याकरम्तगद्दस्यावाक्सुधास्वासितः स्याम् ॥१०२॥
एतत् कारुण्यपुञ्जं कतिदिनकलितस्वाश्रयप्रौढ़ि राधा
कृष्णाङ्घ्रि द्वन्द्वगूढप्रणयमयरसास्वाञ्चितो साधुदृष्टैः ।
श्रीमद्वृन्दावनं ये निजमखिलपराकारिरूपेण सान्द्रा
नन्दौघस्य दिवाप्रोच्छलितमधुरिमैकार्णवेनाविरास्ताम् । १०३ ॥
कदा सुदृढभावनोदितनिजेष्टरूपो
मनागपि स्मृतशरीरकोनहिरसेप्रविष्टोऽद्भुते ।
क्षणं किमु मुहूर्त्तकं किमथवा नमे वास्थितो
वहिर्दृगपि मुग्धवद्वा बहुविहरामि वृन्दावने ॥ १०४ ॥
नान्यद्वदामि न शृणोमि न चिन्तयामि
नान्यद्व्रजामि न भजामि न चाश्रयामि ।
पश्यामि जाग्रति तथास्वप्नेऽपिनान्यत्
श्रीराधिकारतिविनोदवनं विनाहम् ॥ १०५ ॥
किं मां खेदयसे विमुञ्च वसनं तल्पोत्तमेऽस्मिन् सुखे
नागत्य स्वपिहि त्यज त्यजभुज स्निह्यामि कान्तेसकृत् ।
आः किं निर्दयमुञ्च मुञ्च नकिमप्यापीड़ये राधिका
कृष्णा लापमिमं कदानु शृणुयां वृन्दाटवीकीरतः ॥१०६॥
कदा वास्वच्छन्दं दिनरजनिवृन्दावनवने
चरन्नेकान्तः स्वस्तुत नवनिजकुञ्जानि प्रविशन् ।
अकस्मादेकासौकिरमधुरकैशोरसुधया
इतो न त्वं याया इति मृदुगिरा वारयति माम् ॥ १०७॥

कदा वा तूष्णीकः शिथिलितसमस्तव्यवहृतिः
त्यजन् दीर्घश्वासं कथमपि गृहीतैककवलः ।
सदा आयत्प्रायक्षणमुदिततन्द्रोऽतिमधुरं
तदालोके वृन्दावनभुवि निजप्राणमिथुनम् ॥ १०८ ॥

अकस्मादेकस्मान्नवललितकुञ्जादुत बहिः
भवत् स्मित्वा नव्यं तरुणमिथुनं लौकिकमिव ।
गतौ दूरं दृष्ट्वा पुनरथ निवृत्य स्वदयितौ
वितर्क्यं स्यां वृन्दावनभुवि महाप्रेमविकलः ॥ १०९ ॥

कदा पर्यञ्ज्योत्स्नाधवलरजनौ वासवलये
चरन्नेको वृन्दावनप्रतिविलासस्मृतिपरः ।
अकस्मादानन्दाम्बुधिलहरिकोलाहलमिव
ध्वनिं दिव्यं वेणोर्वलयरसनादेश्च शृणुयाम् ॥ ११० ॥

कदा वा कस्यापि स्फुटनवकदम्बस्य विटपे
स्फुरद्गोपीभर्तुः किमपि कवये स्मेरवदनम् ।
कदा श्रीराधायाः कुसुमचयलीलाश्वललितं
करं वृत्ते वृन्दावनभुवि लतासु क्वचिदपि ॥ १११ ॥

इदं मे किं भावि द्रुतकनकगौरच्छवि हरिं
मणिश्यामं धामद्वयमिह मिथो मेऽर्पितभुजम् ।
निरीक्षे तत्स्मेरं बहुविध महाप्रेमविकृतिं
स्थितं पश्चाच्छायाद्वयमथ पुरो मूर्च्छयति माम् ॥ ११२ ॥

अपि प्रेमोत्कण्ठात्क्षितिषु विलुठत् स्वं वपुरिदं
करेण स्पृष्ट्वा मामनुचरयते राधा प्रिययुता ।

अहो ! वृन्दारण्येऽद्भुतमहिमसीमन्यपि मुहु-
र्घटाशा काप्येका समुदयति हा किं न भविता ॥ ११३ ॥
कदा वा कालिन्दीतटनिकटवृन्दावनलता
निकुञ्जान्तः सुप्तं तदतिसरसं प्रेष्ठमिथुनम् ।
मिथो गाढ़ाश्लिष्टं मृदु मृदु मया लालितपदं
मुदा वीक्षे स्वप्नेऽप्यहह सुखनिद्रागतमहम् ॥ ११४ ॥
महाश्चर्यानन्तस्वमहिमबलादेव सकला
धमस्याप्याशानां व्यतिकरमसम्भाव्यमपि मे ।
कदा वृन्दारण्यं स्ववसतिकथामात्रनिवहत्
कृपापूरं सम्पूरयतु परतोऽप्यवुंदजनैः ॥ ११५ ॥
स्वकर्मस्रोतोभिः सततमभितश्चालितममुं
प्रभो ! जीवं यत्र क्वचिदपि न यात्यन्तविवशम् ।
परन्त्वेतावन्मे भवतु भवदुःखार्दितहृदो-
ऽप्यविश्रान्तं वृन्दावनपदपरे वास्तु रसना ॥ ११६ ॥
न सत्याख्ये लोके स्पृहयति मनो ब्रह्मपदवीं
न वैकुण्ठे विष्णोरपि मृगयते पार्षदतनुम् ।
अपि श्रीवृन्दावनसरसभावोत्सवरतां
निवासे धन्यानां सुबहुलमिजन्मापि मनुते ॥ ११७ ॥
श्रीमद्वृन्दाविपिनकुसुमामोदवाही समीरो
यस्मिन् देशे सरति तदवच्छिन्नलक्ष्मामृतो वा ।
येषां वृन्दावनमनुसरत्ज्जीवया सन्नतं वा
तत्रैवास्तां मम खलु जनिर्हन्त तेषां गृहेऽपि ॥ ११८ ॥

ममापि स्यादेतादृशमपि दिनं किन्तु परमं
यदा वृन्दाटव्याः कथमपि कृतस्पर्शनमपि ।
अहो ! देहं दूरादपि समवलोक्यापि जनुषां
मुहुर्धन्यं मन्ये धरणिपतितः स्वां कृतनतिः ॥ ११९ ॥
यदपि च मम नास्ति श्रीलवृन्दावनीये
महिमनि न समोऽहं हन्त विश्वासगन्धः ।
यदपि मम न तस्मिन्नास्ति वासेष नापि
प्रसरतु मम तादृश्येव वाणी तथापि ॥ १२० ॥
अचैतन्यप्रायं जगदिदमहो सर्वविदपि
प्रथीयः श्रीवृन्दावनमहिमवीजाज्जनिमतिः ।
अहो ! भ्राम्यद्दृष्टा विविधसदसद्वर्त्मसु तथा
न पूर्णं स्याच्चित्तं परमिह निषेवे पदरजः ॥ १२१ ॥
हा वृन्दावन ! हा महारसमय ! प्रेमैकसम्पन्निधे !
हा राधापति ! नागर ! स्मरकलासाक्षिन् ! मदेकप्रिय !
हा रासेश्वरविभ्रमूर्च्छनलतावल्लीखगाद्यद्भुत
श्रीमद्वाप्रकृतेः परादपि पर त्वं मे गतिस्त्वं गतिः ॥१२२॥

नमोऽस्तु वृन्दावनसुन्दराभ्यां
नमोऽस्तु वृन्दावनविभ्रमाभ्याम् ।
नमोऽस्तु वृन्दावनजीवनाभ्यां
नमोऽस्तु वृन्दावननागराभ्याम् ॥ १२३ ॥
नमोऽस्तु वृन्दावनसत्कृपाभ्यां
नमोऽस्तु वृन्दावनसद्रसाभ्याम् ।

नमोऽस्तु वृन्दावनपूर्णताभ्यां
नमोऽस्तु वृन्दावनगोचराभ्याम् ॥ १२४ ॥
वृन्दारण्योत्तमं नास्ति नास्ति मत्तोऽधमः क्वचित्।
राधानाम्नः प्रभावेण यदि स्यान्मेलनं तयोः ॥ १२५ ॥
श्रीमद्वृन्दावने सर्वाः सत्त्वनामैकमङ्गलम्।
सर्वाश्चर्यानन्तशक्ति सुखे विजयतां मम ॥ १२६ ॥

इति श्रीवृन्दावनशतकं समाप्तम् ॥

---

# आनन्दलहरी।

---

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
नचेदेवं देवो न खलु कुशलः स्पन्दितुमपि।
अतस्त्वामाराध्यां हरिहरविरिञ्च्यादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ॥ १ ॥
तनीयांसं पांशुं तव चरणपङ्केरुहभवं
विरिञ्चिः सञ्चिन्वन् विरचयति लोकानविकलम्।
वहत्येनं शौरिः कथमपि सहस्रेण शिरसा
हरः संक्षुभ्यैनं भजति भसितोद्धूलनविधिम् ॥ २ ॥
अविद्यानामन्तस्तिमिरमिहिरोद्दीपनकरी
जडानां चैतन्यं स्तवकमकरन्दस्रुतिशिरा।

दरिद्राणां चिन्तामणिगुणनिका जन्मजलधौ
निमग्नानां दंष्ट्रा मुररिपुवराहस्य भवति ॥ ३ ॥
त्वदन्यः पाणिभ्यामभयवरदो दैवतगणः
त्वमेकानैवासि प्रकटितवराभित्यभिनया ।
भयात् त्रातुं दातुं फलमपि च वाञ्छासमधिकं
शरण्ये लोकानां तव हि चरणावेवनिपुणौ ॥ ४ ॥
हरिस्त्वामाराध्य प्रणतजनसौभाग्यजननी
पुरा नारीभूत्वा स्मररिपुमपि क्षोभमनयत् ।
स्मरोऽपि त्वां नत्वा रतिनयनलेह्येन वपुषा
मुनीनामप्यन्तः प्रभवति हि मोहाय महताम् ॥ ५ ॥
धनुः पौष्पं मौर्वीमधुकरमयी पञ्चविशिखा
वसन्तः सामन्तो मलयमरुदायोधनरथः ।
तथाप्येकः सर्वं हिमगिरिसुते कामपि कृपां
अपाङ्गात्ते लब्ध्वा जगदिदमनङ्गो विजयते ॥ ६ ॥
क्वणत्काञ्चीदामा करिकरभकुम्भस्तनभरा
परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना ।
धनुर्बाणान् पाशं सृणिमपि दधाना करतलैः
पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका ॥ ७ ॥
सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते
मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे ।
शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां
भजन्ति त्वां धन्याः कति च न चिदानन्दलहरीम् ॥ ८ ॥

महीं मूलाधारे कमपि मणिपूरे हुतवहं
स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि ।
मनोऽपि भ्रूमध्ये सकलमपि भित्वा कुलपथं
सहस्रारे पद्मे सह रहसि पत्या विहरसि ॥ ९ ॥

सुधाधारासारैश्चरणयुगलान्तर्विगलितैः
प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसा ।
अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं
स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि ॥ १० ॥

चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरधः
प्रभिन्नाभिः शम्भोर्नवभिरिति मूलप्रकृतिभिः ।
त्रयश्चत्वारिंशद्वसुदलकलाश्रत्रिवलयः
त्रिरेखाभिः सार्द्धं तव भवनकोणाः परिणताः ॥ ११ ॥

त्वदीयं सौन्दर्य्यं तुहिनगिरिकन्ये तुलयितुं
कवीन्द्राः कल्पान्ते कथमपि विरिञ्चिप्रभृतयः ।
यदालोकौत्सुक्यादमरललना यान्ति सहसा
तपोभिर्दुष्प्रापामपि गिरिशसायुज्यपदवीम् ॥ १२ ॥

नरं वर्षीयांसं नयनविरसं नर्मसु जडं
तवापाङ्गालोके पतितमनुधावन्ति शतशः ।
गलद्वेणीबन्धाः कुचकलसविस्रस्तसिचया
हठात् त्रुटत्काञ्चीविगलितदुकूला युवतयः ॥ १३ ॥

क्षितौ षट्पञ्चाशद्द्विसमधिकपञ्चाशदुदके
हुताशे द्वाषष्टिश्चतुरधिकपञ्चाशदनिले ।

दिवि द्विषट् त्रिंशन्मनसि च चतुःषष्टिरिति ये
मयूखास्तेषामप्युपरि तव पादाम्बुजयुगम् ॥ १४ ॥
शरज्ज्योत्स्नाशुभ्रां शशियुतजटाजूटमुकुटां
वरत्रासत्राणस्फटिकगुटिकापुस्तककराम्।
सकृन्नत्वा न त्वां कथमपि सतां संविदधते
मधुक्षीरद्राक्षामधुरिमधुरीणा भणितयः ॥ १५ ॥
कवीन्द्राणां चेतः कमलवनमालातपरुचिं
भजन्ते ये सन्तः कतिचिदरुणामेव भवतीम्।
विरिञ्चिप्रेयस्यास्तरुणतरशृङ्गारलहरीं
गभीराभिर्वाग्भिर्विदधति सभारञ्जनमयीम् ॥ १६ ॥
सवित्रीभिर्वाचां शशिमणिशिलाभङ्गरुचिभिः
वशिन्याद्याभिस्त्वां सह जननि सञ्चिन्तयति यः।
स कर्त्ता काव्यानां भवति महतां भङ्गिशुभगैः
वचोभि र्वाग्देवीवदनकमलामोदमधुरैः ॥ १७ ॥
तनुच्छायाभिस्ते तरुणतरणिश्रीसरणिभिः
दिवं सर्वामुर्वीमरुणिमणिमग्नां स्मरति यः।
भवन्त्यस्य त्रस्यद्वनहरिणशालीननयनाः
सहोर्वश्या वश्याः कति कति नगीर्वाणगणिकाः ॥१८॥
मुखं विन्दुं कृत्वा कुचयुगमधस्तस्य तदधो
हरार्द्धं ध्यायेद्धरमहिषि ते मन्मथकलाम्।
स सद्यः संक्षोभं नयति वनिता इत्यतिलघु
त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम् ॥ १९ ॥

किरन्तीमङ्गेभ्यः किरणनिकुरम्बामृतरसं
हृदि त्वामाधत्ते हिमगिरिशिलामूर्तिमिव यः।
स सर्पाणां दर्पं शमयति शकुन्ताधिपइव
ज्वरप्लुष्टं दृष्ट्या सुखयति सुधासारसिचया॥ २०॥
तडिल्लेखातन्वीं तपनशशिवैश्वानरमयीं
निषण्णां षण्णामप्युपरि कमलानां तव कलाम्।
महापद्माटव्यां मृदितमलमायेन मनसा
महान्तः पश्यन्तो दधति परमाह्लादलहरीम॥ २१॥
भवानि त्वं दासे मयि वितर दृष्टिं सकरुणा
मिति स्तोतुं वाञ्छन् कथयति भवानि त्वमिति यः।
तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं
मुकुन्दब्रह्मेन्द्रस्फुटमुकुटनीराजितपदाम्॥ २२॥
त्वया हृत्वा वामं वपुरपरितृप्तेन मनसा
शरीरार्द्धं शम्भोरपरमपि शङ्के हृतमभूत्।
तथाहि त्वद्रूपं सकलमरुणाभं त्रिनयनं
कुचाभ्यामानम्रं कुटिलशशिचूड़ालमुकुटम्॥ २३॥
जगत् सूते धाता हरिरवति रुद्रः क्षययति
तिरस्कुर्वन्नेतान् स्वमपि वपुरीशस्तिरयति।
सदापूर्वः सर्वं तदिदमनुगृह्णाति च शिवः
तवाज्ञामालम्ब्य क्षणचलितयोर्भ्रूलतिकयोः॥ २४॥
त्रयाणां देवानां त्रिगुणजनितानामपि शिवे
भवेत् पूजा पूजा तव चरणयो र्या विरचिता।

तथाहि त्वत्पादोद्वहनमणिपीठस्य निकटे
स्थिता ह्येते शश्वन्मुकुलितकरोत्तंसमुकुटाः ॥ २५ ॥
विरिञ्चिः पञ्चत्वं व्रजति हरिराप्नोति विरतिं
विनाशं कीनाशो भजति धनदो याति निधनम् ।
वितन्द्रा माहेन्द्री विततिरपि सम्मीलतिदृशां
महासंहारेऽस्मिन् विहरति सति त्वत्पतिरसौ ॥ २६ ॥
जपो जल्पः शिल्पं सकलमपि मुद्राविरचनं
गतिः प्रादक्षिण्यभ्रमणमदनाद्या हुतविधिः ।
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा
सपर्य्यापर्य्यायस्तव भवतु यन्मे विलसितम् ॥ २७ ॥
ददाने दीनेभ्यः श्रियमनिशमात्मानुसदृशी
ममन्दं सौन्दर्य्यस्तवकमकरन्दं विकिरति ।
तवास्मिन्मन्दारस्तवकसुभगे यातु चरणे
निमज्जन्मज्जीवः करणचरणैः षट्चरणताम् ॥ २८ ॥
सुधामप्यास्वाद्य प्रतिभयजरामृत्युहरिणीं
विपद्यन्ते विश्वे विधिशतमखाद्या दिविषदः ।
करालं यत् क्ष्वेडं कवलितवतः कालकलना
न शम्भोस्तन्मूलं जननि तव ताटङ्कमहिमा ॥ २९ ॥
किरीटं वैरिञ्चं परिहर पुरः कैटभभिदः
कठोरे कोटीरे स्खलसि जहि जम्भारिमुकुटम् ।
प्रणम्येष्वेतेषु प्रसभमुपयातस्य भवनं
भवस्याभ्युत्थाने तव परिजनोक्तिर्विजयते ॥ ३० ॥

चतुःषष्ट्या तन्त्रैः सकलमभिसन्धाय भवनं
स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रः पशुपतिः ।
पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटनात्
स्वतन्त्रन्ते तन्त्रं क्षितितलमवातीतरदिदम् ॥ ३१ ॥

शिवः शक्तिः कामः क्षितिरथ रविः शीतकिरणः
स्मरो हंसः शक्रस्तदनु च परामारहरयः ।
अमी हृल्लेखाभिस्तिसृभिरवसानेषु घटिता
भजन्ते ते वर्णास्तव जननि नामावयवताम् ॥ ३२ ॥

स्मरं योनिं लक्ष्मीं त्रितयमिदमाद्ये तव मनो
निधायैके नित्ये निरवधिमहाभोगरसिकाः ।
जपन्ति त्वां चिन्तामणिगुणनिबद्धाक्षवलयाः
शिवाग्नौ जुह्वन्तः सुरभिघृतधाराहुतिशतैः ॥ ३३ ॥

शरीरं त्वं शम्भोः शशिमिहिरवक्षोरुहयुगं
तवात्मानं मन्ये भगवति भवात्मानमनघम् ।
अतः शेषः शेषीत्ययमुभयसाधारणतया
स्थितः सम्बन्धो वां सरसपरमानन्दपदयोः ॥ ३४ ॥

मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि
त्वमापस्त्वं भूमिस्त्वयि परिणतायां नहि परम् ।
त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा
चिदानन्दाकारं शिवयुवतिभावेन बिभृषे ॥ ३५ ॥

तवाज्ञाचक्रस्थं तपनशशिकोटिद्युतिधरं
परं शम्भुं वन्दे परिमिलितपार्श्वं परचिता ।

यमाराद्धुं भक्त्या रविशशिशुचीनामविषये
निरालोके लोका निवसति निजालोकभवने ॥ ३६ ॥
विशुद्धौ ते शुद्धस्फटिकविशदं व्योमजनकं
शिवं सेवे देवीमपि शिवसमानव्यसनिनीम् ।
ययोः कान्त्या यान्त्या शशिकिरणसारूप्यसरणीं
विधूतान्तर्ध्वान्ता विलसति चकोरीव जगती ॥ ३७ ॥
समुन्मीलत् सम्वित् कमलमकरन्दैकरसिकं
भजे हंसद्वन्द्वं किमपि महतां मानसचरम् ।
यदालापादष्टादशगुणितविद्यापरिणतिः
यदादत्ते दोषाद्गुणमखिलमद्भ्यः पय इव ॥ ३८ ॥
तडित्वन्तं शक्त्या तिमिरपरिपन्थिस्फुरणया
स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषम् ।
तमश्यामं मेघं कमपि मणिपूरैकशरणं
निषेवे वर्षन्तं हरमिहिरतप्तं त्रिभुवनम् ॥ ३९ ॥
तव स्वाधिष्ठाने हुतवहमधिष्ठाय नियतं
तमीडे संवर्त्तं जननि जननीं तां च समयाम् ।
यदालोके लोकान् दहति महति क्रोधकलिते
दयार्द्रा ते दृष्टिः शिशिरमुपचारं रचयति ॥ ४० ॥
तवाधारे मूले सह समयया लास्यपरया
नवात्मानं वन्दे नवरसमहाताण्डवनटम् ।
उभाभ्यामेताभ्यामुभयविधिमुद्दिश्य दयया
सनाथाभ्यां जज्ञे जनकजननीमज्जगदिदम् ॥ ४१ ॥

गतैर्माणिक्यत्वं गगनमणिभिः सान्द्रघटितं
किरीटं ते हैमं हिमगिरिसुते कीर्तयति यः ।
समीपे यच्छाया स्फुरणकिरणं चन्द्रशकलं
धनुः शौनासीरं किमिदमिति बध्नाति धिषणाम् ॥ ४२ ॥
धुनोतु ध्वान्तं नस्तुलितदलितेन्दीवरदलं
घनं श्लक्ष्णं स्निग्धं चिकुरनिकुरम्बं तव शिवे ।
यदीयं सौरभ्यं सहजमुपलब्धुं सुमनसो
वसन्त्यस्मिन् मन्ये वलमथनवाटीविटपिनाम् ॥ ४३ ॥
वहन्ती सिन्दूरं प्रबलकबरीभारतिमिर
द्विषां वृन्दैर्वन्दीकृतमिव नवीनार्ककिरणम् ।
तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरी
परीवाहस्रोतःसरणिरिव सीमन्तसरणिः ॥ ४४ ॥
अरालैः स्वाभाव्यादलिकरभसश्रीभिरलकैः
परीतं ते वक्त्रं परिहसति पङ्केरुहरुचिम् ।
दरस्मेरे यस्मिन् दशनरुचिकिञ्जल्करुचिरे
सुगन्धौ माद्यन्ति स्मरमथनचक्षुर्मधुलिहः ॥ ४५ ॥
ललाटं लावण्यद्युतिविमलमाभाति तव यत्
द्वितीयं तन्मन्ये मुकुटघटितं चन्द्रशकलम् ।
विपर्यासन्यासादुभयमभिसन्धाय मिलितः
सुधालेपस्यूतिः परिणमति राकाहिमकरः ॥ ४६ ॥
भ्रुवौ भुग्ने किञ्चिद्भुवनभयभङ्गव्यसनिनि
त्वदीये नेत्राभ्यां मधुकररुचिभ्यां धृतगुणे ।

धनुर्मन्ये सव्येतरकरगृहीतं रतिपतिः
प्रकोष्ठे मुष्टौ च स्थगयति निगूढान्तरमिदम् ॥ ४७ ॥
अहः सूतेऽसव्यं तव नयनमर्कात्मकतया
त्रियामां वामं ते सृजति रजनीनायकतया ।
तृतीया ते दृष्टिर्दरदलितहेमाम्बुजरुचिः
समाधत्ते सन्ध्यां दिवसनिशयोरन्तरचरीम् ॥ ४८ ॥
विशाला कल्याणी स्फुटरुचिरयोध्या कुवलयैः
कृपापारावारा किमपि मधुराभोगलतिका ।
अवन्ती ते दृष्टिर्बहुनगरविस्तारविजया
ध्रुवं तत्तन्नामव्यवहरणयोग्या विजयते ॥ ४९ ॥
कवीनां सन्दर्भस्तबकमकरन्दैकरसिकं
कटाक्षव्याक्षेपभ्रमरकलभौ कर्णयुगलम् ।
अमुञ्चन्तौ दृष्ट्वा तव नवरसास्वादतरला
वसूयासंसर्गादलिकनयनं किञ्चिदरुणम् ॥ ५० ॥
शिवे शृङ्गारार्द्रातदितरमुखे कुत्सनपरा
सरोषागङ्गायां गिरिशनयने विस्मयवती ।
हराहिभ्यो भीता सरसिरुहसौभाग्यजननी
सखीषु स्मेरा ते मयि जननि दृष्टिः सकरुणा ॥ ५१ ॥
गते कर्णाभ्यर्णं गरुड़इव पक्ष्माणि दधती
पुरांभेत्तुश्चित्ते प्रशमरसविद्रावणफले ।
इमे नेत्रे गोत्राधरपतिकुलोत्तंसकलिके
तवाकर्णाकृष्टस्मरशरविलासङ्कलयतः ॥ ५२ ॥

विभक्तं त्रैवर्ण्यं व्यतिकरितलीलाञ्जनतया
विभाति त्वन्नेत्रत्रितयमिदमीशानदयिते।
पुनः स्रष्टुं देवान् द्रुहिणहरिरुद्रानुपरतान्
रजःसत्वं बिभ्रत्तम इति गुणानां त्रयमिदम् ॥ ५३ ॥
पवित्रीकर्तुं नः पशुपतिपराधीनहृदये
दयामित्रैर्नेत्रैररुणधवलश्यामरुचिभिः।
नदः शोणो गङ्गा तपनतनयेति ध्रुवममुं
त्रयाणां तीर्थानामुपनयसि सम्भेदमनघे ॥ ५४ ॥
तवापर्णे कर्णेजपनयनपैशुन्यचकिता
विलीयन्ते तोये नियतमनिमेषाः सफरिकाः।
इयञ्च श्रीर्बद्धच्छदपुटकवाटं कुवलयं
जहाति प्रत्यूषे निशि च विघटय्य प्रविशति ॥ ५५ ॥
निमेषोन्मेषाभ्यां प्रलयमुदयं याति जगती
तवेत्याहुः सन्तो धरणिधरराजन्य तनये
त्वदुन्मेषाज्जातं जगदिदमशेषं प्रलयतः
परित्रातुं शङ्के परिहृतनिमेषास्तव दृशः ॥ ५६ ॥
दृशाद्राघीयस्यादरदलितनीलोत्पलरुचा
दवीयांसन्दीनं स्नपय कृपया मामपि शिवे।
अनेनायं धन्यो भवति नच ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥ ५७ ॥
अरालं ते पाणियुगलमगराजन्यतनये
न केषामाधत्ते कुसुमशरकोदण्डकुतुकम्।

तिरश्चीनो यत्र श्रवणपथमुल्लंघ्य विलसन्
अपाङ्गव्यासङ्गो दिशति शरसन्धानधिषणाम् ॥५८ ॥
स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं
चतुश्चक्रं मन्ये तव मुखमिदं मन्मथरथम् ।
यमारुह्य द्रुह्यत्यवनिरथमर्केन्दुचरणं
महावीरो मारः प्रमथपतये स्वं जितवते ॥ ५९ ॥
सरस्वत्याः सूक्तीरमृतलहरीकौशलभिदः
पिबन्त्याः सर्वाणि श्रवणचुलुकाभ्यामविकलम् ।
चमत्कारश्लाघाचलितशिरसः कुण्डलगणो
झणत्कारैस्तारैः प्रतिवचनमाचष्ट इव ते ॥ ६० ॥
असौ नासावंशस्तुहिनगिरिवंशध्वजपटे
त्वदीयो नेदीयः फलतु फलमस्माकमुचितम् ।
वहन्नन्तर्मुक्ताः शिशिरतरनिश्वासघटिताः
समृद्धा यस्तासां बहिरपि च मुक्तामणिधरः ॥ ६१ ॥
प्रकृत्यारक्तायास्तव सुदति दन्तच्छदरुचेः
प्रवक्ष्ये सादृश्यं जनयतु कथं विद्रुमलता ।
न बिम्बं तद्बिम्बप्रतिफलनलाभादरुणितं
तुलामध्यारोढुं कथमपि विलज्जेत कलया ॥ ६२ ॥
स्मितज्योत्स्नाजालं तव वदनचन्द्रस्य पिबतां
चकोराणामासीदतिरसतया चञ्चुजड़िमा ।
अतस्ते शीतांशोरमृतलहरीरम्लरुचयः
पिबन्ति स्वच्छन्दंनिशि निशि भृशं काञ्जिकधिया ॥ ६३ ॥

अविश्रान्तं पत्युर्गुणगणकथाम्रेडनजडा
जपापुष्पच्छाया जननि! तव जिह्वा विजयते ।
यदग्रासीनायाः स्फटिकदृषदच्छच्छविमयी
सरस्वत्या मूर्त्तिः परिणमति माणिक्यवपुषा ॥ ६४ ॥
रणे जित्वा दैत्यानपहृतशिरस्त्रैः कवचिभिः
निवृत्तैश्चण्डांशुत्रिपुरहरनिर्माल्यविमुखैः
विरिञ्चीन्द्रोपेन्द्रैः शशिशकलकर्पूरशकला
विलुठ्यन्ते मातस्तव वदनताम्बूलकणिकाः ॥ ६५ ॥
विपंच्या गायन्ती विविधमवदानं पशुपतेः
तयारब्धे वक्तुं चलितशिरसा साधुवदने ।
त्वदीयैर्माधुर्य्यैरपलपिततन्त्रीकलरवां
निजां वीणां वाणी निचुलयति चोलेन निभृतम् ॥ ६६ ॥
कराग्रेण स्पृष्टं तुहिनगिरिणा वत्सलतया
गिरीशेनोदस्तं मुहुरधरपानाकुलतया ।
करग्राह्यं शम्भोर्मुखमुकुरवृन्तं गिरिसुते
कथङ्कारं ब्रूमस्तवचिबुकमौपम्यरहितम् ॥ ६७ ॥
भुजाश्लेषान्नित्यं पुरदमयितुः कण्टकवती
तव ग्रीवाधत्ते मुखकमलनालश्रियमियम् ।
स्वतःश्वेताकालागुरुवहुलजम्बालमलिना
मृणालीलालित्यं व्रजति तदधो हारलतिका ॥ ६८ ॥
गले रेखास्तिस्रो गतिगमकगीतैकनिपुणे
विवाहव्यालब्धस्वगुणगणसंख्याप्रतिभुवः ।

विराजन्ते नानाविधमधुररागाकरभुवां
त्रयाणां ग्रामाणां स्थितिनियमसीमानइव ते ॥ ६९ ॥
मृणालीमृद्वीनां तव भुजलतानां चतसृणां
चतुर्भिः सौन्दर्य्यं सरसिजभवस्तौति वदनैः ।
नखेभ्यः सन्त्रस्यन् प्रमथदलनादन्धकरिपोः
चतुर्णां शीर्षाणां सममभयहस्तार्पणधिया ॥ ७० ॥
नखानामुद्योतैर्नवनलिनरागं विहसतां
कराणान्ते कान्तिं कथय कथयामः कथममी ।
कदाचिद्वा साम्यं व्रजतु कलया हन्त कमलं
यदि क्रीड़ल्लक्ष्मीचरणतललाक्षारुणदलम् ॥ ७१ ॥
समन्देवि ! स्कन्दद्विपवदनपीतं स्तनयुगं
तवेदं नः खेदं हरतु सततं प्रस्नुतमुखम् ।
यदालोक्याशङ्काकुलितहृदयो हासजनकः
स्वकुम्भौ हेरम्बः परिमृशति हस्तेन झटिति ॥ ७२ ॥
अमू ते वक्षोजावमृतरसमाणिक्यकलसौ
न सन्देहस्पन्दो नगपतिपताके मनसि नः ।
पिबन्तौ तौ यस्मादविदितवधूसङ्गमरसौ
कुमारावद्यापि द्विरदवदनक्रौञ्चदलनौ ॥ ७३ ॥
वहत्यम्ब स्तम्बेरमवदनकुम्भप्रकृतिभिः
समारब्धां मुक्तामणिभिरमलां हारलतिकाम् ।
कुचाभोगो बिम्बाधररुचिभिरन्तः शबलितां
प्रतापव्यामिश्रां पुरविजयिनःकीर्त्तिमिव ते ॥ ७४ ॥

कुचौ सद्यः स्विद्यत्तटघटितकूर्पासभिदुरौ
कषन्तौ दोर्मूलं कनककलसाभौ कलयताम्।
भयात् त्रातुं भङ्गादुदरमविलम्बं तनुभुवा
त्रिधा बद्धं देवि! त्रिवलिनवलीवल्लिभिरिव॥ ७५॥

तव स्तन्यं मन्ये धरणिधरकन्ये हृदयतः
पयः पारावारः परिहरति सारस्वतइव।
दयावत्या दत्तं द्रविड़शिशुरास्वाद्य तव यत्
कवीनां प्रौढ़ानामजनि कमनीयं कवयिता॥ ७६॥

हरक्रोधज्वालावलिभिरवलीढेन वपुषा
गभीरे ते नाभीसरसि कृतझम्पो मनसिजः।
समुत्तस्थौ तस्मादचलतनये धूमलतिका
जनस्तां जानीते जननि तव रोमावलिरिति॥ ७७॥

यदेतत् कालिन्दीतनुभरतरङ्गाकृति शिवे
कृशे मध्ये किञ्चिज्झटिति तव तद्भाति सुधियाम्।
विमर्दादन्योन्यं कुचकलसयोरन्तरगतं
तनूभूतं व्योम प्रविशदिव नाभिं कुहरिणीम्॥ ७८॥

स्थिरोगङ्गावर्तस्तनमुकुललोमावलिलता
तलारालं कुण्डं कुसुमशरतेजोहुतभुजः।
रते लीलागारं किमपि तव नाभीति गिरिजे
विलद्वारं सिद्धेर्गिरिश नयनानां विजयते॥ ७९॥

निसर्गक्षीणस्य स्तनतटभरेण क्लमजुषो
नमन्मूर्त्तेर्नाभौ वलिषु शनकैस्त्रुट्यतइव।

चिरन्ते मध्यस्य त्रुटिततटिनीतीरतरुणा
समावस्था स्थेम्नो भवतु कुशलं शैलतनये ॥ ८० ॥
गुरुत्वं विस्तारं क्षितिधरपतिः पार्वति निजात्
नितम्बादाच्छिद्य त्वयि हरणरूपेण विदधे।
अतस्ते विस्तीर्णो गुरुरयमशेषां वसुमतीं
नितम्बप्राग्भारः स्थगयति लघुत्वं नयति च ॥ ८१ ॥
करीन्द्राणां शुण्डाकनककदलीकाण्डपटलीम्
उभाभ्यामूरुभ्यामुभयमपि निर्जित्य भवती।
सुवृत्ताभ्यां पत्यौ प्रणतिकठिनाभ्यां गिरिसुते
विजिग्ये जानुभ्यां विबुधकरिकुम्भद्वयमपि ॥ ८२ ॥
पराजेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते
निषङ्गौ ते जङ्घे विषमविशिखो बाढमकृत।
यदग्रे दृश्यन्ते दशशरफलाः पादयुगले
नखाग्रच्छद्मानः सुरमुकुटशाणैकनिशिताः ॥ ८३ ॥
श्रुतीनां मूर्द्धानो दधति तव यौ शेखरतया
ममाप्येतौ मातः! शिरसि दयया धेहि चरणौ।
ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी
ययोर्लाक्षालक्ष्मीररुणहरिचूडामणिरुचिः ॥ ८४ ॥
हिमानीहन्तव्यं हिमगिरितटाक्रान्तरुचिरौ
निशायां निद्राणं निशि च परभागेन विषदौ।
परं लक्ष्मीपात्रं श्रियमभिसृजन्तौ प्रणयिनां
सरोजं त्वत्पादौ जननि! जयतश्चित्रमिह किम् ॥ ८५ ॥

नमोवाचं ब्रूमो नयनरमणीयाय पदयो
स्तवास्मै द्वन्द्वाय स्फुटरुचिरमालक्तकरुचे।
असूयत्यत्यन्तं यदभिहननाय स्पृहयते
पशूनामीशानः प्रमदवनकङ्केल्लितरवे ॥ ८६ ॥
मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितं
ललाटे भर्तारं चरणयुगलं ताड़यति ते।
चिरादन्तःशल्यं दहनकृतमुन्मीलितवता
तुलाकोटिक्वाणैः किलकिलितमीशानरिपुणा ॥ ८७ ॥
पदन्ते कान्तीनां प्रपदमपरं देवि विपदां
कथं नीतं सद्भिः कठिनकमठीकर्परतुलाम्।
कथम्वा बाहुभ्यामुपयमनकाले पुरभिदा
तदादाय न्यस्तं दृषदि दयमानेन मनसा ॥ ८८ ॥
नखैर्नाकस्त्रीणां करकमलसङ्कोचशशिभिः
तरूणां दिव्यानां हसत इव ते चण्डि! चरणौ।
फलानि स्वःस्थेभ्यः किशलयकराग्रेण ददतां
दरिद्रेभ्यो भद्रां श्रियमनिशमह्नाय ददतौ ॥ ८९ ॥
कदा काले मातः! कथय कलितालक्तकरसं
पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम्।
प्रकृत्या मूकानामपिच कविताकारणतया
यदाधत्ते वाणी मुखकमलताम्बूलरसताम् ॥ ९० ॥
पदन्यासक्रीड़ापरिचयमिवालब्धुमनसः
चरन्तस्ते खेलां भवनकलहंसा न जहति।

सुविक्षेपे शिक्षां सुभगमणिमञ्जीररणित-
च्छलाद्दाचक्षाणं चरणकमलं चारुचरितम् ॥ ९१ ॥
अराला केशेषु प्रकृतिसरलानन्दहसित
शिरीषाभा गात्रे दृषदिव कठोरा कुचतटे ।
भृशं तन्वी मध्ये पृथुरसि वरारोहविषये
जगत्त्रातुं शम्भोर्जयति करुणा काचिदरुणा ॥ ९२ ॥
पुरारातेरन्तः पुरमसि ततस्त्वच्चरणयोः
सपर्यामर्यादातरुणकरणा नाम सुलभा ।
तथाह्येते नीताः शतमखमुखाः सिद्धिमतुलां
तव द्वारोपान्तस्थितिभिरणिमाद्याभिरमराः ॥ ९३ ॥
गतास्ते पञ्चत्वं द्रुहिणहरिरुद्रेश्वरशिवाः
शिवसस्वच्छच्छायाघटितकपटप्रच्छदपटः ।
त्वदीयानां भासां प्रतिफलनलाभारुणतया
शरीरी शृङ्गारो रसइव दृशां दोग्धि कुतुकम् ॥ ९४ ॥
कलङ्कः कस्तूरीरजनिकरविम्बं जलमयं
कलाभिः कर्पूरैर्मरकतकरण्डं निविड़ितम् ।
अतस्त्वद्भोगेन प्रतिदिनमिदं रिक्तकुहरं
विधिर्भूयो भूयो निविड़यति नूनं तव कृते
स्वदेहोद्भूताभि र्घृणिभिरणिमाद्याभिरभितो
निषेव्ये नित्ये त्वामहमिति सदा भावयति यः ।
किमाश्चर्यं तस्य त्रिनयनसमृद्धिं तृणयतो
महासम्वर्ताग्निर्विरचयति नीराजनविधिम् ॥ ९६ ॥

समुद्भूतस्थूलस्तनभरमुरश्चारुहसितं
कटाक्षे कन्दर्पाः कतिचनकदम्बद्युतिवपुः ।
हरस्य त्वद्भ्रान्तिं मनसि जनयन्तः समतुलां
भवत्यां ये भक्ताः परिणतिरमीषामियमुमे ॥ ९७ ॥
कलत्रं वैधात्रं कति कति भजन्ते न कवयः
श्रियो देव्याः को वा न भवति पतिः कैरतिधनैः ।
महादेवं हित्वा तव सति सतीनामचरमे
कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः ॥ ९८ ॥
गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो
हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम् ।
तुरीया कापि त्वं दुरधिगमनिःसीममहिमा
महामाये विश्वं भ्रमयसि परब्रह्ममहिषि ॥ ९९ ॥
सरस्वत्या लक्ष्म्या विधिहरिसपत्नो विजयते
रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा ।
चिरञ्जीवन्नेव क्षपितपशुपाशव्यतिकरः
परब्रह्माभिख्यं रसयति रसं त्वद्भजनवान् ॥ १०० ॥
निधे नित्यस्मेरे निरवधि गणे नीतिनिपुणे
निरायातज्ञाने नियमपरिचित्तैकनिलये ।
नियत्या निर्मुक्ते निखिलनियमान्तस्तुतिपदे
निरातङ्के नित्ये निशमय ममापि स्तुतिमिमाम् ॥ १०१
प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः
सुधासूतेश्चन्द्रोपलजललवैरर्घ्यरचना ।

स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं
त्वदीयाभिर्वाग्भिस्तव जननि ! वाचां स्तुतिरियम् ॥१०२
मञ्जीरशोभिचरणं वलिशोभिमध्यं
हाराभिरामकुचमम्बुरुहायताक्षम्।
लीलालकं हिममहीधरकन्यकाख्यं
ज्ञानस्वरूपमिदमीश्वरदीपदीप्यम् ॥ १०३ ॥

इति शङ्कराचार्यविरचितानन्दलहरी समाप्ता।

---

## श्रीकृष्णलहरी।

---

कदा वृन्दारण्ये विपुलयमुनातीरपुलिने
चरन्तं गोविन्दं हलधरसुदामादिसहितम्।
अहो कृष्ण ! स्वामिन् मधुरमुरलीमोहनविभो !
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥१॥
कदा कालिन्दीयैर्हरिचरणमुद्राङ्कितटैः
स्मरं गोपीनाथं कमलनयनं सस्मितमुखम्।
अहो पूर्णानन्दाम्बुजवदनभक्तैकललनं "प्रसी" ॥ २ ॥
कदाचित् खेलन्तं व्रजपरिसरे गोपतनयैः
कुतश्चित् संप्राप्तं किमपि भयितं गोपललनम्।
अये राधे ! किं वा हरसि रसिके ! कञ्चुकयुगं "प्रसी" ॥३॥
कदाचित् गोपीनां हसितचकितस्निग्धनयनं
स्थितं गोपीवृन्दे नटमिव नटन्तं सललितम्।

सुराधीशैः सर्वैः स्तुतपदममुं श्रीहरिमिति "प्रसी ॥ ४॥"
कदाचित्स्वच्छायाश्रितमभिमहान्तं यदुपतिं
समाधिस्वच्छायाचल इव विलोलैकमकरम् ।
अये ! भक्तोदाराम्बुजवदन ! नन्दस्य तनयं "प्रसी" ॥ ५ ॥
कदाचित्कालिन्द्यास्तटतरुकदम्बे स्थितममुं
स्मयन्तं साकूतं हृतवसनगोपीस्तनपटम् ।
अहो ! भक्तानन्दाम्बुजवदन ! गोवर्द्धनधरं "प्रसी" ॥ ६ ॥
कदाचित् कान्तारे विजयसखमिष्टं नृपसुतं
वदन्तं पार्थेत्यं नृपसुत ! सखे ! बन्धुरिति च ।
भ्रमन्तं विश्रान्तं श्रितमुरसि रम्यं हरिममी "प्रसी" ॥ ७ ॥
कदा दृक्ष्ये पूर्णं पुरुषममलं पङ्कजदृशं
अहो ! विष्णो ! राधारसिक ! मुरलीमोहन ! विभो !
दयां कर्तुं दीने परमकरुणाब्धे समुचितं "प्रसी" ॥ ८ ॥

इति कृष्णलहरी संपूर्णा ।

---

# गङ्गालहरी ।

---

समृद्धं सौभाग्यं सकलवसुधायाः किमपि तन्
महैश्वर्य्यं लीलाजनितजगतः खण्डपरशोः ।
श्रुतीनां सर्वस्वं सुकृतमथ मूर्त्तं सुमनसाम्
सुधासौन्दर्य्यन्ते सलिलमशिवं नः शमयतु ॥ १ ॥

स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं
त्वदीयाभिर्वाग्भिस्तव जननि ! वाचां स्तुतिरियम् ॥१०२॥

मञ्जीरशोभिचरणं वलिशोभिमध्यं
हाराभिरामकुचमम्बुरुहायताक्षम् ।
लीलालकं हिममहीधरकन्यकाख्यं
ज्ञानस्वरूपमिदमीश्वरदीपदीप्यम् ॥ १०३ ॥

इति शङ्कराचार्यविरचितानन्दलहरी समाप्ता ।

---

## श्रीकृष्णलहरी ।

---

कदा वृन्दारण्ये विपुलयमुनातीरपुलिने
चरन्तं गोविन्दं हलधरसुदामादिसहितम् ।
अहो कृष्ण ! स्वामिन् मधुरमुरलीमोहनविभो !
प्रसीदेतिक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ १ ॥

कदा कालिन्दीयैर्हरिचरणमुद्राङ्कितटैः
स्मरं गोपीनाथं कमलनयनं सस्मितमुखम् ।
अहो पूर्णानन्दाम्बुजवदनभक्तैकललनं "प्रसी" ॥ २ ॥

कदाचित् खेलन्तं व्रजपरिसरे गोपतनयैः
कुतश्चित् संप्राप्तं किमपि भयितं गोपललनम् ।
अये राधे ! किं वा हरसि रसिके ! कञ्चुकयुगं "प्रसी" ॥३॥

कदाचित् गोपीनां हसितचकितस्निग्धनयनं
स्थितं गोपीवृन्दे नटमिव नटं तं सललितम् ।

सुराधीशैः सर्वैः स्तुतपदममुं श्रीहरिमिति "प्रसी ॥४॥"
कदाचित्स्वच्छायाश्रितमभिमहान्तं यदुपतिं
समाधिस्वच्छायाचल इव विलोलैकमकरम्।
अये! भक्तोदाराम्बुजवदन! नन्दस्य तनयं "प्रसी" ॥ ५ ॥
कदाचित्कालिन्द्यास्तटतरुकदम्बे स्थितममुं
स्मयन्तं साकूतं हृतवसनगोपीस्तनपटम्।
अहो! भक्तानन्दाम्बुजवदन! गोवर्द्धनधरं "प्रसी" ॥ ६ ॥
कदाचित् कान्तारे विजयसखमिष्टं नृपसुतं
वदन्तं पार्थेत्थं नृपसुत! सखे! बन्धुरिति च।
भ्रमन्तं विश्रान्तं श्रितमुरसि रम्यं हरिममी "प्रसी" ॥७॥
कदा द्रक्ष्ये पूर्णं पुरुषममलं पङ्कजदृशं
अहो! विष्णो! राधारसिक! मुरलीमोहन! विभो!
इयां कर्तुं दीने परमकरुणाब्धे समुचितं "प्रसी" ॥ ८ ॥

इति कृष्णलहरी संपूर्णा।

---

## गङ्गालहरी।

---

समृद्धं सौभाग्यं सकलवसुधायाः किमपि तन्
महैश्वर्य्यं लीलाजनितजगतः खण्डपरशोः।
श्रुतीनां सर्वस्वं सुकृतमथ मूर्त्तं सुमनसाम्
सुधासौन्दर्य्यन्ते सलिलमशिवं नः शमयतु ॥ १ ॥

दरिद्राणां दैन्यं दुरितमथ दुर्वासनहृदां
द्रुतं दूरीकुर्वन् सकृदुपगतो दृष्टिसरणिम् ।
अपि द्रागाविद्यद्रुमदलनदीक्षागुरुरिह
प्रवाहस्ते वारां श्रियमयमपारां दिशतु नः ॥ २ ॥
स्मृतिं याता पुंसामकृतसुकृतानामपि च या
हरत्यन्तस्तन्द्रां तिमिरमिव चन्द्रांशुसरणिः ।
इयं सा ते मूर्त्तिः सकलसुरसंसेव्यसलिला
ममान्तःसन्तापं त्रिविधमथ तापञ्च हरताम् ॥ ३ ॥
तवालम्बादम्ब ! स्फुरदलघुगर्वेण सहसा
मया सर्वेऽवज्ञासरणिमथ नीताः सुरगणाः ।
इदानीमौदास्यं यदि भजसि भागीरथि ! तदा
निराधारो हा ! रोदिमि कथय केषामिह पुरः ॥४॥
अपि प्राज्यं राज्यं तृणमिव परित्यज्य सहसा
विलोलद्वानीरं तव जननि ! तीरं श्रितवताम् ।
सुधातःस्वादीयः सलिलमिदमातृप्ति पिबतां
जनानामानन्दः परिहसति निर्वाणपदवीम् ॥ ५ ॥
उदञ्चन्मार्त्तण्डस्फुटकपट-हेरम्बजननी-
कटाक्षव्याक्षेपक्षणजनितसंक्षोभनिवहाः ।
भवन्तु त्वङ्गन्तो हरशिरसि गङ्गातनुभुव
स्तरङ्गाःप्रोत्तुङ्गा दुरितभवभङ्गाय भजताम् ॥ ६ ॥
प्रभाते स्नातीनां नृपतिरमणीनां कुचतटी
गतो यावन्मात! मिलति तव तोयैर्मृगमदः ।

मृगास्तावद्वैमानिकशतसहस्रैःपरिवृता
विशन्ति स्वच्छन्दं विमलवपुषो नन्दनवनम्॥ ७ ॥
स्मृतं सद्यः स्वान्तं विरचयति शान्तं सकृदपि
प्रगीतं यत्पापं झटिति भवतापञ्च हरति।
इदं तद्गङ्गेति श्रवणरमणीयं खलु पदं
मम प्राणप्रान्ते वदनकमलान्तर्विलसतु॥ ८॥
यदन्तः खेलन्तः खलु बहुल सन्तोषभरिता
न काकानाकाधीश्वरनगरसाकाङ्क्षमनसः।
निवासाल्लोकानां जनिमरणशोकापहरणं
तदेतत्ते तीरं श्रमशमनधीरं भवतु नः॥ ९ ॥
नयत् साक्षाद्वेदैरपिगलितभेदैरवसितं
न यस्मिञ्जीवानां प्रसरति मनोवागवसरः।
निराकारं नित्यं निजमहिमनिर्वासिततमो
विशुद्धं यत्तत्त्वं सुरतटिनि तत्त्वं न विषयः॥ १० ॥
महादानैर्ध्यानैर्बहुविधवितानैरपि च यन्
न लभ्यं घोराभिःसुविमलतपोराजिभिरपि।
अचिन्त्यं तद्विष्णोःपदमखिलसाधारणतया
ददाना केनासि त्वमिह तुलनीया कथय? नः॥ ११ ॥
नृणामीक्षामात्रादपि परिहरन्त्या भवभयं
शिवायास्ते मूर्त्तेःक इह बहु मानं कथयतु?।
अमर्षम्लानायाः परममनुरोधं गिरिभुवो
विहाय श्रीकण्ठःशिरसि नियतं धारयति याम्॥१२॥

विनिन्द्यान्युन्मत्तैरपि च परिहार्य्याणि पतितै-
रवाच्यानि व्रात्यैः सपुलकमपास्यानि पिशुनैः ।
हरन्ती लोकानामनवरतमेनांसि कियतां
कदाप्यश्रान्ता त्वं जगति पुनरेका विजयसे ॥ १३ ॥

स्खलन्ती स्वर्ल्लोकादवनितललोकापहृतये
जटाजूटग्रन्थौ यदसि विनिबद्धा पुरभिदा ।
अये निर्लोभानामपि मनसिलोभञ्जनयतां
गुणानामेवायं तव जननि ! दोषः परिणतः ॥ १४ ॥

जडानन्धान् पङ्गून् प्रकृतिबधिरानुक्तिविकलान्
ग्रहग्रस्तानस्ताखिलदुरितनिस्तारसरणान् ।
निलिम्पैर्निर्मुक्तानपि च निरयान्तर्निपतितान्
नरानम्ब ! त्रातुं त्वमिह परमं भेषजमसि ॥ १५ ॥

स्वभावस्वच्छानां सहजशिशिराणामयमपाम्
अपारस्ते मात ! जगति महिमा कोऽपि जयति ।
मुदा यं गायन्ति द्युतलमनवद्यद्युतिभृतः
समासाद्याद्यापि स्फुटपुलकसान्द्राः सगरजाः ॥ १६ ॥

कृतात् क्षुद्रात्पापाज्झटिति निःसन्तप्तमनसः
समुद्धर्तुं सन्ति त्रिभुवनतले तीर्थनिवहाः ।
अपि प्रायश्चित्तप्रसरणपथातीतचरिता-
न्नरानूरीकर्तुं त्वमिव जननि ! त्वं विजयसे ॥ १७ ॥

निधानन्धर्म्माणां किमपि च विधानं नवमुदां
प्रधानं तीर्थानाममलपरिधानं त्रिजगतः ।

समाधानं बुद्धेरथ खलु तिरोधानमधियां
श्रियामाधानं नः परिहरतु तापस्तव वपुः ॥ १८ ॥
पुरो धावं धावं द्रविणमदिराघूर्णितदृशां
महीपानां नानातरुणतरखेदस्य नियताम्।
ममैवायं मन्तुः स्वहितशतहन्तुर्जडधियो
वियोगस्ते मातः! यदिह करुणातः क्षणमपि ॥ १९ ॥
मरुल्लीलालोलल्लहरिलुलिताम्भोजपटल-
स्खलत्पांशुव्रातच्छुरणविसरत्कौङ्कुमरुचि।
सुरस्त्रीवक्षोजक्षरदगुरुजम्बालजटिलं
जलं ते जम्बालं मम जननजालं रमयतु ॥ २० ॥
समुत्पत्तिः पद्मारमणपदपद्मामलनखा
न्निवासः कन्दर्पप्रतिभटजटाजूटभवने।
अथायं व्यासङ्गो हतपतितविस्तारणविधे
र्न कस्मादुत्कर्षस्तव जननि! जागर्त्ति जगतः ॥ २१ ॥
न येभ्यो यान्तीनां कथय तटिनीनां कतमया
पुराणां संहर्तुः सुरधुनि! कपर्दोऽधिरुरुहे।
कया वा श्रीभर्त्तुः पदकमलमक्षालि सलिलै
स्तुलालेशो यस्यां तव जननि! दीयेत कविभिः ॥ २२ ॥
विधत्तां निःशङ्कन्निरवधिसमाधिं विधिरहो
सुखं शेषे शेतां हरिरविरतं नृत्यति हरः।
कृतैः प्रायश्चित्तैरलमथ तपोदानयजनैः
सवित्री कामानां यदि जगति जागर्त्ति भवती ॥ २३ ॥

अनाधिःसौहार्दं विगलितगतिः पुण्यगतिदां,
पतन्विश्वोद्धर्त्रीं, गदविदलितः सिद्धभिषजम् ।
सुधासिन्धुं तृष्णाकुलितहृदयो मातरमयं
शिशुःसंप्राप्तस्त्वामहमिह निदध्यासमुचितम् ॥ २४ ॥
विलीनोऽयं वैवस्वतनगरकोलाहलभयो
गता दूता दूरं क्वचिदपि परेतान्मृगयितुम् ।
विमानानां व्रातोविदलयति वीथीर्दिविषदां
कथा ते कल्याणीयदवधि महीमण्डलमगात् ॥ २५ ॥
स्फुरत् कामक्रोधप्रबलरससञ्जातजटिल-
ज्वरज्वालाजालज्वलितवपुषां नः प्रतिदिनम् ।
हरन्तां सन्तापं कमपि मरुदुल्लासिलहरी
छटाचञ्चत्पाथः कणसरणयो दिव्यसरितः ॥ २६ ॥
इदं हि ब्रह्माण्डं सकलभवनाभोगभवनं
तरङ्गैर्यस्यान्तर्लुठति परितस्तिन्दुकमिव ।
सएष श्रीकण्ठप्रविततजटाजूटजड़ितो
जलानां सङ्घातस्तव जननि ! तापं हरतु नः ॥ २७ ॥
त्रयन्ते तीर्थानि त्वरितमिह यस्योद्धतिविधौ
करं कर्णे कुर्वन्त्यपि किल कपालिप्रभृतयः ।
इमं तं मामम्ब ! त्वमियमनुकम्पार्द्रहृदया
पुनाना सर्वेषामघमथनदर्पन्दलयसि ॥ २८ ॥
श्वपाकानां व्रातैरमितविचिकित्साविगलितै
र्विमुक्तानामेके किल सदनमेनःपरिषदाम् ।

अहोमामुद्धर्तुं जननि! घटयन्त्या परिकरं
तव श्लाघाङ्कर्तुं कथमिव समर्थो नरपशुः ॥ २९ ॥
न कोऽप्येतावन्तं खलु समयमारभ्य मिलितो
यदुद्धारादाराद्भवति जगतो विस्मयभरः ।
इतीमामीहान्ते मनसि चिरकालं स्थितवती
मयं सम्प्राप्तोऽहं सफलयितुमम्ब प्रणयतः ॥ ३० ॥
श्ववृत्तिव्यासङ्गो नियतमथ मिथ्याप्रलपनं
कुतर्केष्वभ्यासः सततपरपैशुन्यमननम् ।
अपि श्रावंश्रावं मम तु पुनरेवंविधगुणा-
नृतेऽन्यत् कोनाम क्षणमपि निरीक्षेत वदनम् ॥ ३१ ॥
विशालाभ्यामाभ्यां किमिह नयनाभ्यां खल फलम्
नयाभ्यामालीढा परमरमणीया तव तनुः ।
अयं हि न्यक्कारो जननि! मनुजस्य श्रवणयो
र्ययोर्नान्तर्यातस्तव लहरिलीलाकलकलः ॥ ३२ ॥
विमानैःस्वच्छन्दं सुरपुरमयन्ते सुकृतिनः
पतन्ति द्राक् पापाजननि! नरकान्तःपरवशाः ।
विभागोऽयं तस्मिन्नुभयमथ मूर्त्तौ जनपदे
न यत्र त्वं लीलाशमितमनुजाशेषकलुषाः ॥ ३३ ॥
अपि घ्नन्तोविप्रानविरतमुषन्तोगुरुसतीः
पिबन्तो मैरेयं पुनरपहरन्तश्च कनकम् ।
विहाय त्वय्यन्ते तनुमतनुदानाध्वरजषा
मुपर्य्यं विक्रीडन्त्यखिलसुरसम्भावितपदाः ॥ ३४ ॥

अलभ्यं सौरभ्यं हरति सततं यः सुमनसां
क्षणादेव प्राणानपि विरहशस्त्रक्षतभृताम्।
त्वदीयानां लीलाचलितलहरीणां व्यतिकरा
त्पुनीते सोऽपि द्रागहह! पवमानस्त्रिभुवनम्॥ २५॥
कियन्तःसन्त्येके नियतमिह लोकार्थघटकाः
परे पूतात्मानःकति न परलोकप्रणयिनः।
सुखं शेतेमातः! तव खलु कृपातःपुनरयं
जगन्नाथः शश्वत्त्वयि विहितलोकद्वयभरः॥ २६॥
भवत्या हि व्रात्याधमपतित पाषण्डपरिषत्-
परित्राणस्नेहःश्लथयितुमशक्यः खलु यथा।
ममाप्येवं प्रेम्णा दुरितनिवहेष्वम्ब जगति
स्वभावोऽयं सर्वैरपि खलु यतोदुष्परिहरः॥ २७॥
प्रदोषान्ते नृत्यत्पुरमथनलीलोद्धृतजटा
तटाभोगप्रेङ्खल्लहरिभुजसन्तानविधुतिः।
गलत्क्रोडक्रीडज्जलडमरुढाङ्कारसुभग
स्तिरोधत्तां तापं त्रिदशतटिनीताण्डवविधिम्॥ २८॥
सदैव त्वय्येवार्पितकुशलचिन्ताभरमिमं
यदि त्वं मामम्ब त्यजसि समयेऽस्मिन्नविषये।
तदाविश्वासोऽयं त्रिभुवनतलादस्तमयते
निराधारा चेयं भवति खलु निर्व्याजकरुणा॥ २९॥
कपर्दीदुल्लस्य प्रणयमिलदर्धाङ्गयुवतेः
पुरारेःप्रेङ्खन्त्यो मृदुलतरसीमन्तसरणौ।

भवान्यासापन्नास्फुरितनयनं कोमलरुचा
करेणोत्क्षिप्तास्ते जननि! विजयन्तां लहरयः ॥ ४० ॥

प्रपद्यन्ते लोकाः कति न भवतीमत्रभवती-
मुपाधिस्तत्रायं स्फुरति यदभीष्टं वितरसि।
अये! तुभ्यंमात! मम तु पुनरात्मा सुरधुनि!
स्वभावादेवत्वय्यमितमनुरागं विधृतवान् ॥ ४१ ॥

ललाटे यालोकैरिह खलु सलीलं तिलकिता
तमो हन्तुं धत्ते तरुणतरमार्तण्डतुलनाम्।
विलुम्पन्ती सद्योविधिलिखितदुर्वर्णसरणिं
तदीया सा मृत्स्ना मम हरतु कृत्स्नामपि शुचम् ॥४२॥

नरान्मूढांस्तत्तज्जनपदसमासक्तमनसो
हसन्तःसोल्लासं विकचकुसुमव्रातमिषतः।
पुनाना सौरभ्यैः सततमलिनोऽनित्यमलिनान्
सखायो नः सन्तु त्रिदशतटिनीतीरतरवः ॥ ४३ ॥

यजन्त्येके देवान् कठिनतरसेवांस्तदपरे
वितानव्यासक्ता यमनियमरक्ताःकतिपये।
अहन्तु त्वन्नामस्मरणभृतकामस्त्रिपथगे
जगज्जालं जाने जननि! तृणजालेन सदृशम् ॥ ४४ ॥

अविश्रान्तंजन्मावधिसुकृतकर्मार्जनकृतां
सतां श्रेयःकर्तुं कति न कृतिनः सन्ति विबुधाः।
निरस्तालम्बानामकृतसुकृतानान्तु भवती
विनामुष्मिंल्लोके न परमवलोके हितकरः ॥ ४५ ॥

पयः पीत्वा मातः ! स्तवसपदि यातःसहचरै
र्विमूढैः संरन्तुं क्वचिदपि न विश्रान्तिमगमत् ।
इदानीमुत्सङ्गे मृदुपवनसञ्चारशिशिरे
चिरादुन्निद्रं मां सदयहृदये स्थापय चिरम् ॥ ४६ ॥
बिधान द्रागेव द्रढिमरमणीयं परिकरं
किरीटे वालेन्दुं नियमय पुनःपन्नगगणैः ।
न कुर्य्यास्त्वहेलामितरजनसाधारणधिया
जगन्नाथस्यायं सुरधुनि ! समुद्धारसमयः ॥ ४७ ॥
शरच्चन्द्रश्वेतां शशिशकलशोभालमुकुटां
करैःकुम्भाम्भोजे वरभयनिरासौ विदधतीम ।
सुधासाराकाराभरणवसनां शुभ्रमकर
स्थितां त्वां ध्यायन्त्युदयति न तेषां परिभवः ॥ ४८ ॥
दरस्मितसमुल्लसद्दनकान्तिपूरामृतै
र्भवज्वलनभर्जितानविशमूर्च्छयन्ती नरान् ।
विवेकमयचन्द्रिकाचयचमत्कृतिं तन्वती
धुनोतु तमसन्ततोः सपदि सन्ततोरङ्गना ॥ ४९ ॥
मन्त्रैर्मीलितमौषधैर्मुकुलितं त्रस्तं सुराणां गणैः
स्रस्तं सान्द्रसुधारसै र्विदलितं गारुत्मतैर्ग्रावभिः ।
वीचिक्षालितकालिमाहितपदे स्वर्लोककल्लोलिनि
त्वं तापं निरयाधुना ममभवव्यालावलीढात्मनः ॥ ५० ॥
च्युते नागेन्द्रकृत्तिंप्रमथगणफणिश्रेणिनन्दीन्दुमुख्यं
सर्वस्वं हारयित्वा त्वमथ पुरभिदि द्राक् पणीकर्तुकामे ।

साकूतं हैमवत्या मृदुलहसितया वीक्षितायास्तवाम्ब !
व्यालोलल्लासितवल्गल्लहरिनवघटाताण्डवं नः पुनातु ॥५१॥
विभूषिता नागरिपूत्तमाङ्गा सद्यःकृतानेकजनार्त्तिभङ्गा।
मनोहरोत्तुङ्गचलत्तरङ्गा गङ्गा ममाङ्गान्यमलीकरोतु ॥५२॥
इमां पीयूषलहरीं जगन्नाथेन निर्मिताम्
यः पठेत्तस्य सर्वत्र जायन्ते जयसम्पदः ॥ ५३ ॥

इति श्रीपण्डितराजाभिध श्रीजगन्नाथकविरचितो
गङ्गालहरीस्तवराजः सम्पूर्णः।

---

# श्रुतबोधः।

---

छन्दसां लक्षणं येन श्रुतमात्रेण बुध्यते।
तमहं सम्प्रवक्ष्यामि श्रुतबोधमविस्तरम् ॥ १ ॥
संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसंमिश्रम्।
विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन ॥ २ ॥
एकमात्रो भवेद् ह्रस्वो द्विमात्रो दीर्घ उच्यते।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रकम् ॥ ३ ॥
यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्या ॥ ४ ॥
आर्य्यापूर्वार्द्धसमं द्वितीयमपि भवति यत्र हंसगते।
छन्दोविदस्तदानीं गीतिंताममृतवाणि ! भाषन्ते ॥५ ॥

आर्य्यापरार्द्धतुल्यं प्रथमार्द्धमपि प्रयुक्तं चेत् ।
कामिनि तामुपगीतिं प्रतिभाषन्ते महाकवयः ॥ ६ ॥

आद्यचतुर्थं पञ्चमकं चेत् ।
यत्र गुरु स्यात् सा धरपङ्क्तिः ॥ ७ ॥
अगुरु चतुष्कं भवति गुरू द्वौ ।
घनकुचयुग्मे ! शशिवदनासौ ॥ ८ ॥

तुर्यं पञ्चमकं चेद् यत्र स्याल्लघु बाले ।
विद्वद्भिर्मृगनेत्रे प्रोक्ता सा मदलेखा ॥ ९ ॥
श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् ।
द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥ १० ॥
आदिगतं तुर्यगतं पञ्चमकं चान्त्यगतम् ।
स्यात् गुरु चेत् संकथितं माणवकाक्रीडमिदम् ॥ ११ ॥
द्वितुर्य्यषष्ठमष्टमं गुरु प्रयोजितं यदा ।
तदा निवेदयन्ति तां बुधा नगस्वरूपिणीम् ॥ १२ ॥
सर्वे वर्णा दीर्घा यस्यां विश्रामः स्याद्वेदै र्वेदैः ।
विद्वद्वृन्दै र्वीणावाणि ! व्याख्याता सा विद्युन्माला ॥ १३ ॥
तन्वि ! गुरु स्यादाद्यचतुर्थं पञ्चमषष्ठं चान्त्यमुपान्त्यम् !
इन्द्रियबाणैः यत्र विरामः सा कथनीया चम्पकमाला ।
चम्पकमाला यत्र भवेद् अन्त्यविहीना प्रेमनिधे !
छन्दसि दक्षा ये कवय स्तन्मणिमध्यं ते ब्रुवते ॥ १५ ॥
मन्दाक्रान्तान्त्ययतिरहिता सालङ्कारे यदि भवति या ।
सा विद्वद्भिर्ध्रुवमभिहिता ज्ञेया हंसी कमलवदने ! ॥ १६ ॥

ह्रस्वो वर्णो जायते यत्र षष्ठः कम्बुग्रीवे तद्वदेवाष्टमान्त्यः
विश्रान्तः स्यात् तन्वि वेदैस्तुरङ्गैः तां भाषन्ते शालिनीं छान्दसीयाः
आद्यचतुर्थमहीननितम्बे सप्तमकं दशमञ्च तथान्त्यं
यत्र गुरु प्रकटस्मरसारे तत् कथितं ननु दोधकवृत्तं १८
यस्यास्त्रिषट्सप्तममक्षरं स्यात् ह्रस्वं सुजंघे नवमञ्च तद्वत्
गत्या विलज्जीकृतहंसकान्ते तामिन्द्रवज्रां ब्रुवते कवीन्द्राः १९
यदीन्द्रवज्राचरणेषु पूर्वे भवन्ति वर्णा लघवः सुवर्ण
अमन्दमाद्यन्मदने तदानीमुपेन्द्रवज्रा कथिता कवीन्द्रैः २०
यत्र द्वयोरप्यनयोस्तु पादा भवन्ति सीमन्तिनि चन्द्रकान्ते
विद्वद्भिराद्यैः परिकीर्तिता सा प्रयुज्यतामित्युपजातिरेषा २१
आख्यानकी सा प्रकटीकृतार्थे यदीन्द्रवज्राचरणः पुरस्तात्
उपेन्द्रवज्राचरणास्त्रयोऽन्ये मनीषिणोक्ता विपरीतपूर्वा २२
आद्यमक्षरमतस्तृतीयकं सप्तमञ्च नवमं तथान्तिमं
दीर्घमिन्दुमुखि यत्र जायते तां वदन्ति कवयो रथोद्धतां २३
अक्षरञ्च नवमं दशमञ्च व्यत्ययाद् भवति यत्र विनीते
प्राक्तनैः सुनयने यदि सैव स्वागतेति कविभिः कथितासौ २४
सतृतीयकषष्ठमनङ्गरते नवमं विरतिप्रभवं गुरु चेत्
घनपीनपयोधरभारनते ननु तोटकवृत्तमिदं कथितं २५
यदि तोटकस्य गुरु पञ्चमकं विहितं विलासिनि तदक्षरकं
रससंख्याकं गुरु न चेदबले प्रमिताक्षरेति कविभिः कथिता २६
यदाद्यं चतुर्थं तथा सप्तमं स्यात्तथैवाक्षरं ह्रस्वमेकादशाद्यं
शरच्चन्द्रविद्वेषिवक्त्रारविन्दे तदुक्तं कवीन्द्रैर्भुजङ्गप्रयातं २७

अयि कृशोदरि यत्र चतुर्थकं गुरु च सप्तमकं दशमं तथा
विरतिगश्च तथैव सुमध्यमे द्रुतविलम्बितमित्युपदिश्यते २८
प्रथमाक्षरमादतृतीययो र्द्रुतविलम्बितकस्य हि पादयोः
यदि नास्ति तदा कमलेक्षणे भवतिसुन्दरि सा हरिणीप्लुता२९
उपेन्द्रवज्राचरणेषु सन्ति चेदुपान्त्यवर्णा लघवः परेकृताः
मदोल्लसद्भ्रूजितकामकार्मुके वदन्ति वंशस्थविलं बुधास्तदा३०
यस्यामशोकांकुरपाणिपल्लवे वंशस्थपादा गुरुपूर्ववर्णकाः
तारुण्यहेलारतिरङ्गलालसे तामिन्द्रवंशां कवयःप्रचक्षते ३१
यस्यां प्रिये प्रथमकमक्षरद्वयं तुर्यं तथा गुरु नवमं दशान्तिमं
सान्त्यं भवेद्यतिरपिचेद्युगग्रहैःसालक्ष्यतामम्तरुतेप्रभावती३२

आद्यं चेत् त्रितयमथाष्टमं नवान्त्यं
द्वावन्तौ गुरुविरतौ सुभाषिते स्यात्
विश्रामो भवति महेशनेत्रदिग्भि
र्विज्ञेया ननु सुदति प्रहर्षिणी सा ३३
आद्यं द्वितीयमपि चेद् गुरु तच्चतुर्थं
यत्राष्टमञ्च दशमान्त्यमुपान्त्यमन्त्यं
अष्टाभिरिन्दुवदने विरतिश्च षड्भिः
कान्ते वसन्ततिलकं किल तं वदन्ति ३४
प्रथममगुरु षट्कं विद्यते यत्र कान्ते
तदनु च दशमं चेदक्षरं द्वादशान्त्यं
गिरिभिरथ तुरङ्गै र्यत्र कान्ते विरामः
सुकविजनमनोज्ञा मालिनी सा प्रसिद्धा ३५

सुभुखि लघवः पञ्च प्राच्यास्ततो दशमान्तिमः
तदनु ललितालापे वर्णौ तृतीयचतुर्थकौ
प्रभवति पुनर्यत्रोपान्त्यः स्फुरत्कनकप्रभे
यतिरपि रसैर्वेदैरश्वैः स्मृता हरिणीति सा ३६
यदि प्राच्यो ह्रस्वः कलितकमले पञ्च गुरवः
ततो वर्णाः पञ्च प्रकृतिसुकुमाराङ्गि लघवः
त्रयोऽन्ये चोपान्त्याः सुतनुजघने भोगसुभगे
रसैरुद्रैर्यस्यां भवति विरतिः सा शिखरिणी ३७
द्वितीयमलिकुन्तले गुरु षडष्टमद्वादशं
चतुर्दशमथ प्रिये गुरु गभीरनाभीह्रदे
सपञ्चदशमान्तिमं तदनु यत्र कान्ते यतिः
गिरीन्द्रफणभृत्कुलैर्भवति सुभ्रु पृथ्वीति सा ३८
चत्वारः प्राक् सुतनु गुरवो द्वौ दशैकादशौ चेन्
मुग्धे वर्णौ तदनु कुमुदामोदिनि द्वादशान्त्यौ
तद्वच्चान्त्यौ युगरसहयैर्यत्र कान्ते विरामो
मन्दाक्रान्तां प्रवरकवयस्तन्वि तां सङ्गिरन्ते ३९
आद्यं यत्र गुरुत्रयं प्रियतमे षष्ठं ततश्चाष्टमं
तस्मादेकादशतस्त्रयस्तदनु चेदष्टादशाद्यान्तिमाः
मार्तण्डैर्मुनिभिश्च यत्र विरतिः पूर्णेन्दुबिम्बानने
तद्वृत्तं प्रवदन्ति काव्यरसिकाः शार्दूलविक्रीडितं ४०
चत्वारो यत्र वर्णाः प्रथममलघवः षष्ठकः सप्तमोऽपि
द्वौ तद्वत् षोडशाद्यौ मृगमदतिलके षोडशान्त्यौ तथान्त्यौ

रम्भास्तम्भोरुकान्ते मुनिमुनिमुनिभि र्दृश्यते चेद्विरामो
बाले वर्ण्यैः कवीन्द्रैः सुतनु निगदिता स्रग्धरा सा प्रसिद्धा ४१

इति श्रीकालिदासविरचितः श्रुतबोधः सम्पूर्णः ॥

## आर्य्यासप्तशती ।

———:-०-:———

पाणिग्रहे पुलकितं वपुरैशं भूतिभूषितं जयति ।
अङ्कुरितइव मनोभूर्यस्मिन् भस्मावशेषोऽपि ॥ १
मा वम संवृणु विषमिदमिति सातङ्कं पितामहेनोक्तः ।
प्रातर्जयति सलज्जः कज्जलमलिनाधरः शम्भुः ॥ २
जयति प्रियापदान्ते गरलग्रैवेयकः स्मराराति: ।
विषमविशिखे विशन्निव शरणं गलबद्धकरवालः ॥ ३
जयति ललाटकटाक्षः शशिमौलिः पक्ष्मलः प्रियाप्रणतौ ।
धनुषि स्मरेण निहितः सकण्टकः केतकेषुरिव ॥ ४
जयति जटाकिञ्जल्कं गङ्गामधु, मुण्डवलयवीजमयं ।
गलगरलपङ्कसम्भव मम्भोरुहमाननं शम्भोः ॥ ५
सन्ध्यासलिलाञ्जलिमपि कङ्कणफणिपीयमानमविजानन् ।
गौरीमुखार्पितमना विजयाहसितः शिवो जयति ॥ ६
प्रतिबिम्बितगौरीमुखविलोकनोत्कम्पशिथिलकरगलितः ।
स्वेदभरपूर्य्यमाणः शम्भोः सलिलाञ्जलि र्जयति ॥ ७

प्रणयकुपितप्रियापदलाक्षासन्ध्यानुबन्धमधुरेन्दुः ।
तद्वलयकनकनिकषग्रावग्रीवः शिवो जयति ॥ ८

पूर्णनखेन्दुद्विगुणितमञ्जीरा प्रेमशृङ्खला जयति ।
हरशशिलेखा गौरीचरणाङ्गुलिमध्यगुल्फेषु ॥ ९

श्रीकरपिहितं चक्षुः सुखयतु नः पुण्डरीकनयनस्य ।
जघनमिवेक्षितुमागतमञ्जनिभं नाभिसुषिरेण ॥ १०

श्यामं श्रीकुचकुङ्कुममञ्जरितमुरो मुरद्विषो जयति ।
दिनमुखनभ इव कौस्तुभविभाकरो यद्विभूषयति ॥ ११

प्रतिबिम्बितप्रियातनु सकौस्तुभं जयति मुरभिदो वक्षः ।
पुरुषायितमभ्यस्यति लक्ष्मीर्यद्वीक्ष्य मुकुरमिव ॥ १२

केलिचलाङ्गुलिसञ्चितलक्ष्मीनाभिर्मुरद्विषश्चरणः ।
स जयति येन कृता श्रीरनुरूपा पद्मनाभस्य ॥ १३

रोमावली मुरारेः श्रीवत्सनिषेविताग्रभागा वः ।
उन्नालनाभिनलिनच्छायेवोत्तापमपहरतु ॥ १४

आदाय सप्ततन्त्रीचितां विपञ्चीमिव त्रयीं गायन् ।
मधुरं तुरङ्गवदनोचितं, हरिर्जयति हयमूर्द्धा ॥ १५

स जयति महावराहो जलनिधिजठरे चिरं निमग्नापि ।
येनान्त्रैरिव सह फणिगणैर्बलादुद्धृता धरणी ॥ १६

ब्रह्माण्डकुम्भकारं भुजगाकारं जनार्द्दनं स्तौमि ।
स्फारे यत्फणचक्रे धरा, शरावश्रियं वहति ॥ १७

चण्डीजङ्घाकाण्डः शिरसा चरणस्पृशि प्रिये जयति ।
शङ्करपर्यन्तजितो वीरस्तम्भः स्मरस्येव ॥ १८

उद्दालनाभिपङ्केरुह इव येनावभाति शम्भुरपि।
जयति पुरुषायितायास्तदाननं शैलकन्यायाः॥ १९

अङ्कनिलीनगजाननशङ्काकुलबाहुलेयहृतवसनौ।
सस्मितहरकरकलितौ हिमगिरितनयास्तनौ जयतः॥ २०

कण्ठोचितोपि हुङ्कृतिमात्रनिरस्तः पदान्तिके पतितः।
यस्याश्चन्द्रशिखः स्मरभल्लनिभो जयति सा चण्डी॥ २१

देवेऽर्पितवरणस्रजि बहुमाये वहति कैटभीरूपं।
जयति सुरासुरहसिता लज्जाजिह्मेक्षणा लक्ष्मीः॥ २२

तानसुरानपि हरिमपि तं वन्दे कपटकैटभीरूपं।
यै र्यद्बिम्बाधररसलुब्धैः पीयूषमपि मुमुचे॥ २३

तल्पीकृताहिरगणितगरुडो हाराभिहतविधि र्जयति।
फणशतपीतश्वासो रागान्धायाः श्रियः केलिः॥ २४

स्मेराननेन हरिणा सस्पृहमाकारवेदिना कलितं।
जयति पुरुषायितायाः कमलायाः कैटभीध्यानं॥ २५

कृतकान्तकेलिकुतुकश्रीशीतश्वाससेकनिद्राणः।
घोरितविततालिरुतो नाभिसरोजे विधि र्जयति॥ २६

एकरद, द्वैमातुर, निस्त्रिगुण, चतुर्भुजापि पञ्चकर।
जय वरानतमुख सप्तच्छदगन्धिमदाष्टतनूतनय॥ २७

मङ्गलकलशद्वयमयकुम्भमदम्भेन भजत गजवदनं।
यद्दानतोयतरलैस्तिलतुलनालम्बि रोलम्बैः॥ २८

याभिरनङ्गः साङ्गीकृतः स्त्रियोऽस्त्रीकृताश्च येन।
वाम्याचारप्रवणौ प्रणमत तौ कामिनीकामौ॥ २९

विहितघनालङ्कारम् विचित्रवर्णावलीमयस्फुरणम् ।
शक्रायुधमिव वक्रम् वल्मीकभुवं मुनिं नौमि ॥ ३०
व्यासगिरां निर्यासं सारं विश्वस्य भारतं वन्दे ।
भूषणतयैव संज्ञां यदाङ्कितां भारती वहती ॥ ३१
श्रीरामायणभारतबृहत्कथानां कवीन् नमस्कुर्म्मः ।
त्रिस्रोता इव सरसा सरस्वती स्फुरति यै र्भिन्ना ॥ ३२
सति काकुत्स्थकुलोन्नतिकारिणि रामायणे किमन्यकाव्येन ।
रोहति कुल्या गङ्गापूरे किं बहुरसे वसति ॥ ३३
अतिदीर्घजीविदोषाद् व्यासेन यशोऽपहारितं हन्त ।
कै र्नोच्येत गुणाढ्यः स एव जन्मान्तरापन्नः ॥ ३४
साकूतमधुरकोमलविलासिनीकण्ठकूजितप्राये ।
शिक्षासमयेऽपि मुदे रतलीलाकालिदासोक्ती ॥ ३५
भवभूतेः सम्बन्धाद् भूधरभूरेव भारती भाति ।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ॥ ३६
जाता शिखण्डिनी प्राग् यथा शिखण्डी तथावगच्छामि ।
प्रागल्भ्यमधिकमाप्तुम् वाणी वाणो बभूवेति ॥ ३७
यं गणयन्ति गुरोरनु यस्यास्तिऽधर्म्मकर्म्म सङ्कुचितं ।
कविमहमुशनसमिव तं तातं नीलाम्बरं वन्दे ॥ ३८
सकलकलाः कल्पयितुम् प्रभुः प्रबन्धस्य कुमुदबन्धोश्च ।
सेनकुलतिलकभूपति रेको राकाप्रदोषश्च ॥ ३९
काव्यस्याचरमैत्रीभाजो नच कर्कशा नच ग्राम्याः ।
शब्दा अपि सत्पुरुषा अपि साधव एवार्थबोधाय ॥ ४०

वंशे घुण इव न विशति दोषो रसभाविते सतां मनसि ।
रसमपि तु न प्रतीच्छति बहुदोषः सन्निपातीव ॥ ४१

विगुणोऽपि काव्यबन्धः साधूनामाननं गतः स्वदते ।
फुत्कारोऽपि सुवंशे गुंदाऽमानः श्रुतिं हरति ॥ ४२

स्वयमपि भूरिच्छिद्रश्चापलमपि सर्वतोमुखं तन्वन् ।
विततस्कषस्य पिशुनो दोषस्य विवेचने ऽधिकृतः ॥ ४३

अन्तर्गूढानर्थान् व्यञ्जयतः प्रसादरहितस्य ।
सन्दर्भस्य नदस्य च न रसः प्रीत्यै रसज्ञानाम् ॥ ४४

यद्सेवनीयमसतामस्तप्रायं सुवर्णविन्यासं ।
सुरसार्थमयं काव्यं त्रिविष्टपं वा समं विद्मः ॥ ४५

सत्कविरसनाशूर्पीनिष्कषतरशब्दशालिपाकेन ।
तृप्तो दयिताधरमपि नाद्रियते का सुधा दासी ॥ ४६

अकलितशब्दालङ्कृतिरनुकूला स्खलितपदनिवेशापि ।
अभिसारिकेव रमयति सूक्तिः सोत्कर्षशृङ्गारा ॥ ४७

अध्वनि पदग्रहपरं मदयति हृदयं नवा नवा श्रवणं ।
काव्यमभिज्ञसभार्या मञ्जीरं केलिवेलायाम् ॥ ४८

आस्वादितदयिताधररसस्यैव सूक्तयो मधुराः ।
अकलितरसालमुकुलो न कोकिलः कलमुदं चयति ॥ ४९

बालाकटाक्षसूत्रित मसतीनेत्रत्रिभागकृतभाष्यम् ।
कविमाणवको दूतीव्याख्यातमधीयते भावम् ॥ ५०

मसृणपदरीतिगीताः सज्जनहृदयाभिसारिकाः सुरसाः ।
मदनाद्वयोपनिषदो विशदा गोवर्द्धनस्यार्याः ॥ ५१

वाणी प्राकृतसमुचितरसा बलेनैव संस्कृतं नीता।
निम्नानुरूपनीरा कलिन्दकन्येव गगनतलं॥ ५२

आर्य्या सप्तशतीयं प्रगल्भमनसामनादृता येषाम्।
दूतीरहिता इव ते न कामिनीमनसि निविशन्ते॥ ५३

रतरीतिवीतरसना प्रियेव शुद्धापिवा मुदे सरसा।
अरसा सालङ्कृतिरपि न रोचते शालभञ्जीव॥ ५४

अवधिदिनावधिजीवाः प्रसीद जीवन्तु पथिकजनजायाः।
दुर्लङ्घ्यवर्त्मशैलौ स्तनौ पिधेहि प्रियापालि॥ ५५

अतिवत्सला सुशीला सेवाचतुरा मनोनुकूला च।
अजनि विनीता गृहिणी सपदि सपत्नीस्तनोद्भेदे॥ ५६

अयि कुलनिचुलमूलोच्छेदनदुःशीलवीचिवाचाले।
बकविघस पङ्कसारा न चिरात् कावेरि भवितासि॥ ५७

अयि विविधवचनरसने ददासि चन्द्रं करे समानीय।
व्यसनदिवसेषु दूति क्व पुनस्त्वं दर्शनीयासि॥ ५८

अस्तम्लानिर्लोको लाञ्छनमुपदिशतु हीयतामोजः।
तदपि न मुञ्चति स त्वां वसुधाच्छायामिव सुधांशुः॥ ५९

अतिचापलं वितन्वन् अन्तर्निविशन् निकामकाठिनरः।
मुखरयसि स्वयमेतां सद्वृत्तां शङ्कुरिव घण्ठाम्॥ ६०

अङ्गेषु जीर्य्यति परं खञ्जनयूनो मनोभवप्रसरः।
न पुनरनम्तर्गमितनिधिनि धरामण्डले केलिः॥ ६१

अन्धत्वमन्धसमये वधिरत्वं वधिरकाल आलम्ब्य।
श्रीकेशवयोः प्रणयी प्रजापति नाभिवास्तव्यः॥ ६२

अयि कोशकार कुरुषे वनेचराणाम् पुरो गुणोद्गारम् ।
यन्नविचार्य विदारितजठरस्त्वं स खलु ते लाभः ॥ ६३

अगणितमहिमा लङ्घितगुरुरधनेहः स्तनन्धयविरोधी ।
दृष्टाकीर्त्तिस्तस्या स्त्वयि रागः प्राणनिरपेक्षः ॥ ६४

अपराधादधिकं मां, व्यथयति तव, कपटवचनरचनेयम् ।
शस्त्राघातो न तथा सूचीव्यधवेदना यादृक् ॥ ६५

असतीलोचनमुकुरे किमपि प्रतिफलति यन्मनोवर्त्ति ।
सारस्वतमपि चक्षुः सतिमिरमिव तत्र लक्षयति ॥ ६६

अन्यमुखे दुर्व्वादो यः प्रियमुखे स एव हि परिहासः ।
इतरेन्धनजन्मा यो धूमः सोऽगुरुसम्भवो धूपः ॥ ६७

अयि सुभग कुतुकतरला विचरन्ती सौरभानुसारेण ।
त्वयि मोहाय वराकी पतिता मधुपीव विषकुसुमे ॥ ६८

अयि मुग्धगन्धसिन्धुरशङ्कामात्रेण दन्तिनो दलिताः ।
उपभुञ्जते करटयून् केवलमिह मत्कुणाः करिणः । ६९

अतिविनयवामनतनु विलङ्घते गेहदेहलीं न वधूः ।
अस्याः पुनरारभटीं कुसुमवाटी विजानाति ॥ ७०

अ.गते गुणैः किं छिन्ना अपि यत्र साक्षिणो विरलाः ।
सगुणो गीते यदसौ वनेचरं हरिणमपि हरति ॥ ७१

अललितसकलविभूषाम् प्रातर्बालां विलोक्य मुदिताभिः ।
प्रियशिरसि वीक्ष्य यावकमथ निश्वसितं सपत्नीभिः ॥ ७२

अयि लज्जावति, निशीथरतनिःसहाङ्गि, सुखसुप्ते ।
लोचनकोकनदच्छदमुन्मीलय सुप्रभातं ते ॥ ७३

अमिलितवदनमपीड़ितवक्षोरुहमतिविधुरजघनोरु।
शपथशतेन भुजाभ्यां केवलमालिङ्गितोऽस्मि तया॥ ७४

अतिपूजिततारेयं दृष्टिः श्रुतिलङ्घनक्षमा सुतनु।
जिनसिद्धान्तस्थितिरिव सवासना कं न मोहयति॥ ७५

अलमविषयभयलज्जा वञ्चितमात्मानमियमियत्समयम्।
नवपरिचितदयितगुणा शोचति नालपति शयनसखीः॥ ७६

अनुरागवर्त्तिनी तव विरहेणोग्रेण सा गृहीताङ्गी।
त्रिपुररिपुणेव गौरीवरतनुरर्द्धावशिष्टैव॥ ७७

अन्यप्रवणे प्रेयसि विपरीते स्रोतसीव विहिताश्थाः।
तद्गतिमिच्छन्त्यः सखि भवन्ति विफलश्रमा हास्याः॥ ७८

अधिकः सर्व्वेभ्यो यः प्रियः प्रियेभ्यो हृदि स्थितः सततम्।
स लुठति विरहे जीवः कण्ठे हस्यास्त्विमिव सम्भोगे॥ ७९

अनयनपथे प्रिये न तु वाधा यथा दृश्य एव दुष्प्रापे।
म्लानैव केवलं निशि तपनशिला वासरे ज्वलति॥ ८०

अजनितप्रेमैव वरम् न पुनः सञ्जातविघटितप्रेम।
उत्पाटितनयन स्ताम्यति यथा न तथा जातान्धः॥ ८१

अविभागवेशा मिलितेऽपि स्थितिमात्रेणैव नन्दयन् दयितः।
रहसि वावदेशादय मर्थ इवाराजके भोगः॥ ८२

अशेषोरपराधान् तथ्यमिदं कथय मम्मुखं वीक्ष्य।
अभिधीयते न किं यदि न मानचौराननः कितवः॥ ८३

अनेकानाम मनुश्रोतसमवादथान्यत्तटात्तटं भजतोः।
उदितेऽर्केऽपि तन्माघस्नानं प्रसमाप्यते यूनोः॥ ८४

अयि चूतश्रीफलभरनताङ्गि विषम्बिकाग्निसौरभेर ।
श्वपचघटखर्पराङ्गा त्वं किल फलितापि विफलैव ॥ ८५
अञ्जलिरकारि लोकै र्ग्लानिमवाप्यैव रञ्जिता जगती ।
सन्ध्यायाइव वसतिः स्वल्पापि सखे सुखायैव ॥ ८६
अगृहीतानुनयां मामुपेच्य सख्या गता वतैकाहम् ।
प्रसभं करोषि मयि च त्वदुपरि वपुरद्य मोचयामि ॥ ८७
अस्थिररागः कितवः मानी चपलो विदूषक स्त्वमसि ।
मम सख्याः पतसि करे पश्यामि यथा ऋजु र्भवसि ॥ ८८
अकरुण कातरमनसो दर्शितनीरा निरन्तरालेयं ।
त्वामनुधावति विमुखं गङ्गेव भगीरथं दृष्टिः ॥ ८९
अन्तःकलुषस्तम्भितरसया भृङ्गारनालयेव मम ।
अपुरम्मुखस्य विहिता वरवर्णिनि न त्वया तृप्तिः ॥ ९०
अयि सरले सरलतरो मंदमुदितद्विपकपोलपालेषु ।
अनेयानयमुग्धगन्धः वयतिहारः कषणमाचष्टे ॥ ९१
अस्याः कररुहखण्डितकाण्डपटप्रकटनिर्गता दृष्टिः ।
पटविगलितनिष्कलुषा स्वदते पीयूषधारेव ॥ ९२
अस्याः पतिगृहगमने करोति माता ऽश्रुपिच्छिलां पदवीम् ।
मुग्धगर्विता पुनरसौ हसति शनैः शुष्करुदितमुखी ॥ ९३
अङ्के निवेश्य कूणितदृशःशनैरकरुणोति यंसन्त्याः ।
मोक्ष्यामि वेणीवन्धं कदा नखै र्गन्धतैलाक्तैः ॥ ९४
अलमनलङ्कृतिसुभगे भूषणमुपहासविषयमितरासाम् ।
कुरुषे वनस्पतिलताप्रसूनमिव वन्ध्यवल्लीनाम् ॥ ९५

अबुधा अजङ्गमा अपि कयापि गत्या परं पदङ्गामाः ।
मञ्जिष्ठति कीर्त्त्यन्ते नयबलगुलिका इव जनेन ॥ ९६

अतिशीतशीतलतया लोकेषु सखी मृदुप्रतापा नः ।
चयवामग्रदह्यमानः प्रतापमस्याः प्रियो वेद ॥ ९७

अन्यास्वपि गृह्णीति ध्यायन्नभिलषितमाप्नोति ।
पश्यन् पाषाणमयीः प्रतिमाइव देवतात्वेन ॥ ९८

अनुपेत्य नीचभावं बालक परितोगभीरमधुरस्य ।
अस्याः प्रेम्णः पात्रं न भवति सरितो रसस्येव ॥ ९९

अधिवासनमाधेयं गुणमार्गमपेक्षते न च ग्रथनां ।
कलयति युवजनमौलिं केतककलिकास्वरूपेण ॥ १००

अपनीतनिखिलतापां सुभग स्वकरेण विनिक्षितां भवता ।
पतिशयनवारपालिं ज्वरौषधिं वहति सा मालां ॥ १०१

अगणितगुणेन सुन्दर कृत्वा चारित्रमपुण्यदासीनम् ।
भवताऽनन्यगतिः सा विहितावर्त्तेन तरणिरिव ॥ १०२

अनुरक्तरामया पुनरागतये स्थापितोत्तरीयस्य ।
अपेक्षवासस स्तव सर्वयुवभ्योऽधिका शोभा ॥ १०३

अर्धः शाणितारकी स्रुत इतरो मे विधुन्तुदस्येव ।
बुधयैव प्रियायाः पथि सङ्गतयालिङ्गिताधस्य ॥ १०४

अवधीरितोऽपि निद्राभिषेण माहात्म्यमक्षणया प्रियया ।
अवबोधितोऽस्मि चपलो वाष्पस्तिमितेन तल्पेन ॥ १०५

अयि शब्दमात्रसाम्यादास्वादितशर्करस्य तव पथिक ।
स्वल्पो रसनाच्छेदः पुरतो ननु शाल्पता महती ॥ १०६

अभिनवयौवनदुर्जयविपक्षजनहननमानमानमपि ।
मुग्धोः पितृप्रियत्वाद् बिभर्ति सुभगामदं गृहिणी ॥ १०७

अपमानितमिव सम्प्रति गुरुणा ग्रीष्मेण दुर्बलं शैत्यं ।
स्नानोत्सुकतरुणीस्तनकलशमिषादं पयो विशति ॥ १०८

अलसयति गात्रमखिलं क्लेशं मोचयति लोचनं हरति ।
स्वप इव प्रेयान् मम मोक्तुम् न ददाति शयनीयम् ॥ १०९

अंशावलम्बिकरधृतकचमिदमभिषेकधवलनखरेखं ।
शीताधरनयनं वपुरस्त्रमनङ्गस्य तव निसितम् ॥ ११०

अविनिहितं विनिहितमिव युवसु स्वच्छेषु वारवामदृशः ।
उपदर्शयन्ति हृदयं दर्पणबिम्बेषु वदनमिव ॥ १११

अतिलज्जया त्वयैव प्रकटः प्रेयानकारि निभृतोऽपि ।
प्रासादमौलेरुपरि प्रसरन्त्या वैजयन्तीव ॥ ११२

अनिशानसंग्रथनगुणयोगाद् गावः पदार्पणैर्बहुभिः ।
खलमपि तुदन्ति मेढीभूतमधःस्थमालम्ब्य ॥ ११३

अनुग्रहेण न तथा बाधयति कटुकूजितैर्यथा पिशुनः ।
रुधिरादानादधिकं दुनोति कर्णे क्वणन्मशकः ॥ ११४

अग्रे लघिमा पश्चात् महतापि पिधीयते न हि महिम्ना ।
वामन इति त्रिविक्रममभिदधति दशावतारविदः ॥ ११५

अङ्के स्तनन्धय स्तव चरणे परिचारिकाः प्रियः पृष्ठे ।
अस्ति किमलब्धमधिकं गृहिणि यदाशङ्कसे बाला ॥ ११६

अधर उदस्तः कूजितमामीलितमक्षि लोलितो मौलिः ।
आसादितमिव चुम्बनसुखमस्पर्शेऽपि तरुणानाम् ॥ ११७

अतिरभसेन भुजीयं वृतिविवरेण प्रवेशितः सदनं।
व्यथिता सर्वोल्लषितो नागच्छति वर्त्मना तेन॥ ११८

अम्बरमध्यनिविष्टं तवेदमतिचपलममलघु जघनतटं।
चातक इव नवमभ्रं निरीक्षमाणो न तृप्यामि॥ ११९

अयमन्धकारसिन्धुरभाराक्रान्तावनीभराक्रान्तः।
उन्नतपूर्वाद्रिमुखः कूर्म्मः सन्ध्यास्तमुद्वमति॥ १२०

अन्तर्भूतो निवसति जड़े जड़ः शिशिरमम्भसि हरिणइव।
अजड़े शशीव तपने सुतनु प्रविष्टोऽपि निःसरति॥ १२१

अगणितजनापवादा त्वत्पाणिस्पर्शहर्षतरलेयं।
आयास्यती वराकी ज्वरस्य तल्पं प्रकल्पयति॥ १२२

अपि रेकवंशजनुषोः पश्यत पूर्णत्वतुच्छताभाजोः।
ज्याकार्म्मुकयोः कश्चिद् गुणभूतः कश्चिदपि भर्त्ता॥ १२३

अभिनवकेलिक्रान्ता कलयति बाला क्रमेण घर्म्माम्भः।
जायामर्पयितुं नमिता कुसुमास्त्रधनुर्लतेव मधु॥ १२०

अविरलपतिताश्रु वपुः पाण्डुस्निग्धं तवोपनीतमिदं।
शतधौतमाज्यमिव मे स्मरशरदाहव्यथां हरति॥ १२५

अन्तर्निपतितगुञ्जागुणरमणीय स्वकान्ति केदारः।
निजगोपीविनयव्ययखेदेन विदीर्णहृदय इव॥ १२६

अमुना हृतमिदमिदमिति पतिवेशिनेऽङ्गमङ्गमियं।
रोषमिषदलितलज्जा गृहिणी दर्शयति पतिपुरतः॥ १२७

आभ्यन्तरमपि बहिरिव हि वाञ्छयितुमशेषतः सततं।
असती सत्प्रविसूतिः काचघटीति त्वयं वेद॥ १२८

आलोक एव विमुखो क्वचिदपि दिवसे न दक्षिणा भवसि ।
छायेव तदपि तापं त्वमेव मे हरसि मानवति ॥ १२९

आज्ञाकाकुर्याच्छाक्षेपो हसितञ्च शुष्करुदितञ्च ।
इति निधुवनपाण्डित्यं धरायस्तस्या न विस्मरामि ॥ १३०

आज्ञाप्रथिपासि पदं दास्यसि दयितस्य शिरसि किं त्वरसे ।
असमयमानिनि रमध्ये मा कुरु भग्नाङ्कुरं प्रेम ॥ १३१

आसाद्य भङ्गमनया द्यूते विहिताभिरचितकेलिपणे ।
निःसारयताद्यानिति कपटरुषोत्सारिताः सख्यः ॥ १३२

आदरणीयगुणा सखि महता निहितासि तेन शिरसि त्वं ।
तव लाघवदोषोऽयं सौधपताकेव यच्चलसि ॥ १३३

आयाति याति खेदं करोति मधु हरति मधुकरीवान्या ।
अधिदेवता त्वमेव, श्रीरिव कमलस्य, मम मनसः ॥ १३४

आर्द्रमपि स्तनजघनात् निरस्य सुतनु त्वयैतदुत्सृष्टं ।
स्वस्थमवाप्तुमिव त्वाम् तपनांशूनंशुकं पिबति ॥ १३५

आरोपिता शिलायाम् अश्मेव त्वं स्थिरा भवेति मन्त्रेण ।
मन्त्रापि परिणयापदि जारमुखं वीक्ष्य हसितैव ॥ १३६

आसाद्य दक्षिणां दिशमविलम्बं त्यजति चोत्तरां तरणिः ।
पुरुषं हरन्ति कान्ताः प्रायेण हि दक्षिणा एव ॥ १३७

आदानपानलेपैः काश्चिद् गरलोपतापहारिण्यः ।
सदसि स्थितैव सिद्धौषधिवत् स्त्री कापि जीवयति ॥ १३८

आन्दोललोलकेशीं चलकाञ्चीकिङ्किणीगणक्वणिता ।
पुरुषायितां स्मरे तां स्मरचामरचिह्नयष्टिमिव ॥ १३९

आत्मिपसि कर्णमस्या लिखैव बही बलि त्वया मध्ये।
इतिजितसकलवदान्यै तनुदाने किम लज्जसे युवति॥ २४०

आक्षेपचरणलग्नमकैशग्रहकेलिकुतुकतरलेन।
स्त्रीणां पतिरपि गुरुरिति धर्मं न भाविता तेन॥ १४१

आकुञ्चितैकजङ्घं दरावृतार्द्धोरु गोपितार्द्धोरु।
सुतनोः स्खलितक्रमनमदुदरं स्फुटनाभि शयनमिदं॥ १४२

आगच्छताऽनवेक्षितपृष्ठेनार्थी वराटकेनेव।
मुक्ताऽस्मि तेन जघनांशुकमपि वोढुमशक्तेव॥ १४३

आदाय धनमनल्पं ददानया सुभग तावकं वासः।
मुग्धा रजकगृहिण्या जाता दिनैः कतिपयैर्विवसा॥ १४४

आस्तां वरमवकेशी मा दोहद मस्य रचय चूततरोः।
एतस्मात् फलितादपि केवलमुद्वेगमवगच्छ॥

आरब्धमश्विमथनं स्वहस्तयित्वा द्विजिह्वमसरे यत्।
उचितस्तत्परिणामो विषमं विषमेव यज्जातं॥ १४५

आवर्जितालकावलि श्वासोत्कम्पस्तनार्तितैकभुजं।
शयनं रतिविवशतनोः स्मरामि शिथिलांशुकं तस्याः॥ १४७

आम्राङ्कुरोऽयमरुणश्यामलरुचि रस्थिनिर्गतः सुतनु।
तव कमठखर्परपुटान् मूर्द्धवोद्ध्वं गतः स्फुरति॥ १४८

आभङ्गुरायबहुगुणदीर्घा स्वादप्रिया दृष्टिः।
कर्षति मनो मदीयं कर्दमीनं वडिशरज्जुरिव॥ १४९

आखेप यथा यथेच्छसि युक्तं तव कितव किमुपरोधयसि।
स्त्रीजातिलाञ्छनमसौ जीवितरक्षा सखी सुभगा॥ १५०

आस्वादितोऽसि मोहाद् यत विदिता वदनमाधुरी भवतः ।
मधुलिप्तक्षुररसनाच्छेदाय परं विजानासि ॥ १५१

आकृष्टिभग्नकण्टकं केन तव प्रकृतिकोमलं सुभगे ।
धनेन भुजमृणालं ग्राह्यं मदनस्य राज्यमिव ॥ १५२

आकृष्य दूरमगणितरौद्रक्लेशा प्रकाशयन्ती स्वं ।
वातप्रतोच्छूनपटी वहित्रमिव हरसि मां सुतनु ॥ १५३

आयासः परहिंसा वैतंसिक सारमेय तव सारः ।
त्वामुत्सार्य्य विभाज्यः कुरङ्ग एषोऽधुनैवान्यैः ॥ १५४

आनयति पथिकतरुणी हरिण इह प्रापयन्निवात्मानं ।
उपकलमगोपि कोमलकलमात्तलिकत्तलमोत्तरलः ॥ १५५

आसीदेव यदार्द्रः किमपि तदा नायमाहतोऽप्याह ।
निष्ठुरभावादधुना कटूनि रटति सखि पटह इव ॥ १५६

आशाकरस्य ताडनपरिभवसहस्य सत्यमहमस्याः ।
न तु शीलशीतलेयं प्रियेतरं वक्तुमपि वेद ॥ १५७

आदाय दुग्धकलशे मन्थानं क्लान्तदोलता गोपी ।
अप्राप्तपारिजाता देवे दोषं निवेशयति ॥ १५८

आस्तां मानसकथनं सखीषु वा मयि निवेद्य दुर्विनये ।
शिथिलितरतिगुणगर्वा ममापि सा लज्जिता सुतनु ॥ १५९

आवर्त्तैरातपेन शोभां हिण्डीरपाण्डुरैर्दधती ।
गायति मुखरितसलिला प्रियसङ्गममङ्गलं सुरसा ॥ १६०

इयमुन्नतिं हरन्ती नेत्रनिकोचं विदधती पुरतः ।
न विजानीमः किं तव वदति सपत्नीव दिननिद्रा ॥ १६१

इदमुभयभित्तिसन्ततहारगुणान्तर्गतैककुचमुकुलं।
गुलिकाधनुरिव बालावपुःस्मरः श्रयति कुतुकेन ॥ १६२

इह शिखिशिखरावलम्बिविनोददरतरलवपुषि तरुहरिणे।
पश्याभिलषति पतितुम् विहङ्गी निजमीड्भेदेन ॥ १६३

इन्दुर्नदोपृशाहेः धूतं मानग्रहश्च ते सुतनु।
भ्रूलतिका च तवेयं भङ्गं रसमधिकमावहति ॥ १६४

इन्दोरिवास्य पुरतो यद्विमुखी सापवारणा भ्रमसि।
तत् कथय किन्नु दुरितं सखि त्वया च्छाययेव कृतं ॥ १६५

इह कपटकुतुकतरलितदृशि विश्वासं कुरङ्ग किं कुरुषे।
नवरभसतरलितेयं व्याधवधू र्बालधौ वलते ॥ १६६

इह वहति बहुमहोदधिविभूषणा मानमियमुर्व्वी।
देवस्य कमठमूर्त्तेर्न पृष्ठमपि निखिलमाप्नोति ॥ १६७

ईर्षारोषज्वलितो निजपतिसङ्गं विचिन्तयंस्तस्याः।
च्युतवसनजघनभावनसान्द्रानन्देन निर्व्वामि ॥ १६८

ईश्वरपरिग्रहोचितमोहोऽस्यां मधुप किं मुधा पतसि।
कनकाभिधानसारा वीतरसा कितव कलिकेयं ॥ १६९

ईषदवशेषजड़िमा शिशिरे गतमात्र एव चिरमङ्गैः।
नवयौवनेव तन्वी निषेव्यते निर्भरं वापी ॥ १७०

उल्लसितभ्रूधनुषा तव पृथुना लोचनेन रुचिराङ्गि।
अचला अपि न महान्तः के चञ्चलभावमानीताः ॥ १७१

उपनीय यन्नितम्बे भुजङ्गमुच्चैरलम्भि विबुधैः श्रीः।
एकः स मन्दरगिरिः सखि गरिमाणं समुद्वहतु ॥ १७२

उल्लसितलाञ्छनोऽयं ज्योत्स्नावर्षी सुधाकरः स्फुरति ।
आसक्तकृष्णवर्ण्णः शकट इव प्रकटितच्चीरः ॥ १७३

उपचारानुनयास्ते कितवस्योपेक्षिताः सखीवचसा ।
अधुना निष्ठुरमपि यदि स वदति कलिकैतवाद् यामि ॥ १७४

उपसि परिवर्त्तयन्त्या मुक्तादामोपवीततां नीतं ।
पुरुषायितवैदग्ध्यं व्रीडावति कैर्न कलितं ते ॥ १७५

उड्डीनानामेषां प्रासादात् तरुणि पच्चिणां पङ्क्तिः ।
विस्फुरति वैजयन्ती पवनच्छिन्नाग्रविलेव ॥ १७६

उज्जागरितभ्रामितदन्तुरदलवलमधुकरप्रकरे ।
काञ्चनकेतकि मा तव विकसतु सौरभ्यसम्भारः ॥ १७७

उल्लसितभ्रूः किमतिक्रान्तं चिन्तयसि निस्तरङ्गाच्चि ।
चुद्रोपचारविरसः पाकः प्रेम्णः गुडस्येव ॥ १७८

उद्विग्य निःसरन्ती सखीमियं कपटकोपकुटिलभ्रूः ।
एवमवतंसमार्च्चिपदाहतदीपं यथा पतति ॥ १७९

उदितोऽपि तुहिनगहने गगनप्रान्ते न दीप्यते तपनः ।
कठिनघृतपूरपूर्णे शरावशिरसि प्रदीप इव ॥ १८०

उद्गमनोपनिवेशनहासपराहृत्तिचलनवचनेषु ।
अनिशं स मोहयति मां हृल्लग्नः श्वास इव दयितः ॥ १८१

उच्छ्रितसौभाग्यमदस्फुटयाच्ञाभङ्गभीतयो यूनोः ।
अकलितमनसोरेका दृष्टि दूती निसृष्टार्था ॥ १८२

उत्तमभुजङ्गसङ्गमनिस्पन्दनितम्बचापलस्तस्याः ।
मन्दरगिरिरिव विबुधैरितस्ततः क्षिप्यते कायः ॥ १८३

उपनीय कलमकुड्मं कथयति सभय विकितृसर्गी हलिकः।
शीर्णं सीमार्द्दनिभं बधूस्तने व्याधिमुपजातं ॥ १८४

उन्मुकुलिताधरपुटे भूतिकणश्वासमिलिताक्षीचि।
धूमोऽपि मेह विरम भ्रमरोऽयं श्वसितमनुसरति ॥ १८५

उपरि परिप्लवते मम बालेयं गेहिनि हंसमालेव।
सरसइव नलिनमाला पुनस्त्वमाश्रयं प्राप्य वससि ॥ १८६

उत्कल्पघर्म्मपिच्छिलदोःसाधिक हस्तविच्युत चौरः।
शिवमाश्रास्ते सुतनु स्तनयो स्तव चञ्चलाञ्चलयोः ॥ १८७

उत्क्षिप्तबाहुदर्शितभुजमूलं चूतमुकुल मम सख्या।
आलम्बमान राजति भवतः पदमुच्चैः सौ लाभः ॥ १८८

उच्चकुचकुम्भनिहितो हृदयं चालयति जघनलग्नाग्रः।
अतिनिम्नमध्यसक्रमदामनिभ स्तरुणि ते हारः ॥ १८९

उल्लसितशीतदीधितिकलोपकण्ठे स्फुरन्ति तारौघाः।
कुसुमायुधविधुतधनुर्निर्गतमकरन्दविन्दुनिभाः ॥ १९०

उपनीय प्रियमसमवविदं च मे दग्धं मानमपनीय।
नर्म्मोपक्रम एव चपले दूतीव चलितासि ॥ १९१

उत्तमवलितैकगतिः करीव सरसोपयः सखे धैर्य्यं।
आस्कन्दितोरुणा त्वं हस्तेनैव स्फुरम् हरसि ॥ १९२

अढाऽमुनातिवाह्य पृष्ठे लग्नापि कालमचलापि।
सर्व्वंसहे कठोरत्वचः किमङ्गेन कमठस्य ॥ १९३

ऋजुना निधेहि चरणौ परिहर सखि निखिलनागाचारं।
इह डाकिनीति पल्लीपतिः कटाक्षेऽपि दण्डयति ॥ १९४

अस्यभो ऽन्न योवत इति श्रुत्वा स्वरपरागा वयं प्राप्ताः।
को वेद गोष्ठमेतद् योग्यास्तो विहितबहुमानं॥ १८५
एको हरः प्रियाधरगुणवेदी त्रिदिवसदः परे मूढाः।
विषममृतं वा सममिति यः पश्यन् गरलमेव पपौ॥ १८६
एष्यति मां पुनरयमिति मम न पदमङ्गलं मयाऽकारि।
अधुना तदेव कारणमवस्थितौ, द्रष्टुं धगेहपतेः॥ १८७
एकैकशो युवजनं विलङ्घमानार्थनिकरमिव तरला।
विश्राम्यति सुभग त्वां अङ्गुलि रासाद्य मेरुमिव॥ १८८
एकः सएव जीवति हृदयविमुक्तोऽपि सहृदयो राहुः।
यः सकललघिमकारणमुदरं न बिभर्त्ति दुष्पूरं॥ १८९
एकेन चूतकुड्मलमपरेण च कदा चिबुकमुन्नमन्।
पश्यामि वाष्पधौतश्रुति, नगरद्वारि तद्वदनं॥ २००
एकं जीवनमूलं चञ्चलमपि तापचञ्चमपि सततं।
अन्तर्वहति वराकी सा त्वां नासेव निश्वासं॥ २०१
एकं वदति मनो मे यामि न यामीति हृदयमपरं मे।
हृदयद्वयमुचितं तव सुन्दरि हतकान्तचित्तायाः॥ २०२
एरण्डपत्रशयना अनयष्टी स्वेदमलघु जघनतटं।
धूलिपुटीव मिलन्ती स्मरज्वरं हरति हालिकवधूः॥ २०३
केलिनिलयं सखीमिव न याति नवोढा स्वयं न मां भजते।
इत्थं प्रहिणोमार्त्यैः स्मयति प्रतिवेशिना हसितं॥ २०४
कालक्रमकमनीयक्रोडेयं केतकीति का शङ्का।
हरियं यथा यथा स्यात् तथा तथा कण्टकोत्कर्षः॥ २०५

कृतकस्वाप मदीयश्वासध्वनिरुद्धकर्णमिव तीव्रैः ।
विवृणसि मा निश्वासैः स्मरः स्मरैः गन्धमेधीव ॥ २०६

क्व स निर्मोकदुकूलः क्वालङ्करणाय फणिमणिश्रेणी ।
कालिय भुजङ्गगमनाद् यमुने विभ्यस्य गम्यासि ॥ २०७

किञ्चिन्न प्रालयोक्तं न समसाद्या निर्वेशिता दृष्टिः ।
मयि पदपतिते केवलमकारि मुखपङ्कजो विमुखः ॥ २०८

कृतहसितहस्ततालां मन्मथतरलैर्विलोकितां युवभिः ।
स्विन्नः खिन्नो निपतन्न अङ्के मर्त्तयति भृङ्ग त्वां ॥ २०९

कमलमुखि सर्वतोमुखनिवारणं शिरधरैव भूषयति ।
रोषो रुद्धस्वरसा स्तरङ्गिणी स्तरलनयनायाः ॥ २१०

कितव प्रवञ्चिता सा भवता मन्दाक्षमन्दसञ्चारा ।
बहुदायैरपि सम्प्रति पाशकमारीव नायाति ॥ २११

कः श्लाघनीयजन्मा माघनिशीथेऽपि यस्य सौभाग्यं ।
प्रालेयानिलदीर्घैः कथयति काञ्चीनिनादोऽयं ॥ २१२

किमशक्यनीयं प्रेम्णः फणिनः कथयापि या बिभेति स्म ।
सा गिरिशभुजभुजङ्गमफणोपधानाऽद्य निद्राति ॥ २१३

कृत्रिमकनकेनेव प्रेम्णा मुषितस्य वारवनिताभिः ।
लघुरिव भित्तविनाशक्लेशो जनहास्यता महती ॥ २१४

किं पर्वदिवसभाञ्जि तदन्तौष्ठि निजं वपुर्न मण्डयसि ।
न त्वां त्यक्ष्यति पर्वस्वपि मधुरामिक्षुयष्टिमिव ॥ २१५

कष्टं साहसकारिणि तव नयनार्द्धेन सोऽध्वनि स्पृष्टः ।
उपवीतादपि विदितो न द्विजदेह स्तपस्वी ते ॥ २१६

कामप्रभे ऽत्र यौवत इति श्रुत्वा स्वरपरागा वयं प्राप्ताः ।
को वेद गोष्ठमेतद् योग्यान्तो विहितबहुमानं ॥ १९५
एको हरः प्रियाधरगुणवेदी त्रिदिवसदः परे मूढाः ।
विषममृतं वा सममिति यः पश्यन् गरलमेव पपौ ॥ १९६
एष्यति मां पुनरयमिति मम्मे पदमङ्कनं मयाऽकारि ।
अधुना तद्वै कारणमवधिवती, दम्धगेहपतेः ॥ १९७
एकैकशो युवजनं विलङ्घमानाद्यनिकरमिव तरला ।
विश्राम्यति सुभग त्वां अङ्गुलि रासाद्य मेरुमिव ॥ १९८
एकः सएव जीवति हृदयविमुक्तोऽपि सहृदयो राहुः ।
यः सकललघिमकारणमुदरं न बिभर्ति दुष्पूरं ॥ १९९
एकेन चूतकुमुमलमपरेण च करा चिबुकमुन्नमन् ।
पश्यामि वाष्पधौतश्रुति, नगरद्वारि तद्वदनं ॥ २००
एकं जीवनमूलं चञ्चलमपि तापचञ्चमपि सततं ।
अन्तर्वहति वराकी सा त्वां नासेव निश्वासं ॥ २०१
एकं वदति मनो मे यामि न यामीति हृदयमपरं मे ।
हृदयद्वयमुचितं तव सुन्दरि हतकान्तचिन्तायाः ॥ २०२
एरण्डपत्रशयना जनयन्ती खेदमलघु जघनतटं ।
धूलिपुटीव मिलन्ती स्मरज्वरं हरति हलिकवधूः ॥ २०३
केलिनिलयं सखीमिव न याति नवोढा स्वयं न मां भजते ।
इत्थं गृहिणीमार्गे स्वपिति प्रतिवेशिना हसितं ॥ २०४
कालक्रमकमनीयक्रोडेयं केतकीति का शङ्का ।
हरियं या यथा स्यात् तथा तथा कण्टकोत्कर्षः ॥ २०५

कृतककलापं मदीयमासंच्यनिरूप्य केशपाशं किं तीव्रैः।
विधसि मां निःश्वासैः सरः मृदः यद्गन्धपीतं॥ २०६

न त निर्मोकदुकूलः काललीलाय फणिमणिमयोः।
कालिय भुजङ्गमनाद् यमुने विश्वस्य गम्यासि॥ २०७

किञ्चित्व प्रालयीभ्यं म समयाद्रा निवेशिता दृष्टिः।
अयि प्रदपतिते केवलमकारि युवपञ्जरो विमुखः॥ २०८

कृतहसितहस्ततालां मन्मथतरले विलोकितां युवभिः।
स्मितः चित्तो निपतन भङ्गे मनसयति कृष्ण त्वां॥ २०९

कमलमुखि सर्वतोमुखनिवारणं विदधदेव भूषयति।
रोषो रुद्धस्वरसा स्तरङ्गिणो स्तरलनयनायः॥ २१०

कितव प्रवञ्चिता सा भवता मन्दाक्षमन्दसञ्चारा।
बहुदायैरपि सम्प्रति पाशकमारीव नायाति॥ २११

कः श्लाघनीयजन्मा माघनिशीथेऽपि यस्य सौभाग्यं।
प्रालेयानिलदीर्घः कथयति काञ्चीनिनादोऽयं॥ २१२

किमशक्नीयं प्रेमणः फणिनः कथयापि या विभेति स्म।
सा गिरिशभुजभुजङ्गमफणोपधानाद्य निद्राति॥ २१३

कृत्रिमकनकेनेव प्रेमणा मुषितस्य वारवनिताभिः।
लघुरिव भ्रितविनाशलज्जो जनहास्यता महती॥ २१४

किं पर्वदिवसभाञ्जि तदगौष्ठि निजं वपु र्मण्डयसि।
न त्वां त्यक्ष्यति पर्वस्वपि मधुरामिक्षुयष्टिमिव॥ २१५

कष्टं साहसकारिणि तव नयनार्द्धेन सोऽध्वनि स्पृष्टः।
उपवीतादपि विदितो न द्विजदेह सापत्नी ते॥ २१६

कोपेऽपि तन्वङ्गानेऽनिर्लिप्तेयं मां प्रमोदयत्येव ।
रौद्रेऽनभ्रेऽपि नभः सुरापगावारिवृष्टिरिव ॥ २१७

कूपप्रभवाणां परमुषितमपां पङ्कबन्धनं मन्ये ।
याः शक्यन्ते लब्धुम् न पार्थिवेनापि निर्गुणेन ॥ २१८

कररुहशिखाभिखातभ्रान्त्वा निशान्ते रजनिहुरवाप ।
रतिरिव मनोभिलषितः क्षमोऽपि लोकस्य हरसि दृशं ॥ २१९

किं करवाणि दिवानिशमपि लग्ना सहजशीतल प्रकृतिः ।
हन्त सुखयामि न प्रियमात्मानमिवात्मनश्छाया ॥ २२०

केशैः शिरसो गरिमा मरणं पीयूषकुण्डपातेन ।
दयितवदनेन वहसि यदि भार स्तदिदमविचिन्त्यं ॥ २२१

किञ्चित् कर्कशतामनुरसं प्रदाय निसर्गमधुरो मे ।
इक्षोरिव ते सुन्दरि मानस्य ग्रन्थिरपि काम्यः ॥ २२२

केन गिरिशस्य दत्ता बुद्धि भुजङ्गं जटावनेऽर्पयितुम् ।
येन रतिरभसकान्ताकरचिकुराकर्षणं मुषितं ॥ २२३

करचरणकाञ्चिदामप्रहारमविचिन्त्य बलगृहीतकचः ।
प्रणयी चुम्बति दयितावदनं स्फुरदधरमरुणाक्षं ॥ २२४

कुरुतां चापलमधुना कलयतु सुरसासि यादृशी तदपि ।
सुन्दरि हरीतकीमनु परिपीता वारिधारेव ॥ २२५

कज्जलतिलककलङ्कितमुखचन्द्रे गलितसलिलकणकेशि ।
नवविरहदहनदूनो जीवयितव्यस्त्वया कतमः ॥ २२६

कष्टामवस्थयोऽपि हि परोपकारं त्यजन्ति न महान्तः ।
क्षणमात्रजीवना अपि करिणो दानद्रवार्द्रकराः ॥ २२७

किं हसथ किं प्रधावथ किं जनमाह्वयथ बालका विफलं।
नद्युयं दर्शयति यथा रिष्टः कण्ठेऽमुना जग्हे ॥ २२८
मातरतावेकारित मरक्तआरोषमसृण्ंमधुराची ।
भोक्तुं न भक्तु मथवा बलतेऽसावद्य लब्धनतिः ॥ २२९
को विक्रमो गुणा के का कान्तिः शिशिरकिरणलेखानां ।
अन्तः प्रविश्य यासामाक्रान्तं पदविशेषेण ॥ २३०
केतकगर्भं गन्धादरेण दूरादमी द्रुतमुपेताः ।
मदनस्यन्दनवाजिन इव मधुपा भूरिमाददते ॥ २३१
कृतविविधमथनयत्नः पराभवाय प्रभुः सुरासुरयोः ।
इच्छति सौभाग्यमदात् स्वयम्बरेण श्रियं विष्णुः ॥ २३२
किं पुत्रि गण्डशैलभ्रमेण नवनीरदेषु निद्रासि ।
अनुभव चपलाविलसितगर्जितदेशान्तरभ्रान्तीः ॥ २३३
कान्तः पदेन हत इति सरलामपराध्य किं प्रसादयथ !
सोऽप्येवमेव सुलभः पदप्रसादतः प्रहारः किं ॥ २३४
कर्णगतेयममोघा दृष्टिः स्तन शक्तिरिन्द्रदत्ता च ।
सा नासादितविजया क्वचिदपि नापार्थपतितेयं ॥ २३५
कं शयसि किमिति दूतीयदशक्यं सुमुखि तव कटाक्षेण ।
कामोऽपि तत्र सायकमकीर्त्तिशङ्की न सन्धत्ते ॥ २३६
को वेद मूल्यमच्युते प्रभुणा पणीकृतस्य विधोः ।
प्रतिविजये यत्प्रतिपणमधरं धरनन्दिनी विदधे ॥ २३७
कुपितां प्रहरणभयेन मुञ्चामि न खलु चण्डि त्वां ।
अलिरनिलचपलकिसलयताड़नसहनो लतां भजते ॥ २३८

कोपात्कष्टभ्रुकम्पशरासने सम्मुखं प्रिये पततः ।
छिन्नगुणमधुपानिव कज्जलमलिनाश्रुजलबिन्दून् ॥ २३९
कामेनापि न भेत्तुं किमु हृदयमपारि बालवनितानाम् ।
मूर्धार्धिमिश्रप्रहारोच्छूनमिवाभाति रद्‌रः ॥ २४०
किं परजीवे द्रक्ष्यसि विस्मयमधुराक्षि गच्छ सखि दूरं ।
अभिमधिचत्वरमुरगग्राही खेलयतु निर्विघ्नः ॥ २४१
करचरणेन प्रहरति यथा यथाङ्गेषु कोपतरलाक्षी ।
रोषयति परुषवचनैस्तथा तथा प्रेयसीं रसिकः ॥ २४२
कस्तां निन्दति लुम्पति कः स्मरफलकस्य वर्णकं मुग्धः ।
को भवति रत्नकण्टकममृते कस्यारुचिररेति ॥ २४३
कोपवती पाणिलीलाचञ्चलचूताङ्कुरे त्वयि भ्रमति ।
स्मरकम्पितकरवाले स्मर इव सा मूर्च्छिता सुतनुः ॥ २३४
कौलीनाद्धर्मिणीं भजामि न कुलं स्मरः प्रमाणयति ।
तद्भावनेन भजतो मम गोत्रस्खलनमनिवार्यं ॥ २४५
कुत इह कुरङ्गशावक केदारे कलममञ्जरीं त्यजसि ।
तृणधन्वा तृणविशिखः तृणघटितकपटपुरुषोऽयम् ॥ २४६
खलसख्यं प्राङ्मधुरं वयोऽन्तराले निदाघदिनमन्ते ।
एकादिमध्यपरिणतिरमणीया साधुजनमैत्री ॥ २४७
गुणमधिगतमपि धनवान् अचिरान्नाशयति रक्षति दरिद्रः ।
मज्जयति रज्जुमम्भसि पूर्णकुम्भः सखि न तुच्छः ॥ २४८
गुरुरपि लघूपनीतो निमज्जति नियतमाशये महतः ।
वानरकरोपनीतः शैलो मकरालयस्येव ॥ २४९

गौरीपते गरीयो गरलं गत्वा गले जीर्णं जीर्य्यति।
जीर्य्यति कर्णे महतां दुर्वादो नाल्पमपि निविशति॥ २५०

गृहपतिपुरतो जारं कपटकथाकथितमन्मथावस्थं।
प्रीणयति पीड़यति च बाला निश्वस्य निश्वस्य॥ २५१

गतिगञ्जितवरयुवतिः करी कपोलौ करोतु मदमलिनौ।
मुखबन्धमात्रसिन्धुर लम्बोदर किं मदं वहसि॥ २५२

गेहिन्या शृखलती गोत्रस्खलितापराधतो मानं।
स्निग्धां प्रिये सगर्वां सखीषु बाला दृशं दिशति॥ २५३

ग्रीष्मसमये समयेऽस्मिन् विनिर्म्मितं कलय केलिवनमूले।
अलिमालतालवलयच्छलेन कुण्डलितमिव शैत्यं॥ २५४

गुरुतरुचरण इति मा लीलाविहगं विमुञ्च सखि मुग्धे।
अस्मिन् वलयितशाखे क्षणेन गुणयन्त्रणं त्रुटति॥ २५५

गुरुगर्ज्जिताम्बुविन्दुद्भयमुद्रितकर्णचक्षुषां पुरतः।
बाला चुम्बति जारं वज्रादधिको हि मदनेषुः॥ २५६

गृहिणीगुणेषु गणिता विनय सेवा विधेयतेति गुणाः।
मानः प्रभुता वाम्यं विभूषणं वामनयनानां॥ २२७

गुणमात्सरमगुणज्ञा लक्ष्मी गङ्गा च वेद हरिहरयोः।
एका पदेऽपि रमते न वसति निहिता शिरस्यपरा॥ २५८

गत्वा जीवितसंशयमभ्यस्तः सोढुमतिचिराद्विरहः।
अकरुण पुनरपि दित्ससि सुरतदुरभ्यासमस्माकं॥ २५९

गोत्रस्खलितप्रश्नेष्युत्तरमतिशीलशीतलं दत्त्वा।
निश्वस्य मोघरूपे स्ववपुषि निहितं तया चक्षुः॥ २६०

गुरुषु मिलितेषु शिरसा प्रणमसि लघुभूतता समेषु समा ।
उचितज्ञासि तुले किं तुलयसि गुञ्जाफलैः कनकं ॥ २६१

गन्धग्राहिणी श्वालोन्मीलन्निर्य्यासनिहितनिखिलाङ्गि ।
उपभुक्तमुक्तभूरुहगतेऽधुना भ्रमरि न भ्रमसि ॥ २६२

गेहिन्या क्रियमाणं निरुध्यमानं नवोढया पुरतः ।
मम नीका हितया ऽतिगुणा इव हृदयं द्विधा भवति ॥ २६३

गुण आकर्षणयोग्यो धनुष इवैकोपि लक्षलाभाय ।
लूतातन्तुभिरिव किं गुणै र्विमर्द्दसहै र्बहुभिः ॥ २६४

गायति गीतें शंसति वंशे वादयति सा विपञ्चीषु ।
पाठयति पञ्जरशुकं तव सन्देशाक्षरं बाला ॥ २६५

गणयति न मधुव्ययमयमविरतमापिबतु मधुकरः कुमुदं ॥
सौभाग्यमानवान् परमसूयति द्युमणये चन्द्रः ॥ २६६

गुणविधृता सखि तिष्ठसि तथैव देहेन किन्तु हृदयं ते ।
हृतममुना मालायाः समीरणेव सौरभ्यं ॥ २६७

गुरुसदने मेदीयसि चरणगते मयि च मूकयापि तया ।
नूपुरमपास्य पदयोः किं न प्रियमीरितं प्रियया ॥ २६८

ग्रथिलतया किमिन्दोः किमपभ्रंशेन गीतस्य ।
किमनार्ज्जवेन शशिनः किं दारिद्र्येण दयितस्य ॥ २६९

गेहिन्या चिकुरग्रहसमयससीत्कारमीलितदृशापि ।
बालाकपोलपुलकं विलोक्य निहितोऽस्मि शिरसि पदा ॥ २७०

गुरुपथ जागरारुणघूर्णत्तारं कथञ्चिदपि चलते ।
नयनमिदं स्फुटनखपदनिवेशकोपकुटिलभ्रु ॥ २७१

घटितजघनं निपीड़ितपीनोरु न्यस्तनिबिड़कुचभारं ।
आलिङ्गत्यपि बाला वदत्यसौ मुञ्च मुञ्चेति ॥ २७२

घटितपलाशकपाटं निश्चि निशि मुद्रिणीष्वि शेरते पद्माः ।
उज्जागरेण केरव कति गच्छा रचितुं लक्ष्मीः ॥ २७३

घूर्णन्ति विमलश्चाः स्नेहापायात् प्रदीपकलिकाश्च ।
प्रातः प्रक्षिप्याथ स्त्रीहृदयं स्फुटति कमलञ्च ॥ २७४

चपलस्य पलितलाञ्छितचिकुरं दयितस्य मौलिमवलोक्य ।
खेदोचितेऽपि समये सखाद सैवा इसे रोहिणी ॥ २७५

चण्डि प्रसारितेन स्पृशन् भुजेनापि कोपनां भवतीं ।
दृष्यामि पङ्किलामिव पिबन्नदीं नलिननालेन ॥ २७७

चपलभुजङ्गीभुक्तोज्झितशीतलगम्भवह निशि श्रान्तिं ।
अपरापां पूरयितुम् प्रत्यूषसदागते गच्छ ॥ २७८

चिरपथिक द्राघिमभिलदृलकालताश्रैवालावलिग्रथितौ ।
करतोयेव मृगाक्ष्याः दृष्टिरिदानीं सदानीरा ॥ २७९

चण्डि दरचपलचेलव्यक्तोरुविलोकनैकरसिकेन ।
धूलिभयादपि न मया, चरणाहतौ कुञ्चितं चक्षुः ॥ २८०

चलकुण्डलचलदलकस्खलदुरसिजवसनसज्जदूरुयुगं ।
श्रवनभरक्लमकूणित नयनमिदं हरति गतमस्याः ॥ २८१

चरणैः परागसैकतमफलमिदं जिघ्रसि कीतक्याः ।
इह वसति कान्तिसारे नान्तःसलिलापि मधुसिन्धुः ॥ २८२

चिरकालपथिक गङ्गातरङ्गिताक्षः किमीक्षसे मुग्धः ।
त्वमिह्विंशाम्लेषमश्विक्षिराजीयमेतस्याः ॥ २८३

चपलां यथा मदान्धश्छायामयमात्मनः करी हन्ति ।
आस्फालयति करं प्रतिगज'स्तथायं पुरो वदः ॥ २८४

चुम्बनलोलुपमदधरक्षतकाश्मीरं स्मरन्नत्प्यामि ।
हृदयद्विरदालानस्तम्भं तस्याः स्तद्रूयुगं ॥ २८५

चिकुरविसारणतिर्य्यगानतकण्ठी विमुखवृत्तिरिति बाला ।
त्वामियमङ्गुलिकल्पितकचावकाशा विलोकयति ॥ २८६

चुम्बनक्षताञ्जनाङ्कं स्फुटजागरमीक्षणं क्षिपसि ॥
किमुषसि वियोगकातरमस्मेषुरिवाङ्गनाराचं ॥ २८७

छायाग्राही चन्द्रः कूटत्वं सततमम्बुजे भवति ।
छिलोभयं सभार्यां स्तौति तवैवाननं लोकः ॥ २८८

छायामात्रं पश्यन्नधोमुखद्भुतेन धैर्य्येण ।
तुदति मम हृदयमिषुणा राधाचक्रं किरिटीव ॥ २८९

जलविन्दवः कतिपये नवनाद्गगमनोद्यमे तव स्खलिताः ।
कान्ते मम मन्यथा भूरितैरेव पिच्छलिता ॥ २९०

जृम्भोत्तम्भितदोर्युगयन्त्रितताडङ्क पीड़ितकपोलं ।
तस्याः स्मरामि अलकवलुलिताञ्जनमलसदृष्टि मुखं ॥ २९१

जागरयित्वा पुरुषं परं वने सर्व्वतोमुखं हरसि ।
मयि शरदनुरूपं तव शीलमिदं जातिशालिन्याः ॥ २९२

जीवामि लङ्घितावधिदिनेति लज्जावशेन गेहिन्याः ।
मयि सम्भृतोऽपि वाष्पैरसम्बरै र्व्यञ्जितो मानः ॥ २९३

जाल्मो गुरुः सुदृष्टो वामेतरचरणभेद उपदेशः ।
ख्याति गुणवला इति भ्रमसि सुखं हयभ रथ्यासु ॥ २९४

ज्वर वीतौषधिबाध स्तिष्ठ सुखं दृतमङ्गमखिलं ते ।
असुलभलोकाकर्षणपाषाणसखेन मोक्ष्यसि मां ॥ २९५
जीवनहेतो र्मिलिता मुञ्चति करकर्षेऽपि न खलु त्वां ।
नै।वि भिन्नं सुन्दर मुग्धा तद्विरसतां नागाः ॥ २९६
जघनेन चापलं तव वितन्वतेयं तनूजाता तनुः ।
शाणेनेव चोक्ता स्मरारिपुत्री मनो विशति ॥ २९७
ज्योत्स्नाभिसारसमुचितवेशे व्याकोषमल्लिकोत्तंसे ।
विशति मनो निशितेव स्मरस्य कुमुदत्सरुच्छुरिका॥ २९८
जड़ सुखयसि परतरुणीं गृहिणीं कारयसि केवलं सेवां ।
आखण्डगति दिशमिन्दुः स्नान्तु शिलां वारि वाहयति ॥२९९
ज्योत्स्नागर्भितसैकतमध्यगतः स्फुरति यामुनः पूरः ।
दुग्धनिधौ नागाधिपतल्पतले सुप्त इव कृष्णः ॥ ३००
ठुक्कृतकङ्कणपाणिक्षेपे स्तम्भावलम्बने मौनैः ।
शोभयसि शुष्करुदितैरपि सुन्दरि मन्दिरद्वारं ॥ ३०१
ढक्कामाहत्य मदं वितन्वते करिण इव पुरुषाः ।
स्त्रीणां करिणीनामिव मदः परं स्वकुलनाशाय ॥ ३०२
तां तापयन्ति मन्मथवाणा स्त्वां प्रीणयन्तीव ते सुभग ।
तपनकरा स्तपनशिलां ज्वलयन्ति विधुं मधुरयन्ति ॥ ३२३
तव सुतनु सानुमत्या बहुधातुजनितनितम्बरागायाः ।
गिरिवरभुवइव ला।नाप्नोमि ह्यङ्गुलेन दिवं ॥ ३०४
त्यक्तो मुञ्चति जीवनमुज्झति नानुग्रहेऽपि लोलत्वं ।
किं शाप्येन पद्माकरस्य करणीयमस्य मया ॥ ३०५

तदिरहार्थाद्रि पाण्डुस्तनङ्गी च्छायये मेवलङ्का ।
हंसीव ज्योत्स्नायां सा सुभग प्रत्यभिज्ञेया ॥ ३०६

त्वयि विनिवेशितचित्ता सुभग गता केवलेन कायेन ।
घननालकुङ्कमीना नदीव सा नीरमात्रेण ॥ ३०७

त्वयि संक्रान्तं तस्याः कठोरतर हृदयमत्यमरसक्तं ।
मरकतमणिमलमिव कण्टकानल्पनितः स्फुटितं ॥ ३०८

त्वमसूर्ख्यम्पश्यापि पदमपि न निमयपारयं भ्रमसि ।
छाये किमिह विधेयं मुञ्चसि न मूर्त्तिमन्तस्तां ॥ ३०९

तव विरहे विस्तारितरजनी अमितेन्दुचन्दनहेमे ।
विजिनीव माघमासे विना हुताशेन सा दग्धा ॥ ३१०

तरुणि त्वच्चरणाहति कुसुमितकङ्केलि कोरकाकारं ।
कुटिलचरिता सपत्नी न पिवति वत शोकविलापि ॥ ३११

तल्पे प्रभुरिव गुरुरिव मनसिजतन्त्रे श्रमेषु भुजिष्येव ।
गेहे श्रीरिव गुरुजनपुरतो मूर्त्तेव सा व्रीडा ॥ ३१२

त्वमलभ्या मम तावन्मोहमयस्य सम्मुखं व्रजतः ।
छायेवापसरन्ती भीत्या न निवार्य्यसे यावत् ॥ ३१२

तपसा क्लेशित एषः प्रोद्धवलो न खलु फाल्गुनेऽप्यासीत्
मधुना प्रमत्तमधुना को मदनं मिहिरमिव सहते ॥ ३१४

त्वद्गमनदिवसगणनावलखरेखाभिरलङ्कृता सा सुभग ।
गण्डस्थलीव तस्याः पाण्डुरिता भवनभित्तिरपि ॥ ३१५

तस्यायाम्यसाहं सखि वक्रिममधुरया दृष्ट्या ।
विद्धा तदेकनेया पोभिणइव दंष्ट्रया धरणी ॥ ३१६

त्वयि कुग्रामवटद्रुम वैश्रवणो वसतु वा लक्ष्मीः।
पामरकुठारपातात् कातरशिरसैव ते रक्षा॥ ३१७

तव मुखर वदनदोषं सहमाना मौक्तमक्षमा सुतनुः।
सा वहति वत भवनं घुणमन्तः शालभञ्जीव॥ ३१८

दुःखमुखमपि न खलु त्वां त्यजन्ति अमी हरिणवैरिणः शबराः।
यशसैव जीवितमिदं त्वच योजितमृगाङ्कसङ्ग्रामः॥ ३१९

त्रिपुररिपोरिव गङ्गा मम मानिन जनितमदनदाहस्य।
जीवनमर्पितशिरसो ददासि चिकुरग्रहेणैव॥ ३२०

त्वत्सङ्कथासु मुखरः सनिःश्वासानन्दसावहित्थश्च।
स खलु सखीनां निभृतं त्वया कृतार्थीकृतः सुभगः॥ ३२१

त्वयि सर्पति पथि दृष्टिः सुन्दर वृतिविवरविनिर्गता तस्याः।
हरतरलभिन्नशैवलजाला शफरीव विस्फुरति॥ ३२२

ते सुतनु शून्यहृदया ये शङ्कां शून्यहृदयमपि विदधति।
अङ्गीकृतकरपत्रो यस्तव हस्तग्रहं कुरुते॥ ३२३

ते श्रेष्ठिनः क्व सम्प्रति शक्रध्वज यैः कृतस्तवोच्छ्रायः।
ईषाम्बा मेठिम्बा अधुनातनास्त्वां विधित्सन्ति॥ ३२४

तानवमेत्य च्छिन्नः परोपहितरागमदनसङ्घटितः।
कर्ण इव कामिनीनां विराजते निर्भरः प्रेमा॥ ३२५

तस्मिन्नास्वादभावे विगतरसे शुण्ठिशकल इव।
यतिमूर्तिभाजि मलिने नागरशब्दो विडम्बाय॥ ३२६

तमसि घने विषमे पथि जम्बुकमुल्कामुखं प्रपन्नाः स्म।
किं कुर्मः सोऽपि सखे स्थितो मुखं मुद्रयित्वैव॥ ३२७

त्वामभिलषतो मानिनि मम गरिमगुणोपि दोषतां यातः ।
पङ्किलकूलां तटिनीं पिपासतः सिन्धुरस्येव ॥ ३२८

तिमिरेपि दूरदृश्यां कठिनाश्लेषे च रहसि मुखरा च ।
शङ्खमयवलयराजी गृहपतिशिरसा सह स्फुटतु ॥ ३२९

तव वृत्तेन गुणेन च समुचितसम्पन्नकण्ठलुण्ठनायाः ।
हारस्रजइव सुन्दरि क्षतः पुन र्नायके स्तरलः ॥ ३३०

दर्शनविनीतमाना हर्षोल्लसत्कपोलतलं ।
चुम्बननिषेधमिषतो वदनं पिदधाति पाणिभ्यां ॥ ३३१

देहस्तम्भः स्खलनं शैथिल्यं वेपथुः प्रियध्यानं ।
पथि पथि गगनाश्लेषः कामिनि कस्तेऽभिसारगुणः ॥ ३३२

द्रावयता दिवसानि त्वदीयविरहेण तीव्रतापेन ।
ग्रीष्मेणेव नलिन्या जीवनमल्पीकृतं तस्याः ॥ ३३३

दुर्जनसहवासादपि शीलोत्कर्षं न सज्जन स्त्यजति ।
प्रतिपर्वतपनवासी निस्तृतमात्रः शशी शीतलः ॥ ३३४

दयित प्रहितां दूतीमालम्ब्य करेण तमसि गच्छन्ती ।
स्वेदच्युतमृगनाभि दूराद् गौराङ्गि दृश्यासि ॥ ३३५

दयितागुणप्रकाशं नीतः स्वेनैव वदनदोषेण ।
प्रतिदिनविदलितवाटीवृत्तिघटनैः खिद्यसे किमिति ॥ ३३६

दाक्षिण्यान्मृदिमानं भजन्तमेनं न भानुमवमंस्थाः ।
रौद्रीमुपागतेऽस्मिन् कः क्षमते दृष्टिमपि दातुम् ॥ ३३७

दृष्ट्वैव विरहकातरतारकया प्रियमुखे समर्पितया ।
यान्ति मृगवल्लभायाः पुलिन्दबाणार्हिताः प्राणाः ॥ ३३८

दूरस्थापितहृदयो गूढरहस्यो निकामसाग्रहः ।
आश्लेषो बालानां भवति खलानाञ्च सम्भेदः ॥ ३३९

द्वारि गुरवः कोणे शुष्कः सकाशे शिशुः पृष्ठे सख्यः ।
कालासह क्षमस्व प्रिय प्रसीद प्रभातमहः ॥ ३४०

दधिकणामुक्ताभरणा खासोत्तुङ्गस्तनार्पणमनोज्ञं ।
प्रियमालिङ्गति गोपीमन्थश्रममन्थरैरङ्गैः ॥ ३४१

दलितोद्वेगेन सखि प्रियेण लग्नेन रागमावहता ।
मोहयता शयनीयं ताम्बुलेनेव नीतास्मि ॥ ३३२

दृष्टमदृष्टप्रायां दयितं कृत्वा प्रकाशितस्तनया ।
हृदयं करेण ताड़ितमथ मिथ्याव्यञ्जितत्रपया ॥ ३४३

दर्शितयमुनोच्छ्राये भ्रूविभ्रमभाजि वलति तव नयने ।
क्षिप्तहले हलधर इव पुरमिवावर्ज्जितं सुतनु ॥ ३४४

दयितप्रार्थितदुर्लभमुखमदिरासारसेकसुकुमारः ।
व्यथयति विरहे बकुलः क्व परिचयः प्रकृतिकठिनानां ।३४५

द्वित्रैरेष्यामि दिनैरिति किं तद्वचसि सखि तवाश्वासः ।
कथयति चिरपथिककृतं दूरनिखातो नखाङ्कस्ते ॥ ३४६

दयितस्पर्शोन्मीलितघर्म्मजलस्खलितचरणनखलाक्षे ।
गर्वभरमुखरिते सखि तच्चिकुरान् किमपराधयसि ॥ ३४७

दुष्टग्रहेण गेहानि तेन कुपुत्रेण किं प्रजातेन ।
भौमेनेव निजं कुलमङ्गारवत् कृतं येन ॥ ३४८

दर्शिततापोच्छ्रायैस्तेजोवद्भिः सुगोत्रसञ्जातैः ।
हीरैरश्वप्रवीरैरापत्स्वपि गम्यते नाथः ॥ ३४९

दरनिद्रायितस्यापि सरस्य शिरसा निर्गता मुग्धे ।
मुग्धे तव दृष्टिरपावर्जुनयन्त्रेषुरिव हन्ति ॥ ३५०
दुर्गतगृहिणी तनये करुणार्द्रा प्रियतमे रागमयी ।
मुग्धा रताभियोगं न मन्यते न प्रतिक्षिपति ॥ ३५१
दुर्गतगेहिनि जर्जरमन्दिर सुप्तेव मन्यसे चन्द्रं ।
नयमिन्दुवञ्चितदृशो निचुलितदोलाविहारिणः ॥ ३५२
दारयितुम् किमपारि न हृदयं कुसुमेषुणापि बालानां ।
गूढप्रहारोच्छूनमिवाभाति यदुच्चः ॥ ३५३
दीर्घगवाक्षमुखान्तर्निपातिन स्तनपि रश्मयः शोषाः ।
नृहरिनखा इव दानववचःप्रविशन्ति सौधतलं ॥ ३५४
दरतरलेक्षणि वचसि दरोन्नते तव मुखे च दरहसिते ।
आस्तां कुसुमं वीरः स्मरोऽधुना चित्रधनुषापि ॥ ३५५
दृष्टसखी सहितेयं पूर्णेन्दुमुखी सुखाय नेदानीं ।
राकेव वृष्टियुक्ता भवतोऽभिमताय निशि भवतु ॥ ३५६
दलिते पलालपुञ्जे वृषभं परिभवति गृहपतौ कुपिते ।
निभृते निभालितवदनौ हलिकवधूदेवरौ हसतः ॥ ३५७
दीप्यन्तां ये दीप्त्यै घटिता मणयश्च वीरपुरुषाश्च ।
तेजः स्वविनाशाय तु कृष्णां तृणानामिव लघूनां ॥ ३५८
धूमैरश्रूणि पातय दह शिखया दहन मलिनयाङ्गारैः ।
जागरयिष्यति दुर्गतगृहिणी त्वां तदपि शिशिरनिशि ॥ ३५९
धैर्यं निधेहि गच्छतु रजनी सोप्यस्तु सुमुखि सोत्कण्ठः ।
प्रविश हृदि तस्य दूरं पञ्चशतयुक्ता स्मरेषुरिव ॥ ३६०

धवलत्वनखलत्व दुर्व्वलमकलितनेपथ्यमलकपिहिताक्षाः।
द्रक्ष्यामि मदवलोकनदिग्गुणाश्रु वपुः पुरोहारि॥ ३६०
धर्म्मारम्भे ऽप्यसतां परहिंसैव प्रयोजिका भवति।
काकानामभिषेके कारणतां दृष्टिरनुभवति॥ ३६१
नीरवलयदन्तुरसैकतशभेदमेदुरैः शिशिरे।
राजन्ति तूलराशिस्थूलपटैरिव तटैः सरितः॥ ३६२
निजकायच्छायायां विश्रम्य निदाघविपदमपनेतुम्।
बत विविधासनुभङ्गी मुग्धकुरङ्गीयमाचरति॥ ३६३
न हसन्ति जरठ इति यद् वल्लववाला नमन्ति मन्दमपि।
सखि स यशोदातनयो नित्यं कन्दलितकन्दर्पः॥ ३६४
नीता समर्पितवपुरपि वाम्यं न कामिनी त्यजति।
हरदेहार्द्धग्रथिता निदर्शनं पार्व्वती तत्र॥ ३६५
नागरभोगानुमितस्ववधूसौन्दर्य्यगर्व्वतरलस्य।
निपतति पदं न भूमौ ग्रामिपुरतस्तन्तुवायस्य॥ ३६६
निपतति चरणे कोणं प्रविश्य निशि यन्निरीक्षते का स्यात्।
सखि स खलु लोकपुरतः खलः स्वगरिमाणमुद्गिरति॥ ३६७
न निर्व्वेष्टुं शक्यः चर्मा महाम्भोचितो यदि कथञ्चित्।
मन्दरगिरिरिव गरलं निवसतेऽनर्थमुत्पाद्य॥ ३६८
नियमेन पदे निःस्थं तरुतलके वर्त्मकं समाश्रयति।
समवाप्तगतिः कः सङ्गमवाप्य दुरीशस्य॥ ३६९
निजपरगुणैरञ्जित जगतां करिणाश्च सत्कवीनाञ्च।
वहतामपि महिमानं शोभायै सज्जना एव॥ ३७०

गोत्रपतौ न स्नेहं हरति न निर्वाति न मलिनं वमति ।
तस्योज्ज्वलो निशि निशि प्रेमा रत्नप्रदीप इव ॥ ३७१
निहितान् निहितानुज्झति नियतं मम पार्थिवानपि प्रेम ।
भ्रामं भ्रामं तिष्ठति तत्रैव कुलालचक्रमिव ॥ ३७२
निर्भरमपि संभुक्तं दृष्ट्वा प्रातः पिबन् न तृप्यामि ।
नवनमनंशुकमस्याश्चकोर इव शिशिरकरबिम्बं ॥ ३७३
निविड़घटितोरुयुगलां श्वासोत्तुङ्गस्तनार्पितव्यजनां ।
तां स्निग्धकुपितदृशं स्मरामि रतिनिःसहां सुतनुं ॥ ३७४
निर्गुण इति मृत इति च द्वावेकार्थाभिधायिनौ विद्धि ।
पश्य धनुर्गुणशून्यं निर्जीवं यदिह शंसन्ति ॥ ३७५
निजसूक्ष्मसूत्रलम्बी विलोचनं तरुण ते चैषं हरतु ।
स्वयमुद्गृहीतवडिशः कर्कट इव मर्कटः पुरतः ॥ ३७६
नागरक गीतिरिव सा ग्रामस्थितापि हृदयहरा सुतनुः ।
कस्तूरी न मृगोदरवासवशाद् विस्रतामेति ॥ ३७७
नखलिखितस्तनि कुरुवकमयपृष्ठे भूमिलुलितशर्वाङ्गि ।
हृदयविदारणनिःसृतकुसुमास्त्रशरेव हरसि मनः ॥ ३७८
नीता लघिमानमियं तस्यां गरिमाणमधिकमर्पयसि ।
भार इव विषमभार्यः सुदुर्वहो भवति गृहवासः ॥ ३७९
नच दूती नच याच्ञा नचाञ्जलि नच कटाक्षनिक्षेपः ।
सौभाग्यमानिनां सखि कुचग्रहः प्रथममभियोगः ॥ ३८०
निशि विषमकुसुमविशिखप्रेरितयो नौ लब्धरतिरसयो र्हि ।
मान स्तथैव विलसति दम्पत्योरशिथिलग्रन्थिः ॥ ३८१

निवमात्रनिर्विशेषस्थापितमपि निखिलसारमादाय।
निर्मोकमिव भुजङ्गी मुञ्चति पुरुषञ्च वारवधुः॥ ३८२
कृत्वश्रमघर्म्मार्द्रं मुञ्चसि कच्छेण कञ्चुकं सुतनु।
मकरन्दोदकजुष्टं मदनधनुर्वल्लिरिव चोलं॥ ३८३
नाहं वदामि सुतनु त्वमशीला वा प्रचण्डचरिता वा।
प्रेमस्वभावसुलभं भयमुदयति मम तु हृदयस्य॥ ३८४
नखदशनमुष्टिपातैरदयैरालिङ्गनैश्च सुभगस्य।
अपराधं शंसन्त्यः शान्तिं रचयन्ति रागिण्यः॥ ३८५
न निरूपितोऽसि सख्या नियतं नेत्रत्रिभागमात्रेण।
हारयति येन कुसुमं विमुखे त्वयि कण्ठइव देवे॥ ३८६
न गुणे न लक्षणे वा वयसि च रूपे च नादरो विहितः।
त्वयि सौरभेयि घण्टा कपिलापुत्रीति बद्धेयं॥ ३८७
निष्कारणापराधं निष्कारणकलहपोषपरितोषं।
सामान्यमरणजीवनसुखदुःखं जयति दाम्पत्यं॥ ३८८
न प्राप्यसे कराभ्यां हृदयान्नापैषि वितनुषे बाधां।
त्वं मम भग्नावस्थितकुसुमायुधविशिखफलिकेव॥ ३८९
नाथइति परुषमुचितं प्रियइति दासइत्यनुग्रहो यत्र।
तद्दाम्पत्यमतोऽन्यं नीवी रज्जुः पशुः पुरुषः॥ ३९०
निहितायामन्यस्यामपि सैवैका मनसि मम स्फुरति।
रेखान्तरोपधाना यथाक्षरराजिरिव दयिता॥ ३९१
निधिनिक्षेपस्थानस्योपरि चिह्नार्थिमिव लता निहिता।
लोभयति तव तनूदरि जघनतटादुपरि रोमावली॥ ३९२

निहितार्द्रलोचनाया स्त्वं तस्या हरसि हृदयसर्व्वस्वं ।
न सुभग समुचितमीदृग्यमदं शुष्कासि भुजं गिलसि ॥ ३९३
नीत्वागारं रजनीजागरमेवाद्य सादरं दत्त्वा ।
अचिरेण कैर्न तरुणै र्दीर्गायचीव विमुक्तासि ॥ ३९४
नन्दतेऽन्नाब्दाद्दुदरे कनके मणौ हृमि समुद्रे ।
यस्य खलु तेजस्तदखिलमोजायितमञ्जनिजस्य ॥ ३९५
न स वर्णो न च रूपं न संस्कृतिः कापि नापि सा प्रकृतिः ।
बाला त्वद्विरहापदि जाताऽपभ्रंशभाषेव ॥ ३९६
न विभूषणे तवास्था वपुर्गुणैनैव जयसि सखि पुनः ।
अवधीरितास्त्रयस्ता कुसुमेषो मन्त्रविद्येव ॥ ३९७
नेत्राकृष्टो भ्रामं भ्रामं प्रियान् यथा यथाऽस्ति तथा ।
मन्थयति सखि मनो मम दधिभाण्डं मन्थदण्ड इव ॥ ३९८
नानावर्णकरूपं प्रकल्पयन्ती मनोहरं तन्वी ।
चित्रकरतूलिकेव त्वां सा प्रतिभित्ति भावयति ॥ ३९९
पथिकासक्ता किञ्चिन् न वेद घनकलमगोपिका गोपी ।
केलिकलाहुङ्कारैः कीरावली मोघमपसरति ॥ ४००
प्रणमति चुम्बति पश्यति संश्लिष्यति पुलकमुकुलितैरङ्गैः ।
प्रियसङ्गाय स्फुरन्तीं वियोगिनी वाममाहुलतां ॥ ४०१
प्रविशसि न च निर्यातुम् जानासि व्याकुलत्वमात्तनुषे ।
बालक चेतसि तस्या चक्रव्यूहेऽभिमन्युरिव ॥ ४०२
पश्यानुरूपमिन्दिन्दिरेण माकन्द शेखरो मुखरः ।
अपिच पिचुमर्दमुकुले मौकुलि कुलमाकुलं पतति ॥ ४०३

प्रतिबिम्बसम्भृताननमादर्शं मुग्ध मम सखीहस्तात् ।
आदातुमिच्छसि मुधा किं लीलाकमलमोहेन ॥ ४०४

प्राचीनाचललीनो यथा शशी गगनमध्यमधिवसति ।
त्वां सखि पश्यामि तथा छायामिव सकलपक्ष्माणां ॥ ४०५

प्राङ्गणकोणेऽपि निशापतिः सन्तापं सुधामयो हरति ।
यदि मां रजनीश्वर इव स न विरहयति गेहपतिः ॥ ४०६

पतिपुत्रककृतमात्री स्वच्छायावीक्षणेऽपि या सभया ।
अभिसरति सुभग सा त्वां दलयन्ती कण्टकं तमसि ॥ ४०७

प्रतिभूः शुको द्विपक्षे दक्षः शृङ्गारसंकथा गुरुषु ।
पुरुषायितं यदस्तद बाले परिभाव्यतां दायः ॥ ४०८

परमोहनाय मुक्तो निबध्यते तदपि तव कटाक्षोऽयं ।
शिशिरस्येव कलितकणः प्रविशति हृदयं न निःसरति ॥ ४०९

प्रपदालम्बितभूमिं स्पृशन्ती प्रीतिभीतिमधुराक्षी ।
प्रियपीनांसनिवेशितचिबुकतया न पतिता सुतनुः ॥ ४१०

प्रातरुपेतैव मृषा वदतः सखि नास्य विद्यते व्रीडा ।
मुखलग्नयापि योऽसौ न लज्जते पश्य कालिकया ॥ ४११

पश्योत्तर स्तनूदरि फाल्गुनमासाद्य निर्जितविपक्षः ।
वैराटिरिव पतङ्गः प्रत्यानयनं करोति गवां ॥ ४१२

प्रमदवनं तव च स्तनशैलं मूलं गम्भीरसरसार्द्र ।
जयति निदाघनिरस्तशैत्यो दुर्गमयं श्रयति ॥ ४१३

प्रोञ्छति तवापराधं मानं मर्दयति निर्वृतिं हरति ।
सुरतं निर्हन्ति शपथा सुजागरदीर्घा निशा सुभग ॥ ४१४

प्रिय आयाते दूराद्भूत इव सङ्गमोऽभवत् पूर्व्वः ।
मामकृदितप्रसादाः पुनरासन्नपरसुरतार्दी ॥ ४१५

पूर्व्वमहीधरशिखरे तमः समासन्नमिहिरकरकलितं ।
शूलप्रोतं सरुधिरमिदमन्धकवपुरिवाभाति ॥ ४१६

परिवृत्तनाभि लुप्तत्रिवलि श्यामस्तनाग्रमलसाक्षि ।
बहुधवलजघनलेखं वपु र्न पुरुषायितं सहते ॥ ४१७

प्रारब्धनिधुवनेव स्वेदजलं कोमलाङ्गि किं वहसि ।
श्यामर्पयितुं नमिता कुसुमास्त्रधनुर्लतेव मधु ॥ ४१८

पुंसां दर्शय सुन्दरि मुखेन्दुमीषत्तृषामपाङ्गश्च ।
आयाजित इति रूढ़ा जनश्रुतिर्मे यशो भवतु ॥ ४१९

प्रसरतु शरत्त्रियामा जगन्ति धवलयतु धाम तुहिनांशोः ।
पञ्जरचकोरिकाणाम् कणिकाकलोऽपि न विशेषः ॥ ४२०

पतितेऽंशुके स्तनार्पितहस्तां तां निविड़जघनपिहितोरुं ।
नखपदविकलां फूत्कृतिशतधूतदीपां मनः स्मरति ॥ ४२१

प्रथमागत सोत्कण्ठा चिरचलितेयं विलम्बदोषेव ।
वध्नन्ति साङ्गरागाः पथि तरव स्तत्र समाधानं ॥ ४२२

परितः स्फुरितमहीधरमणिनिकरे केलितल्प इव शैले ।
काञ्चीगुण इव पतितः स्थितैकरत्नः फणी स्फुरति ॥ ४२३

प्रावृषि शैलश्रेणीनितम्बमुभ्भजसि दिगन्तरे भ्रमसि ।
चपलाम्तरवन किं तव वचनीयं पवनवश्योऽसि ॥ ४२४

प्रतिदिवसक्षीणदशः तवैष वसनाञ्चलोऽतिकरकृष्टः ।
भिजनायकमतिकृपनं कथयति कुग्राम इव विरलः ॥ ४२५

पथिक कथं चपलोज्ज्वलमम्बुदजलबिन्दुनिवहमविषह्यं ।
मयपुरकनकद्रवमिव शिवशरशिखिभावितं सहसे ॥ ४२६

पथिकं श्रमेण सुप्तं दरतला तरुणि सुमधुरच्छाया ।
व्यालम्बमानवेणिः सुखयसि शाखेव सारोहा ॥ ४२७

प्रददासि नापरासां प्रवेशमपि पीनतुङ्गजघनोरुः ।
या लुप्तकौशभारा यतो हृदि बहिरदृश्यासि ॥ ४२८

प्रात निंद्राति यथा यथात्मजा लुलितनिःसहैरङ्गैः ।
जामातरि मुदितमाना स्यथा तथा सादरा श्वश्रूः ॥ ४२९

प्रणयवलितया सकपटकोपकटाक्षैर्मया क्षतस्तब्धः ।
त्रासतरलो गृहीतः सहासरभसं प्रियः कण्ठे ॥ ४३०

प्रियदुर्नयेन हृदय स्फुटसि यदि स्फुटनमपि तव श्लाघ्यं ।
तत्कलि समये तल्पोत्क्षतस्य वसनाञ्चलस्येव ॥ ४३१

पवनोपनीतसौरभदूरोदकपूरपद्मिनीलुब्धः ।
अपरीक्षितस्वपक्षो गन्ता हन्ता पदं मधुपः ॥ ४३२

प्रेमलघुकृतकेशवचोभरविपुलपुलककुचकलसा ।
गोवर्द्धनगिरिगुरुतां मुग्धवधू र्निभृतमुपहसति ॥ ४३३

प्रियविरहनिःसहायाः सहजविपक्षाभिरपि सपत्नीभिः ।
रक्ष्यन्ते हरिणाक्ष्याः प्राणा गृहभङ्गभीताभिः ॥ ४३४

प्रकटयति रागमधिकं लपनमिदं वक्रिमाणमावहति ।
प्रीणयति च प्रतिपदं दूति शुकस्येव दयितस्य ॥ ४३५

प्रविशन्त्याः प्रियहृदयं बालायाः प्रबलयौवनव्याप्तं ।
नवनिशितदरतरङ्गितनयनमयेनासिना पन्थाः ॥ ४३६

प्रणयापराधरोषप्रसादविश्वासकेलिपाण्डित्यैः।
रूढप्रेमा क्रियते किमु बाला कुतुकमात्रेण ॥ ४३७

पूर्व्वैरेव विचित्रै र्गमनै र्जनितास्ति पूज्यता भवतः।
मुञ्च मदमस्य गन्धात् युवभिः कुञ्जरमपूज्यनीयोऽसि ॥ ४३८

प्रसभं प्रवेशितायां वासागारं कथञ्च न सखीभिः।
न शृणोतीव प्रातः सा निर्गममात्मसङ्केता ॥ ४३९

पूजा विना प्रतिष्ठां नास्ति न मन्त्रं विना प्रतिष्ठा च।
तदुभयविप्रतिपन्नः पश्यतु गीर्वाणपाषाणं ॥ ४४०

पूर्वाधिको गृहिण्यां बहुमानः प्रेम नर्म्म विश्वासः।
भीरधिकेयं कथयति रागं बालया विभक्तमिव ॥ ४४१

पुलकितकठोरपीवरकुचकलशाश्लेषवेदनाभिन्नः।
शम्भोरुपवीतफणी वाञ्छति मनयहं देव्याः ॥ ४४२

प्रिय आयाति दूरादिति या प्रीतिर्बभूव गेहिन्याः।
पथिकेभ्यः पूर्वागतइति गर्वात् सापि प्रतिशिखरा ॥ ४४३

पृष्ठं प्रयच्छ मा स्पृश दूरादपसर्प विहितवैमुख्यः।
त्वामनुधावति तरणि स्तदपि गुणाकर्षतरलेयं ॥ ४४४

प्रियाया कुङ्कुमपिञ्जरपाणिद्वयोजमाङ्कितं वासः।
प्रहितं मां याचत्याञ्जलिसहस्र करणाय शिखयति ॥ ४४५

पश्यातिनिर्द्दय कुलटाशोषित नैवेर्ष्यया न रोषेण।
दग्धममतोपतप्ता रोदिमि तव तानवं वीक्ष्य ॥ ४४६

प्राचीरान्तरितेयं प्रियस्य वदनेऽधरं समर्पयति।
प्राग्गिरिपिहिता रात्री सन्ध्यारागं दिनस्येव ॥ ४४७

परपतिनिर्दयकुलटासख नेर्ष्यया न शुचा न कोपेन ।
दग्धममतोपतप्ता रोदिमि तव तानवं वीक्ष्य ॥४४८

प्राङ्गण एव कदा मां श्लिष्यति मन्युकम्पितकुचकलशा ।
अंसनिषण्णमुखी सा स्नपयति वाष्पेण मम पृष्ठं ॥ ४४९

प्रेतैः प्रश्लथसत्वा साशङ्कैर्वीक्षिता स्खलद्ग्रासैः ।
चुम्बति मृतस्य वदनं भूतमुखोल्काचितं बाला ॥ ४५०

पिशुनः खलु सुजनानां खलमेव पुरो निधाय जेतव्यः ।
कृत्वा खरमात्मीयं जिगाय वाणं रणे कृष्णः ॥ ४५१

पिव मधुप बकुलकलिकां दूरे रसनाग्रमाधाय ।
अधरविलेपसमाप्ये मधुनि मुधा वदनमर्पयसि ॥ ४५२

प्रायेणैव म्लाना मलिनानामाश्रयत्वमुपायान्ति ।
कालिन्दीपुटभेदः कालियपुटभेदनं भवति ॥ ४५३

पश्य प्रियतनुविघटनभयेन शशिमौलि देहसंलग्ना ।
सुभगैकदैवतमुमा शिरसा भागीरथीं वहति ॥ ४५४

पथिकवधूजनलोचनवाष्पनदीमातृकेषु देशेषु ।
घनमण्डलमाखण्डलधनुषा कुण्डलितमिव विधिना ॥ ४५५

प्रतिवेशिविप्रबन्धुषु दूरात् कृच्छ्रागतोपि गेहिन्याः ।
अतिकेलिलम्पटतया दिनमेकमगोपि गेहपतिः । ४५६

परपट इव रजकीभि र्मलिनो भुक्तापि निर्दयं ताभिः ।
द्रव्यग्रहेण न शिना जघन्य मुक्तोऽसि कुलटाभिः ॥ ४५७

मुग्धेषिति लाक्षारुणशिरसि वयस्येन दयित उपहसिते ।
तत्कालकलितलज्जा पिशुनयति सखीषु सौभाग्यं ॥ ४५८

बन्धनभाजोऽमुष्याश्चिकुरकलापस्य मुक्तमानस्य ।
सिन्दूरितसीमन्तच्छलेन हृदयं विदीर्णमिव ॥ ४५९

बलमपि वसति मयीति श्रेष्ठिनि गुरुगर्वगद्गदं वदति ।
तज्जायया जनानां मुखमीक्षितमावृतस्मितया ॥ ४६०

बलवदनिलोपनीतस्फुटितनवाम्भोजसौरभो मधुपः ।
आकृष्यते नलिन्या नासानिक्षिप्तरज्जुरिव ॥ ४६१

बाणं हरिरिव कुरुते सुजनो बहुदोषमप्यदोषमिव ।
यावद्दोषं जाग्रति मलिम्लुचा इव पुनः पिशुनाः ॥ ४६२

बीडस्येव क्षणिको यद्यपि बहुवल्लभस्य तव भावः ।
भग्ना भग्ना भूरिव न तु तस्या विघटते मैत्री ॥ ४६३

भ्रमसि प्रकटयसि रदं करं प्रसारयसि तृणमपि श्रयसि ।
धिङ्मानं तव कुञ्जर जीवनं जुहोसि जठराग्नौ ॥ ४६४

भूतिमयं कुरुतेऽग्निः तृणमपि संलग्नमेनमपि भजतः ।
सैव सुवर्ण दशा ते शङ्के गरिमापराधेन ॥ ४६५

भवति निदाघे दीर्घे यथेह यमुनेव यामिनी तन्वी ।
दीपा इव दिवसा अपि तथा क्रमेण प्रथीयांसः ॥ ४६६

भजता महति स्नेहानले ऽर्पिता पथिक हेमगुटिकेव ।
तन्वी हस्तेनापि स्प्रष्टुमशक्ये न सा शक्या ॥ ४६७

भूतिलुलितैककुण्डलमुक्तं सितकाण्डघटमियं मुग्धा ।
पश्यन्ती निश्वासैः क्षिपति मनो रेणुपूरमिव ॥ ४६८

भवतालिङ्गि भुजङ्गी जातः किल भोगिचक्रवर्ती त्वं ।
कञ्चुकवनेचरीस्तनमभिलषतः स्फुरति ते लघिमा ॥ ४६९

भैक्षभुजो पल्लीपति रितिसुत सखधूस्त्वदृष्टेन ।
रचक जयसि यदेका शून्येश्वरसदसि सुखमसि ॥ ४७०

भोगाक्षमस्य रचां दृङ्मात्रेण कुर्वतोपि मुग्धस्य ।
वृद्धस्य प्रमदापि श्रीरपि भृत्योपभोगाय ॥ ४७१

भवितासि रजनीयेत्यध्वश्रमशान्तये पदं दधतीं ।
स बलाद् बलयितजङ्घां रथ्यां मां रहसि पातयति ॥ ४७२

भूषणतां भजतः सखि कषणविशुद्धस्य जातरूपस्य ।
पुरुषस्य च कनकस्य च युक्तो गरिमा सरागस्य ॥ ४७३

भस्मपरुषेऽपि गिरिशे स्नेहमयी त्वमुचितेन शुभयासि ।
मोघस्त्वयि जनवादो यदोषधिप्रस्थदुहितेति ॥ ४७४

भयपिहितं बालायाः पीवरमुरुद्वयं स्मरोन्निद्रः ।
निद्रायां प्रेमार्द्रः पश्यति निश्वस्य निश्वस्य ॥ ४७५

भ्रमरीव कोषगर्भे गन्धहृता कुसुममनुसरन्ती त्वां ।
अव्यक्तां कूजन्ती सङ्केतं तमसि सा भ्रमति ॥ ४७६

भ्रामं भ्रामं स्थितया स्नेहेतरपयसि तत्र तत्रैव ।
आवर्त्तपतितनौकायितमनया विनयमुपनीय ॥ ४७७

भ्रमयसि गुणमयि कण्ठग्रहयोग्यान् स्वमन्दिरोपेतान् ते ।
हालिकनन्दिनि तरुणान् कलुशिनो मेधिरज्जुरिव ॥ ४७८

भालनयनेऽग्निरिन्दुर्मौलौ गात्रे भुजङ्गमणिदीपाः ।
तदपि तमोमय एव त्वमीश्वरः प्रकृतिमतिशेतुम् ॥ ४७९

मधुमदवीतव्रीडा यथा लपति सख्यं बाला ।
तन्मूखमजातदन्तं सुधा तथा वल्लभः पिबति ॥ ४८१

मित्रैराशोच्य समं गुरु कृत्वा वदनमपि समारब्धः ।
अर्थः सतामिव हतो मुखवैलक्ष्येण मानोऽयं ॥ ४८२

मम शशिमुखि मनस्विनि करमर्पयतो ददासि पृष्ठमपि ।
यदि तदपि कमलवक्षोरिव मन्ये स्वस्य सौभाग्यं ॥ ४८३

मा स्पृश मानिनि सकुपितमिव भणितं व्यञ्जिता न व्रीडा ।
आलिङ्गितया सस्मितमुक्तमनाचार किं कुरुषे ॥ ४८४

मूलानि च निचुलानाम् हृदयानि च कुलवतीकुलटानां ।
मदिरमदिराप्रमत्ता गोदावरि किं विदारयसि ॥ ४८५

मलयद्रुमसाराणामिव धीराणां गुणप्रकर्षोऽपि ।
जड़समयनिपतितानामनादरायैव न गुणाय ॥ ४८६

मधुमथनमौलिमाले सखि तुलयसि किं मुधात्मना राधां ।
यत्तव पदमदसीयं सुरभयितुं सौरभोद्भेदः ॥ ४८७

मयि यास्यति कृत्वावधिदिनसङ्ख्यं चुम्बनं तथाश्लेषं ।
प्रिययानुशोचिता सा तावत् सुरतादमा रजनी ॥ ४८८

मृगमदनिदानमटवीकुञ्जममपि क्षपकवाटिका वहति ।
हट्टविलासिनि भवती परमेका पौरसर्वस्वं ॥ ४८९

मधुदिवसेषु भ्राम्यन् यथा यथा विशति मानसं भ्रमरः ।
सखि लोहकण्टकनिभ स्तथा तथा मदनविशिखोऽपि ॥ ४९०

मयि चलिते तव मुक्ता दृशः सुताराः प्रिये सपानीयाः ।
सत्वममूलाः सद्यः प्रयान्ति मम हृदयहारत्वं ॥ ४९१

मुग्धे मम मनसि शराः स्मरस्य पञ्चापि सततं विलग्नाः ।
मङ्क्षु स्तनगुटिकाद्वयमर्पितमेतेन तव हृदये ॥ ४९२

मधुमथनवदनविनिहितवंशीसुषिरानुसारिणो रागाः ।
हन्त हरन्ति मनो मम कलिकाग्निशिखाः स्मरस्येव ॥ ४९२
महतोः सुवृत्तयोः सखि हृदयग्रहयोग्ययोः समुच्छ्रितयोः
सज्जनयोः स्तनयोरपि निरन्तरं सङ्गतं भवति ॥ ४९३
मम वारितस्य बहुभि र्भूयोभूयः स्वयञ्च भावयतः ।
जातो दिशैव तस्यां सखे न निवर्त्तते मोहः ॥ ४९४
मग्नो नमद्गारसे हृतोसि वीचिलोचनक्षेपैस्त्वं ।
यद्गाध्यसे तरुवरभ्रष्टो भ्रंशोपि ते श्लाघ्यः ॥ ४९५
मेनामुल्लासयति स्मेरयति हरिं गिरिशं विमुखयति ।
स्मृतकरवन्ध्र्यविलम्बः परिणयने गिरिशकरकम्पः ॥ ४९६
मधुगन्धि घर्मतिलकं स्खलदुक्ति घूर्णदरुणविलोकनञ्च ।
तस्याः कदाधरार्हतमाननमवधूय पास्यामि ॥ ४९७
मेदिन्यां तव निपतति नैव पदं बहुवल्लभेति गर्व्वेण ।
आश्लिष्य के न तरुणै स्तरीव वसनै र्विमुक्तासि ॥ ४९८
मूले निसर्गचतुरं समर्पयन्तो रसं पुरो विरसाः ।
इक्षव इव परपुरुषा विविधेषु रसेषु विनिधेयाः ॥ ४९९
महति स्नेहे निहितः कुसुमं बहुदत्तमर्चितो बहुशः ।
वक्र स्तदपि शनैश्चरग्रह इव दुष्टग्रहो दयितः ॥ ५००
मा शवरतरुणि पीवरवक्षोरुहयो र्भरेण भज गर्व्वं ।
निर्मोकैरयशोभा ययो र्भुजङ्गीभिरुन्मुक्तैः ॥ ५०१
मम कुपितायाः श्यामायां भुमात्रालिङ्ग्य सखि मिलितपुलकः
[illegible] करोति किं नैष मामपरुषं ॥ ५०२

मुषित इव क्षणविरहे रिपुरिव कुसुमेषुकेलिसंग्रामे ।
दास इव श्रमसमये भजन्नताङ्गीं न तृप्यामि ॥ ५०३
मुञ्चसि किं मानवतीं व्यवसायद्विगुणरोषवेगेति ।
स्नेहभवः पयसाग्निः सान्त्वेन च रोष उच्छ्वसति ॥ ५०४
मलयजमपसार्य घनं वीजनविघ्नं विहाय बाहुभ्याम् ।
स्मरसन्तापादगणितनिदाघमालिङ्गते मिथुनं ॥ ५०५
महतोपि विश्वासान् महाशया दधति नाल्पमपि लघवः ।
स तृणोऽद्रीनुदधिं निदाघनद्यो न भेकमपि ॥ ५०६
मधुधारेव न मुञ्चसि मानिनि रुषापि माधुरीं वचसां ।
कृतमुखभङ्गापि रसं ददासि मम सरिदिववाम्भोधेः ॥ ५०७
मदनाकृष्टधनुर्ज्यास्वनैरिव गृहिणी पथिकतरुणानां ।
वीणातन्त्रीक्वाणैः केषां न विकल्पते चेतः ॥ ५०८
मम भयमस्याः कोपो निर्दोषोऽस्या ममापि मन्दाक्षम् ।
यातं क्व चान्तरिक्षे स्मितसम्वृतिनमितकन्धरयोः ॥ ५०९
मुक्ताम्बरैव धावतु निपततु भुवि सा सखे त्रिपथगास्तु ।
इयमेव नर्मदा मम वंशप्रभवानुरूपरसा ॥ ५१०
मृगमदलेपनमेतत् नीलनिचोलैरनिशि निषेवस्व ।
कालिन्द्यामिन्दीवरमिन्दिन्दिरसुन्दरीव सखि ॥ ५११
मम सख्या नयनपथे मिलितः शक्तो न कश्चिदपि चलितुम् ।
पतितोसि पथिक विषमे घट्टकुटीयं कुसुमकेतोः ॥ ५१२
महता प्रियेण निर्मितमप्रियमपि सुभग सह्यतां याति ।
सुतसम्भवेन यौवनविनाशनं न खलु भेदाय ॥ ५१३

मानग्रहकोपादनु सा दयितान्येव रोषरोषम ।
काञ्चनमयी विभूषा दाहाञ्चितशुद्धभावेव ॥ ५१४

यूनः कण्ठकिविटपानिवाञ्चलग्राहिणस्त्यजन्ती सा ।
वन इव पुरेपि विचरति पुरुषं त्वामेव जानन्ती ॥ ५१५

सुधासूपगताः स्त्रीः विबुधा वाङ्मात्रपाठवेन वयं ।
अन्तर्भवति भवत्स्वपि माभक्त स्तत्र विख्यातं ॥ ५१६

यत्र न दूती यत्र स्निग्धा न दृशोपि निपुणया निहिताः ।
न गिरोऽद्यापि व्यक्तीकृतः स भावोऽनुरागेण ॥ ५१७

या नीयते सपत्न्या प्रविश्य यां वर्जिता भुजङ्गेन ।
यमुनाया इव तस्याः सखि मलिनं जीवनं मन्ये ॥ ५१८

यस्मिन्नयशोपि यशो स्त्री श्रियो मानएव दौःशील्यं ।
लघुता गुणज्ञता किं नवो युवा न सखि तेऽद्य दृष्टः ॥ ५१९

यद् वीक्ष्यते खलानां भद्रास्यं क्वापि दैवयोगेन ।
काकानामिव शौक्ल्यं तदपि न चिरादनर्थाय ॥ ५२०

यत् खलु खलमुखहुतवहविनिहितमपि शुचिमेव परमेति ।
तदमलशौचमिवांशुकमिह लोके दुर्लभं प्रेम ॥ ५२१

यत्रावधिमर्थयते पाथेयार्थं ददाति सर्वस्वं ।
तेनाऽनयातिदारुणशङ्कामारोपितं चेतः ॥ ५२२

यूनामीर्ष्यावैरं वितन्वता तरुणि वक्रचरितेन ।
तव जघनेनाकुलिता निखिला पल्ली खलेनेव ॥ ५२३

यावज्जीवनभावी तुल्याशययोर्मिताप्तनिर्भेदः ।
नद्योरिवैष यूनोः सङ्गो रसमधिकमावहतु ॥ ५२४

यान्निहितां शेखरयसि मालां सा पातु शठ भवन्तमिति ।
प्रहरन्तीं शिरसि पदा स्मरामि तां सर्वगुणकोपां ॥ ५२५

यौवनगुप्तिं पत्यौ बन्धुषु मुग्धत्वमार्ज्जवं गुरुषु ।
कुर्वाणा हलिकबधूः प्रणम्यते व्याजतो युवभिः ॥ ५२६

यो गुरुभि र्न न मित्रै र्न विवेकैरेव नापि रिपुहसितैः ।
नियमितः पूर्वैः सुन्दरि स विनीतत्वं त्वयानीतः ॥ ५२७

यन्मूलमार्द्रमुदकैः कुसुमं प्रतिपर्व फलभरः परितः ।
द्रुम तन्नाप्यसि वीचीपरिचयपरिणाममविचिन्त्य ॥ ५२८

यस्याङ्के स्मरसङ्गरविश्रान्तिप्रोञ्छना सखी स्वपिति ।
स वहतु सुभगाभिमानं मदनधनुर्वल्लिचोलइव ॥ ५२९

यदि दानगन्धमात्राद् वसन्ति समच्छदेपि दन्तिन्यः ।
किं मदकलङ्कमलिनां करी कपोलस्थलीं वहति ॥ ५३०

यदवधिविल्वबसान्द्रा विकासितकुसुमोत्करा शरश्रेणी ।
पीतांशुकप्रियेयं तदवधि पल्लीपतेः पुत्री ॥ ५३१

यमुना तरङ्गतरलं न कुवलयं कुसुमहेले न सुलभं ।
यदि सौरभानुसारी झङ्कारी भ्रमति न भ्रमरः ॥ ५३२

ये शिरसि विनिहिता अपि भवन्ति न सखे समानसुखदुःखाः ।
चिकुरा इव ते बाला एव जरायां पाण्डुभावेपि ॥ ५३३

यन्नियतं निर्गुणं यन् न वंशजं यस्य नित्यनिर्वाणं ।
किं कुम्भ स्तन्निहितं धनुस्सदे देवराजेन ॥ ५३४

या दाक्षिणा तुमस्यामदक्षिणो दक्षिण स्तदितरस्यां ।
जलधि मध्यस्थः समवेलयोः सङ्गमाचरति ॥ ५३५

युगपज्जघनोरस्तनपिधानमधुरे त्रपाश्रितार्द्रमुखि ।
लोलाक्षि नैष पवनो विरमति तव वसनपरिवर्त्ती ॥ ५३६

यद्यपि बद्धः शैले श्येश्यपि गिरिमथनमुषितसर्वस्वः ।
तदपि परिभीतभूधररक्षायां दीक्षितो जलधिः ॥ ५३७

यस्यां दिशि यस्य तरी श्यामेत्य शिखां यतोन्नतग्रीवः ।
दृष्ट्वा सुधांशुलेखां निशां चकोरस्तथा नयति ॥ ५३८

यत्रार्ज्जवेन लघुता गरिमाणं यत्र वक्रिमा तनुते ।
छन्दःशास्त्र इवास्मिन् लोके सरलः खले विमृशसि ॥ ५३९

यन्नोपकारकं यत् न भूषणं यत् प्रकोपमातनुते ।
गुरुणापि तेन कार्य्यं पदेन किं श्रीपदेनेव ॥ ५४०

यूथपते तव कश्चित् न हि मानस्यानुरूप इह विटपी ।
प्रेरय दिनं निदाघद्राघीयः क्व खलु ते छाया ॥ ५४१

यद्यपि चन्दनविटपी फलपुष्पविवर्ज्जितो विधिना ।
निजवपुषैव तथापि स हरते सन्तापमपरेषां ॥ ५४२

राज्याभिषेकसलिलक्षालितमौलेः कथासु कृष्णस्य ।
गर्व्वभरमन्थराक्षी पश्यति पदपङ्कजं राधा ॥ ५४३

रतिकलहकुपितकान्ता करविकुराकर्षमुदितटङ्कनार्थं ।
भवति भवनं तदन्य प्राग्वंशः पर्णशाला वा ॥ ५४४

रोगी राजायत इति जनवादं सत्यमद्य कलयामि ।
आरोग्यपूर्व्वकं त्वयि तल्पोपान्तागते सुभग ॥ ५४५

रहस्वरसप्रसरस्यालिभिरग्रेसरं प्रियं प्रति मे ।
त्रिस्रोतस इव निम्नं प्रति रागस्य द्विगुण आवेगः ॥ ५४६

रूपमिदं कान्तिरसावयमुत्कर्षः सुवर्णरचनेयं ।
दुर्गतमिलिता ललिते भ्रमसि प्रतिमन्दिरद्वारं ॥ ५४७
रचिते निकुञ्जपत्रै भिक्षुकपात्रे ददाति सावज्ञं ।
पर्य्यूषितमपि सुतीक्ष्णश्वासकदुष्टं वधूरन्नं ॥ ५४८
रचति न सखि निजस्थितिमलघुः स्थापयति नायकः स यथा ।
तिष्ठति तथैव तद्गुणविद्धेयं हारयष्टिरिव ॥ ५४९
राजसि कृशाङ्गि मङ्गलकलशी सहकारपल्लवेनेव ।
तेनैव चुम्बितमुखी प्रथमाविर्भूतरागेण ॥ ५५०
रूपगुणहीनभार्य्या भवति लघुधूलिरनिलचपलेव ।
प्रथयति पृथुगुणने या तरणी तरणीव गरिमाणं ॥ ५५१
रागे नवे विजृम्भति विरहक्रममन्दमन्दाक्षे ।
सखितसलज्जभीचितमिदमिष्टं सिद्धमाचष्टे ॥ ५५२
रोषोऽपि रसवतीनां न कर्कशो नो चिरानुबन्धी वा ।
वर्षाणामुपलोऽपि हि सुस्निग्धः क्षणिककल्पश्च ॥ ५५३
रोदनमेतदन्थं सखि किं बहुरपि ममार्थः ।
स्वप्नेनेव हि विहितो नयनमनोहारिणा तेन ॥ ५५४
रोषेणैव मया सखि वक्रोग्रन्थिलोऽपि कठिनोऽपि ।
ऋजुतामानीतोऽसौ सद्यः स्वेदेन वंशद्दव ॥ ५५५
रजनीमियमुपनेतुं पितृप्रसूः प्रथममुपतस्थे ।
रञ्जयति स्वयमिन्दुं कुनायकं दुष्टदूतीव ॥ ५५६
लग्नापि क्षणवर्त्मनि सुस्निग्धवर्त्ति हन्त दग्धासि ।
अयमखिलनयनसुभगे न भुक्तमुक्तां पुनः स्पृशति ॥ ५५७

लक्ष्मीः श्रियति गुणानमून् पुन दुर्गति विधूनयति ।
पूर्णा भवति सुवृत्त स्तुपारत्वचिरपचपे वक्षः ॥ ५५८

लतातन्तुनिरुद्धद्वारः शून्यालयः पततृपतगः ।
पथिके तस्मिन्नचलपिहितमुखो रोदितीव सखि ॥ ५५९

लग्नं जघने तस्याः सुश्रिखाले कलितकरिकरक्रीड़ं ।
वप्रे मग्नं द्विपमिव शृङ्गारस्त्वां विभूषयति ॥ ५६०

चिह्नं न मुखं नाग्रं न पचती न चरणाः परागेण ।
अस्पृशतेव नलिन्या विदग्धमधुपेन मधु पीतं ॥ ५६१

लग्नं जघने तस्याः शुष्यति नखलच्म मानसं मम च ।
भुक्तमविषदमवेदनमिदमधिकसरागसाबाधं ॥ ५६२

लज्जयितुमखिलगोपी निपीतमनसं मधुक्षितं राधा ।
अग्रेव पृच्छति कथां शम्भो दयितार्द्ध तुष्टस्य ॥ ५६३

लक्ष्मीनिःश्वासानिलपिण्डीकृतदुग्धजलधिसारभुजः ।
चीरनिधितीरसदो यशांसि गायन्ति राधायाः ॥ ५६४

लीलागारस्य बहिः सखि चरणातिथौ मयि प्रियया ।
प्रकटीकृतः प्रसादो दत्त्वा वातायने व्यजनं ॥ ५६५

वर्णच्युति र्न ललाटे न लुलितमङ्गं न चाधरे दंशः ।
उत्पलमहारि वारिचर न स्पृष्टमुपायचतुरेण ॥ ५६६

व्यालम्बिचूर्णकुन्तलचुम्बितनयनाञ्चले मुखे तस्याः ।
वाष्पजलबिन्दवोऽलकमुक्ता इव पान्थ निपतन्ति ॥ ५६७

विहितबहुमानमौना सखीप्रबोधे र्थ्यदप्रमा तनुते ।
रागाक्तिका कुयाच्आ लघुवीथ्या हरसि पुनरेषा ॥ ५६८

विनयविनता दिनेऽसौ निशि मदनकलाविलासलसदङ्गी ।
निर्वाणज्वलितौषधिरिव निपुणप्रत्यभिज्ञेया ॥ ५६९
विषमशरविशिखभिन्ना पल्लीशरणं यदेकमभिलषसि ।
तस्य तव च्छायेव स्वीया जायाऽपि भयहेतुः ॥ ५७०
विविधायुधव्रणार्बुदविषमे वक्षःस्थले प्रियतमस्य ।
शौरपि वीरवधूरपि गर्वोत्पुलका सुखं स्वपिति ॥ ५७१
वैमुख्येऽपि विमुक्ताः शरा इवान्याययोधिनो वितनोः ।
भिन्दन्ति पृष्ठपतिताः प्रियहृदयं मम खरश्वासाः ॥ ५७२
व्यसनमशुना समेतः खेदो मदिराक्षि दशनवसने ते ।
तव वसुधैकसारं शोभिनि यत् किमपि नाद्राक्षं ॥ ५७३
बालाविलासबन्धादप्रभवम् मनसि चिन्तयन् पूर्व्वं ।
सभावाभिलाषं तां गृहिणीमेवानुशोचामि ॥ ५७४
वीजयतीरन्योन्यं यूनो वियुतानि सकलगात्राणि ।
सम्मिलितेव श्रोणी परं निदाघेऽपि न विघटिता ॥ ५७५
व्यावोषं मानिन्या स्तमो दिवः कासरं कलमभूमिः ।
हृदमलिव्र नलिन्याः प्रभातसन्ध्याऽपसारयति ॥ ५७६
वक्षसि विजृम्भमाणे स्तनभिन्नं त्रुटति कञ्चुकं तस्याः ।
पूर्व्वदयितानुराग स्तव हृदि न मनागपि त्रुटति ॥ ५७७
व्यक्तिमवेक्ष्य तदन्यां तस्यामेवेति विदिताधुना सा ।
हर्म्यं हरिमुखमिव त्वामुभयोः साधारणं वेत्ति ॥ ५७८
व्यजनस्येव समीपे गतागतैस्तापहारिणी भवतः ।
मञ्जुलमिव चञ्चलतां मम सख्याः मापितं चेतः ॥ ५७९

वितरन्ती रसमन्त र्मनाद्र्भावं तनोषि तनुगात्रि।
अन्तःसलिला सरिदिव निवसति हृदि बहिरदृश्यासि॥ ५८०
विहितविविधानुबन्धो मानोन्नतयावधीरितो मानी।
लभते कुतः प्रबोधं स जागरिर्त्त्वेव निद्राणः॥ ५८१
ब्रीड़ाविमुखीं वीतस्नेहामाशङ्क्य काकुवाङ्मधुरे।
प्रेमार्द्रं सापराधं दिशति दिशं व्रजभि बाला॥ ५८२
वाष्पाकुलं प्रलपतो गृहिणि निवर्त्तस्व कान्त गच्छेति।
यातं दम्पत्यो र्दिनमनुगमनावधि सरस्तीरे॥ ५८३
वक्षःशायिनि सान्द्रश्वासे वाङ्मात्रसुभटे घनघर्म्मे।
सुतनु ललाटनिवेशितललाटिके तिष्ठ विजितासि॥ ५८४
विचरति परितः कृष्णे राधायां रागचपलनयनायां।
दशदिग्विधविशुष्कं विशिखं विदधाति कुसुमधनुः॥ ५८५
वीक्ष्यैव वेत्ति पथिकः पीवरबहुवायसं निजारामं।
सौन्दर्य्यैकनिधेरपि दयितायाश्चरितमविचलितं॥ ५८६
विमुखे चतुर्म्मुखे श्रितवति चानीशभावमीशेऽपि।
मग्नमहीनिस्तारे हरिः परं स्तब्धरोमाभूत्॥ ५८७
वापीकच्छे वासः कण्टकव्रतयः सजागरा भ्रमराः।
केतकविटप श्रिमैतैर्नन्नु वारय मञ्जरीगन्धं॥ ५८८
विचलसि मुग्धे विधृता यथा विशसि हृदयमदयम्बे।
शक्तिः प्रसूनधनुषः प्रकम्पलक्ष्यं स्पृशन्तीव॥ ५८९
विहितासमशरसमरो जितगाङ्गेयच्छविः कृताटोपः।
पुरुषायितो विराजति देह स्तव सखि शिखण्डीव॥ ५९०

वृतिविवरनिर्गतस्य प्रमदाविम्बाधरस्य मधु पिबति ।
अवधीरितपीयूषः स्पृहति देवाधिराजोऽपि ॥ ५९१

वासितमधुनि वधूनामवतंसे मौलिमण्डने यूनां ।
विलसति सा पुरकुसुमे मधुमेपीव वनप्रसूनेऽपि ॥ ५९२

व्रीडाप्रसरः प्रथमं तदनु च रसभावपुष्टचेष्टाग्रे ।
रजनीविनिर्गमादनु तटीव दयिता गनो हरति ॥ ५९३

वाससि हरिद्रयेव त्वयि गौराङ्ग्या निवेशितोरागः ।
पिशुनेन सोऽपनीतः सहसा पतता जलेनेव ॥ ५९४

विष्वग्विसारिसौरभरागान्धव्याधबाधनीयस्य ।
क्वचिदपि कुरङ्ग भवतो नाभीमादाय न स्थानं ॥ ५९५

वटकुटजशालशाल्मलिरसालबहुवारसिन्धुवाराणां ।
अस्ति भिदा मलयाचलसम्भवसौरभ्यसाम्येपि ॥ ५९६

विनिहितकपर्दकोटिं चापलदोषेण शङ्करं त्यक्त्वा ।
वटमेकमनुसरन्ती जाह्नवि लुठसि प्रयागतटे ॥ ५९७

वेद रजनी चतुर्णां प्रहराणां सङ्गमं वियोगञ्च ।
चरणानामिव कूर्म्मो सङ्कोचमपि प्रसारमपि ॥ ५९८

वृतिविवरेण सरन्ती सुभग त्वामीक्षितुम् सखीदृष्टिः ।
हरति युवहृदयपञ्जरमध्यस्था मन्मथेषुरिव ॥ ५९९

विपणितुलासामान्ये मा गणयेनं निरूपणे निपुणां ।
धर्म्मधरोऽसावधरीकरोति गुरुमुपरि नयति लघुं ॥ ६००

वासरगम्यमनूरोरम्बरमवनी च वामनैकपदं ।
जलधिरपि पोतलङ्घ्यः सतां मनः केन कलयामि ॥ ६०१

विततमोमसिलेखालम्बोत्सङ्गस्फुटाः कुरङ्गाक्षि।
पत्राक्षरनिकरा इव ताराप्रकरा विराजन्ति॥ ६०२

वपुषा भुजङ्गसङ्गमसहेन तव तरुणि गुरुनितम्बेन।
न क्षुभ्यति गम्भीरः को जलनिधि मन्दरेणेव॥ ६०३

शिशिखाङ्गभङ्गिषु गुरु नूतनशिष्यां मनोभवाचार्य्यः।
वेत्रलतयेव बालां तन्वि नर्त्तयति रतलीला॥ ६०४

विपरीतमपि रतं ते स्रोतो नद्या इवानुकूलमिदं।
तटतरुमिव मम हृदयं समूलमावेगतो हरति॥ ६०५

वैभवभाजां दूषणमपि भूषणपक्ष एव निक्षिप्तं।
शुभमाश्रमनामधर्म्मं द्विषश्च मृगयन्ति काणादाः॥ ६०६

वक्राः कपटस्निग्धा मलिनाः कर्णान्तिके प्रसज्जन्तः।
कं वञ्चयन्ति न सखे खलाश्च गणिकाकटाक्षाश्च॥ ६०७

विद्युज्ज्वालावलयितजलधरपिठरोदराद्विनिर्यांति।
विषदोदनद्युतिमुषः प्रेयसि पयसा समं करकाः॥ ६०८

व्यजनादिभिरुपचारैः किं मरुपथिकस्य गृहिणि विहितैर्मे।
तापस्त्वदूरुकदलीद्वयमध्ये शान्तिमयमेति॥ ६०९

विन्ध्याचल इव देह स्तव त्रिविधावर्त्तनर्मदानितम्ब।
स्थगयति गतिं कुचैरपि संभावित रविरथस्तम्भः॥ ६१०

वैगुण्यमपि हि महतां विनिर्मितं भवति कर्म शोभायै।
दुर्व्वहनितम्बमन्थरमपि हरति नितम्बिनीनृत्यं॥ ६११

वीक्ष्य सतीनां गणने रेखामेकां तया स्वनामाङ्कां।
सन्तु युवानो हसितुम् स्वयमेवापारि नाचरितुम्॥ ६१२

दृतिभञ्जनगञ्जनसह निकामसुद्दाम लङ्घितारास ।
परवाटीशतलम्पट दुष्टवृष स्मरसि गेहमपि ॥ ६१३
वंशावलम्बनं यद् यो विस्तारो गुणस्य याऽवनतिः ।
यज्जालस्य खलस्य च निजाङ्गसुप्तप्रणाशाय ॥ ६१४
वक्षःस्थलसुप्ते मम सुखमुपधातुम् न मौलिमभिलषसि ।
पीनोत्तुङ्गस्तनभरदूरीभूतं रतश्रान्ते ॥ ६१५
वदनव्यापारान्त भीवादनुरक्तमालयन्ती त्वं ।
दूति सतीनां सार्थं तस्य भुजङ्गस्य दंष्ट्रासि ॥ ६१६
श्रीरपि भुजङ्गभोगे मोहेन विघ्नेन स्थापिता येन ।
सोऽपि हरिः पुरुषो यदि पुरुषा इतरेऽपि किं कुर्मः ॥ ६१७
शङ्के या स्थैर्य्यमयी स्लथयति बाहू मनोभवस्यापि ।
दर्शशिलामिव भवतीं कातर स्तरुणो विचालयति ॥ ६१८
शार्दूलनखरभङ्गुरकठोरतरजातरूपवचनोसि ।
बाणानामपि बाला सा हत्या स्त्वमपि हृदि वससि ॥ ६१९
श्रुतएव श्रुतिहारिणि रागोत्कर्षेण कण्ठमधिवसति ।
गीत इव त्वयि मधुरे करोति नार्थग्रहं सुतनुः ॥ ६२०
श्रीश्रीफलेन राज्यं तृणराजेनाल्पसाम्यतः प्राप्तं ।
त्वत्कुचयोः सम्यक् साम्याद् गतो घट चक्रवर्त्ति त्वं॥६२१
श्रोणी भूमावङ्के सुतो भयं मनसि भूजे मौलिश्च ।
गूढश्वासो वदने सुरतमिदश्च तृणं त्रिदिवं ॥ ६२२
श्लिष्यन्निव चुम्बन्निव पश्यन्निव चोल्लिखन्निवादृतः ।
दृष [illegible] [illegible] [illegible] सख्या जघनं ॥ ६२३

शिरसि च चरमद्वारं प्रशाम नि:सरन्त्यां स ते तदपि।
चक्राङ्कितो भुजङ्गः कालिय इव सुमुखि कालिन्द्याः॥ ६२४
शोच्येव सा कृशाङ्गी भूतिमयी भवतु गुणमयी नापि।
स्नेहैकव्ययिभवता मुक्ता दीपेन वर्त्तिरिव॥ ६२५
शुक इव दारुशलाकापञ्जरमनुदिवसशङ्कमानो मे।
कृन्तति दयिताहृदयं शोकः स्मरविशिखतीक्ष्णमुखः॥ ६२६
श्रुत्वाकस्मिकमरणं शुकयून: सकलकौतुकैकनिधे:।
शान्तो गृहिणीविनयव्यय आगत्यैव पथिकेन॥ ६२७
शीलितभुजङ्गभोगा क्रोडे नाभुग्नतापि कृष्णेन।
अचलेव कीर्त्त्यते भूः किमशक्यं नाम वसुमत्याः॥ ६२८
श्यामा विलोचनहरा बालेयं मनसि हन्त सञ्जन्ती।
लुम्पति पूर्वकलत्रं धूमलता भित्तिचित्रमिव॥ ६२९
शतशो गतिमार्त्तिं शतशः कण्ठावलम्बनं शतशः।
शतशो यामीति वचः स्मरामि तस्य प्रवासदिने॥ ६३०
श्रुतपरपुष्टरवाभिः पृष्टो गोपीभिरभिमतं कृष्णः।
शंसति वंशस्वनितैः स्तनविनिहितलोचनोऽभिमतं॥ ६३१
शङ्करशिरसि निवेशितपदाऽहमिति मा मुदं वहेन्दुकले।
फलमेतस्य भविष्यति तव चण्डीचरणरेणुरजा॥ ६३२
शाखिशिखरे समीरणदोलायितनीडनिर्वृतं वसति।
कर्मैकशरणमगणितभयमशिथिलकेलि खगमिथुनं॥ ६३३
शुक सुरतसमरनारद हृदयरहस्यैकसारसर्वज्ञ।
गुरुजनसमक्षमूक प्रसीद जम्बूफलं खाद॥ ६३४

शिरसा वहसि कपर्दं बद्धं दयितेव रजतजर्जरवशि ।
अस्थापुरःसराणं भजतस्तव वेत्ति कस्तत्त्वं ॥ ६३५
शीतल्येव तुषेव श्वेताम्बकलेव दूरदृश्यासि ।
दुष्टभुजङ्गपरीता त्वं केतकि न खलु नः स्पृश्या ॥ ६३६
अवचोयनीतगुणया समर्पयन्त्या प्रणम्य कुसुमानि ।
मदनधनुर्गुणतयेव त्वया वधं दूति नीतास्मि ॥ ६३७
शाखोटक शाखोटज वैखानसकरदपूज्य रट सुचिरं ।
सादरपदमिह गणकः प्रमाणपुरुषो भवानेकः ॥ ६३८
शिशिरे शोषमशान्ते स्तवान्यपाणिग्रहं प्रयाताया: ।
मदनाग्निपुत्रिकाया इवाङ्गशोभा कदर्थयति ॥ ६३९
शैथिल्येन कृता अपि भर्तुः कार्श्यं त्यजन्ति न सुवृत्ताः ।
शलिनाकृष्टे पाणौ वलयाः कूजन्ति धावन्ति ॥ ६४०
षट्चरणकीटजुष्टं परागशुष्कोषमायुधं त्यक्त्वा ।
त्वां मुष्टिमेयमध्यामधुना शक्तिं स्मरो वहति ॥ ६४१
सा दिवसशान्त्ययोग्यव्यपदेशात्तस्य केवलं गृहिणी ।
द्वितिये दिवसे परा तिथिरिव सेव्या निशि त्वमसि ॥ ६४२
स्तननूतननखलेखालम्बी तव घर्मबिन्दुसन्दोहः ।
आभाति षट्सूत्रे प्रविशन्निव मौक्तिकप्रसरः ॥ ६४३
सौभाग्यगर्वमेका करोतु यूथस्य भूषणं करिणी ।
शुण्डार्धमितयोर्या मदाम्भसो मध्यमधिवसति ॥ ६४४
सचरणमोड़ानुमितत्वमौलिरुजाऽपनीतमातृसख्या ।
अपराह्न सुभग त्वां स्वयमियमनुनेतुमायाता ॥ ६४५

र्दृढमयान् पीडयतः किं चक्रेणापि तैलकारस्य ।
चालयति पार्थिवानपि यः स कुलालः परं चक्री ॥ ६४६

सरले न वेद भवती बहुभङ्गां बहुरसां बहुविवर्त्तां ।
गतिमसतीनेत्राणां प्रेम्णां स्रोतस्वतीनाञ्च ॥ ६४७

सखि मध्याह्नद्विगुणचणुमणिकरश्रेणीपीडिता छाया ।
मज्जितुमिवालवाले पतति तरुमूलमाश्रयति ॥ ६४८

सखि शृणु मम प्रियोऽयं गेहं येनैव वर्त्मनायाति ।
तदपरग्रामनदीः पृच्छति स ममागतानन्यान् ॥ ६४९

सायं रविरनलमसौ मदनशरं स च वियोगिनीचेतः ।
इदमपि तमःसमूहं सोऽपि नभो निर्भरं विशति ॥ ६५०

स्मरसमरमथपूरितकम्बुनिभद्विगुणपीनगलगोलः ।
शीर्षप्रासादोपरि जिगीषुरिव कलरवः क्वणति ॥ ६५१

चुरदधरमविरताश्रुनिरोधोत्कम्पिकुचमिदं रुदितं ।
जानूपनिहितहस्तन्यस्तमुखं दक्षिणप्रकृतेः ॥ ६५२

स्वयमुपनीतैरशनैः पुष्णन्ती नीडनिवृत्तं दयितं ।
सहजप्रेमरसज्ञा सुभगा गर्वं वकी वहतु ॥ ६५३

स्वरसेन बध्नतां करमादाने कण्ठोत्कारै स्फुटतां ।
पिशुनानां पनसानां कोषीभोगोऽथ परिणामः ॥ ६५४

सौभाग्यं दाक्षिण्यान् नेत्युपदिष्टं हरेण तरुणीनां ।
वामार्द्धमेव देव्याः स्ववपुः शिल्पे निवेशयता ॥ ६५५

स्थलकमललीलावृता क्रोडस्थितैकचरणेन सा ।
विश्वासयति नलिन्याः कूले विकण्ठीका सफरं ॥ ६५६

मनसपदमतिगौरं नाभीमूलं निरंशुकं कृत्वा ।
अनया सेविततपोवन त्वं किं कृतमलयभ्रगुपातः ॥ ६५७
सर्वाङ्गमर्पयन्ती लीला सुप्तं श्रमेण शय्यायां ।
अलसमपि भाग्यवन्तं भजते पुरुषायितेव श्रीः ॥ ६५८
सुभग स्वभवनभित्तौ भवता सम्मृद्य पीड़िता सुतनुः ।
सा पीड़येव जीवति दधती वैद्येषु विद्वेषं ॥ ६५९
सा गुणमयी स्वभावस्वच्छा सुतनुः करग्रहायत्ता ।
भ्रमिता ग्रहुमन्त्रविदा भवता काश्मीरमालेव ॥ ६६०
सव्रीड़स्मितसुभगे स्पृष्टास्पृष्टेव किञ्चिदपयान्ती ।
अपसरसि सुन्दरि यथा तथातथा स्पृशसि मम हृदयं ॥ ६६१
सखि सुखयत्यवकाशप्राप्तः प्रेयान् यथा तथा न गृही ।
वातादवारितादपि भवति गवाक्षानिलः शीतः ॥ ६६२
सन्ततमरुणमुखी सखि निगिरन्ती गरलमिव गिरां गुम्फं ।
अविगणितौषधिमन्त्रा भुजङ्गि रक्तं विरञ्जयसि ॥ ६६३
सुदिनं तदेव यत्र स्मारंस्मारं वियोगदुःखानि ।
आलिङ्गिता सा गाढ़ं पुनः पुनर्यामिनीप्रथमे ॥ ६६४
सान्तर्भयं भुजिष्या यथा यथा चरति समधिकां सेवां ।
साशङ्कसेर्ष्यसभया तथा तथा गेहिनी तस्याः ॥ ६६५
सुन्दरि दर्शयति यथा भवद्विपक्षस्य तत्सखी कान्तिं ।
पतति तथा मम दृष्टिः स्वदेकदासस्य सासूया ॥ ६६६
स्वाधीनैरधरव्रणनखाङ्क एवाग्रलो यदि न शयनैः ।
सुभगा सुभगेत्यनया सखि निखिला मुखरिता पल्ली ॥ ६६७

सरित इव यस्य गेहे शुष्यन्ति विशालनीरजा नार्य्यः।
धाराश्वेव स हृष्यति जलनिधिलहरीषु जलद इव ॥ ६६८
सकलकटकैकमण्डिनि कठिनीभूतामग्रे शिखरिदन्ति।
शिरिभुव इव तव मन्ये मनःशिला समभवन्मण्डि ॥ ६६९
सखि दुरवगाहगहनो विदधानो विप्रियं प्रियेऽपि जने।
खल इव दुर्लक्ष्यस्तव विनयमुखोपस्थितः कोपः ॥ ६७०
स्वेदसचेलस्नाता सप्तपदीं सप्तमण्डलीं याता।
समदनदहनविकारा मनोहरा व्रीडिता नमति ॥ ६७१
सुरसप्रवर्त्तमानः सङ्घातोऽयं समानवृत्तानां।
एत्यैव धर्म्मवृत्तैर्भङ्गुरितः काव्यसर्ग इव ॥ ६७२
सर्वासामेव सखे पयो गवामिव मनोहारि तस्याः।
पुनः पुनरावृत्तौच दुग्धमिव सुरतमेव मधुरं ॥ ६७३
स्वप्नेऽपि यां न मुञ्चसि या तेऽनुग्राहिणी हृदि स्थिता च।
दुष्टां न बुद्धिमिव तां गूढ़व्यभिचारिणीं वेत्सि ॥ ६७४
सपराङ्गलि चलन्ती वात्येव तृणं मनोऽनवद्याङ्गि।
हरसि तरलयसि वहसि भ्रमयसि लोलयसि पातयसि ॥ ६७५
सा बहुलक्षणभावा स्त्रीमात्रं वेति कितव तव तुल्यं।
कोटि वराटिका वा द्यूतविधेः सर्व्वत्र पणः ॥ ६७६
सा विरहदहनदूना मत्वा मृत्वापि जीवति वराकी।
सारीव कितव भवता अनुकूलिता पातिताऽक्षेण ॥ ६७७
स्पर्शादिव खेदं जनयति नच मे ददाति निद्रातुम्।
प्रेय इव जघनांशुकमपि न निदाघः क्षणमपि क्षमते ॥ ६७८

सा भवतो भावनया समयविरुद्धं मनोभवं बाला ।
नूतनलतेव सुन्दर दोहदशक्त्या फलं वहति ॥ ६७९

स्पृशति नखैर्न विलिखति सिचयं गृह्णाति न च विमोचयति ।
नच मुञ्चति नच रमयति नयति निशां सा च न निद्राति ॥ ६८०

स्तनजघनमुच्चमस्या लङ्घितमध्यं सखे मम कटाक्षः ।
नोज्झति रोधस्वत्यास्तटद्वयं तीर्थकाक इव ॥ ६८१

सव्रीड़स्मितमन्दश्वसितं मा मां स्पृशेति शंसन्त्या ।
आकोपमेत्य वातायनं पिधाय स्थितं प्रियया ॥ ६८२

सकचग्रहं सरुदितं साक्षेपं सनखमुष्टि सजिगीषं ।
तस्याः सुरतं सुरतं प्राजापत्यः क्रतुरतोऽन्यः ॥ ६८३

स्वल्पा इति राघवशले र्ये न्यस्ता आशये पयोराशेः ।
शैला स्ते स्थितिमन्तो हन्त लघिम्नैव बहुमानः ॥ ६८४

सखि न खलु निर्मलानां विदधत्यभिधानमपि मुखे मलिनाः ।
केनाश्रावि पिकानां कुहु विहायेतरः शब्दः ॥ ६८५

सा श्यामा तन्वङ्गी दहता शीतोपचारतीव्रेण ।
विरहेण पाण्डिमानं नीता तुहिनेन दूर्वेव ॥ ६८६

सुनिरीक्षितनिश्चलकरवल्लभधाराजलोक्षिता न तथा ।
सोत्कम्पेन मया सखि सिक्ता सा माद्यति स्म यथा ॥ ६८७

सखि मोघीकृतमदने पतिव्रते क स्तवादरं तनुते ।
नाशीषी भगवानपि स कामविद्वो हरः पूज्यः ॥ ६८८

सा मयि न दासबुद्धि र्न रति र्न त्रपा न वा विश्वासः ।
हन्त निरीक्ष्य नवोढ़ां मन्ये वयमप्रिया जाताः ॥ ६८९

सुचिरायाते गृहिणी निशि भक्त्या दिनमुखे विदग्धेयं ।
नवलनखाङ्कं निजवपुरकुङ्कुमाक्तं न दर्शयति ॥ ६९०

स्तनजघनोरुप्रणयी गात्रविलग्नो निवेशितस्नेहः ।
प्रिय कालपरिणतिरियं विरज्यसे यन्नखाङ्क इव ॥ ६९१

सा विच्छाया निशि निशि सुतनु र्बहुतुहिनशीतले तल्पे ।
ज्वलति त्वदीयविरहाद्दीपधिरिव हिमवतः पृष्ठे ॥ ६९२

सा नीरसे तव हृदि प्रविशति निर्य्याति न लभते स्थैर्य्यं ।
सुन्दर सरसा दिनकरबिम्बे तुहिनांशुरेखेव ॥ ६९३

सुकुमारत्वं कान्ति र्नितान्तसरलत्वमान्तराश्च गुणाः ।
किन्नाम नेन्दुलेखे शशग्रहेणैव ते कथितं ॥ ६९४

सौरभ्यमात्रमनसामास्तां मलयद्रुमेण हि विशेषः ।
धर्म्मार्थिनां तथापि स मृग्यः पूजार्थमश्वत्थः ॥ ६९५

संवाहयति शयनं यथोपवीजयति गृहपतिं गृहिणी ।
गृहवृतिविवरनिवेशितदृशस्तथाश्वासनं यूनः ॥ ६९६

सत्यं खलागुणेषु स्तब्धा सदृशे पुनर्भुजङ्गे सा ।
अर्पितकोटिः प्रणमति सुन्दर हरचापयष्टिरिव ॥ ६९७

सर्वंसहां महीमिव विधाय तां बाष्पवारिपरिपूर्णां ।
भवनान्तरमयमधुना संक्रान्तस्ते गुरुः प्रेयान् ॥ ६९८

सम्भवति न खलु रक्षा सरसानां प्रकृतिचपलचरितानां ।
अनुभवति हरशिरस्यपि भुजङ्गपरिशीलनं गङ्गा ॥ ६९९

सुलभेषु कमलकेशरकेतकमाकन्दकुन्दकुसुमेषु ।
वाञ्छति मनोरथान्धा मधुपी स्मरधनुषि गुणभावं ॥ ७००

सा भवती भावमया समयविरुद्धं मनोभवं बाला ।
नूतनलतेव सुन्दर दोहदशक्त्या फलं वहति ॥ ६७९

स्पृशति नखैर्न विलिखति सिचयं गृह्णाति न च विमोचयति ।
नच मुञ्चति नच रमयति नयति निशां सा च न निद्राति ॥६८०

स्तनजघनमुच्चमस्या लङ्घितमध्यं सखे मम कटाक्षः ।
नोज्झति रोधस्तस्यास्तटद्वयं तीर्थकाक इव ॥ ६८१

सव्रीडस्मितमन्दश्वसितं मा मां स्पृशेति शंसन्त्या ।
आकोपमित्य वातायनं पिधाय स्थितं प्रियया ॥ ६८२

सकचग्रहं सरुदितं साक्षेपं सनखमुष्टि सजिगीषं ।
तस्याः सुरतं सुरतं प्राजापत्यः क्रतुरतोऽन्यः ॥ ६८३

स्वल्पा इति राघवबलैर्ये न्यस्ता आशये पयोराशेः ।
शैला स्ते स्थितिमन्तो हन्त लघिम्नैव बहुमानः ॥ ६८४

सखि न खलु निर्मलानां विदधत्यभिधानमपि मुखे मलिनाः ।
केनाश्रावि पिकानां कुहु विहायेतरः शब्दः ॥ ६८५

सा श्यामा तन्वङ्गी दहता शीतोपचारतीव्रेण ।
विरहेण पाण्डिमानं नीता तुहिनेन दूर्वेव ॥ ६८६

सुनिरीक्षितनिश्चलकरवलभधाराजलोक्षिता न तथा ।
सीत्कम्पेन मया सखि सिक्ता सा माद्यति स्म यथा ॥ ६८७

सखि मोघीकृतमदने पतिव्रते क स्तवादरं तनुते ।
नाशेषी भगवानपि स कामविद्वो हरः पूज्यः ॥ ६८८

सा मयि न दासबुद्धिर्न रतिर्न त्रपा न वा विश्वासः ।
हन्त निरीक्ष्य नवोढां मन्ये वयमप्रिया जाताः ॥ ६८९

सुचिरायाते गृहिणी निशि भक्त्या दिनमुखे विदग्धेयं ।
नवलनखाङ्कं निजवपुरकुङ्कुमाक्तं न दर्शयति ॥ ६९०

स्तनजघनोरुप्रणयी गात्रविलग्नो निवेशितस्नेहः ।
प्रिय कालपरिणतिरियं विरज्यसे यन्नखाङ्क इव ॥ ६९१

सा विच्छाया निशि निशि सुतनु बहुतुहिनशीतले तल्पे ।
ज्वलति त्वदीयविरहाद्दीपधिरिव हिमवतः पृष्ठे ॥ ६९२

सा नीरसे तव हृदि प्रविशति निर्य्याति न लभते स्थैर्य्यं ।
सुन्दर सरसा दिनकरबिम्बे तुहिनांशुरेखेव ॥ ६९३

सुकुमारत्वं कान्तिं नितान्तसरलत्वमान्तराश्च गुणाः ।
किन्नाम नेन्दुलेखे शशग्रहेणैव ते कथितं ॥ ६९४

सौरभ्यमात्रमनसामास्तां मलयद्रुमेण हि विशेषः ।
धर्म्मार्थिनां तथापि स मृग्यः पूजार्थमश्वत्थः ॥ ६९५

संवाहयति शयनं यथोपवीजयति गृहपतिं गृहिणी ।
गृहवृतिविवरनिवेशितदृशस्तथाश्वासनं यूनः ॥ ६९६

सत्यं स्वल्पगुणेषु स्तब्धा सदृशे पुनर्भुजङ्गे सा ।
अर्पितकोटिः प्रणमति सुन्दर हरचापयष्टिरिव ॥ ६९७

सर्वंसहां महीमिव विधाय तां बाष्पवारिपरिपूर्णां ।
भवनान्तरमयमधुना संक्रान्तस्ते गुरुः प्रेयान् ॥ ६९८

सम्भवति न खलु रक्षा सरसानां प्रकृतिचपलचरितानां ।
अनुभवति हरशिरस्यपि भुजङ्गपरिशीलनं गङ्गा ॥ ६९९

सुलभेषु कमलकेशरकेतकमाकन्दकुन्दकुसुमेषु ।
वाञ्छति मनोरथान्धा मधुपी स्मरधनुषि गुणभावं ॥ ७००

सा लज्जिता सपत्नी कुपिता भीतः प्रियः सखी: सुखिता ।
बालायाः पीड़ायां निद्रानिते जागरे वैद्ये ॥ ७०१

सुचिरागतस्य संवाहनच्छलेनाङ्गमङ्गमालिङ्ग्य ।
पुष्यति न मानचर्य्यां गृहिणी सफलयति चोत्कलिकां ॥ ७०२

सा सर्वथैव रक्ता रागं गुञ्जेव नतु मुखे वहति ।
वचनपटो स्तव रागः केवलमास्ये शुकस्येव ॥ ७०३

सायं कान्तभुजान्तःपतिता रतिनीतनिखिलरजनी सा ।
उषसि ददती प्रदीपं सखीभिरुपहस्यते बाला ॥ ७०४

सा तीक्ष्णमानदहनो महतः स्नेहस्य दुर्लभः पाकः ।
त्वां दर्वीमिव दूति प्रयासयन्नास्ति विश्वस्तः ॥ ७०५

स्नेहः क्षति जिगीषा समरः प्राणव्ययावधिः करिणां ।
न वितनुते कमनर्थं दन्तिनि तव यौवनोद्भेदः ॥ ७०६

सदनादपैति दयितो हसति सखी विशति बालमिव बाला ।
ज्वलति सपत्नी कीरे जल्पति मुग्धे प्रसीदेति ॥ ७०७

सङ्कुचिताक्षीं द्विगुणांशुकां मनोमात्रविस्फुरन्मदनां ।
दयितां भजामि बाला मिव तुहिन त्वत्प्रसादेन ॥ ७०८

सखी मानेव वसन्ती सदाशये मेरुति रसमये तस्य ।
वाड़वग्निरिव सिन्धौ न मानप्यार्द्रतां भजसि ॥ ७०९

सखि मिहिरोद्गमनादिप्रमोदमपिधाय सोऽयमवसाने ।
वन्ध्यावधिवासर इव तुषारो दिवसं कदर्थयति ॥ ७१०

सुरभवने तरुणाभ्यां परस्पराकृष्टदृष्टिहृदयाभ्यां ।
देवार्च्चनार्थमुद्यतमन्योन्यस्यार्पितं कुसुमं ॥ ७११

सायं कुसुमसमयान्ते मधुपालीनां विनिर्यतां नादः।
मित्रव्यासनविषणैः कमलैराक्रन्द इव मुक्तः॥ ७१२

सुमहति मन्युनिमित्ते मयैव विहितेऽपि वेपमानोष्ठः।
न सखीनामपि रुदती ममैव वचःखले पतिता॥ ७१३

सुभग व्यजनविचालनशिथिलभुजाऽभूदियं वयस्यापि।
उद्वर्त्तनं न सख्याः समाप्यते किञ्चिदवगच्छ॥ ७१४

सव्रीडा नखदशनार्पणेषु कुपिता कुटुम्बिनी दयिता।
बहुयाच्ञावरणग्रहसाध्या रोषेण जातेयं॥ ७१५

संगृहीतमलिनपक्षा लघवः परभेदिनः परं तीक्ष्णा।
पुरुषा अपि विशिखा अपि गुणच्युताः कस्य न भयाय॥ ७१६

स्वकपोलेन प्रकटीकृतं प्रमत्तदुःखकारणं किमपि।
द्विरदस्य दुर्जनस्य च मदं चकारेव दानमपि॥ ७१७

सत्यं पतिरविदग्धः सा तु स्वधियैव निधुवने निपुणा।
मार्त्तिकमादाय गुरुं धनुरधिगतमेकलव्येन॥ ७१८

सौभाग्यमानवान् स त्वयाऽवधीर्यापमानतां नीतः।
स्वविरहपाण्डिमानं भस्मखातोपमं तनुते॥ ७१९

हत्वा तटिनि तरङ्गैर्भ्रमितचक्रेपुणाग्रये निहितः।
फलदलधनरहित स त्वयास्तरिते तरुस्तम्भः॥ ७२०

हृतकाञ्चिप्रतिबन्धोत्तरजवनादपरभोगभुक्तायाः।
उल्लसिता रोमाली गरलविलेखेव वामिन्याः॥ ७२१

क्षीणस्य दयितदुर्नयतापप्रशान्तोपचारमासाद्य।
अङ्गान्यानमयति शनैः प्रेम्नः शेषो ज्वरस्येव॥ ७२२

श्रान्तमपवारितो यदरथावुपधाय सुप्त इवासि ।
उद्घाटयसि किमूरू निश्वासैः पुलकयन्नूरौः ॥ ७२३

क्षुद्रोद्भवस्य कटुतां प्रकटयतो विदधतश्च मदमुच्चैः ।
मधुनोऽधमपुष्पस्य गरिमा लघिमा च भेदाय ॥ ७२४

पूर्वैर्विभिन्नवृत्तां गुणाढ्यभवभूतिवाणरघुकारैः ।
वाग्देवीं भजतो मम सन्तः पश्यन्तु को दोषः ॥ ७२५

कृतपात्रोपनयोचितसत्प्रतिबिम्बाभिनववपुस्तु ।
कस्य जनयति न हर्षं सत्काव्यं मधुरवचनञ्च ॥ ७२६

सत्सूत्रसंविधानं सदलङ्कारं सुवृत्तमच्छिद्रं ।
को धारयति न कण्ठे सत्काव्यं माल्यमनर्घञ्च ॥ ७२७

एका ध्वनिद्वितीया त्रिभुवनसारा स्फुटोक्तिचातुर्य्या ।
पञ्चेषुषट्पदहिता भूषा श्रवणस्य सप्तशती ॥ ७२८

कविसमरसिंहनादः स्वरानुवादः सुधैकसम्वादः ।
विद्वद्विनोदकन्दः सन्दर्भोऽयं मया विहितः ॥ ७२९

उदयनबलभद्राभ्यां सप्तशती शिष्यसोदराभ्यां नः ।
द्यौरिव रविचन्द्राभ्यां प्रकाशितानिर्म्मलीकृत्य: ॥ ७३०

विरचन् वामनशीला वामन इव कविपदं लिप्सुः ।
अकृतार्य्यासप्तशतीमेतां गोवर्द्धनाचार्य्यः ॥ ७३१

श्रीगोवर्द्धनाचार्य्य-विरचिता आर्य्या-सप्तशती
समाप्ता ।

—:०:—

# विदग्धमुखमण्डनम् ।

सिद्धौषधानि भवदुःखमहागदानां
पुण्यात्मनां परमकर्णरसायनानि ।
प्रक्षालनैकसलिलानि मनोमलानां
शौद्धोदनेः प्रवचनानि चिरं जयन्ति ॥ १ ॥

जयन्ति सन्तः सुकृतैकभाजनं परार्थसम्पादनसङ्गतस्थिताः ।
करस्थनीरोपमविश्वदर्शिनो जयन्ति वैदग्ध्यभुवः कवेर्गिरः॥२॥

आक्रान्तेव महोपलेन मुनिना शप्तेव दुर्वाससा
सातत्यं वत मुद्रितेव जतुना नीतेव मूर्च्छां विषैः ।
बद्धेवातनुरज्जुभिः परगुणान्वक्तुं न शक्ता सती
जिह्वा लोहशलाकया खलमुखे विद्धेव संलक्ष्यते ॥ ३ ॥

इहानेके सत्यं सततमुपकारिण्युपकृतिं
कृतज्ञाः कुर्वन्तो जगति निवसन्त्येव सुधियः ।
कियन्तस्ते सन्तः सुकृतपरिपाकप्रणयिनो
विना स्वार्थं येषां भवति परकृत्यव्यसनिता ॥ ४ ॥

बध्वाञ्जलिं सममसज्जनसज्जनौ तौ
वन्दे नितान्तकुटिलप्रगुणस्वभावौ ।
एकं भियाऽभिनवसंहितवैरिभावं
प्रीत्या परं परमनिर्वृतिपात्रभूतम् ॥ ५ ॥

किन्नोऽथवा हतखलप्रणतावपि स्यात्
स स्वीकरोति सुजनो यदि मां गुणज्ञः ।
चन्द्रेण चारुचरितेन विकासितं सत्
सङ्कोचितं भवति किं कुमुदन्तमोभिः ॥ ६ ॥
प्रीत्यै सतान्तदनुभावगतावसादः
सन्त्यज्य गूढरचनां प्रतिभानुरूपम् ।
क्षिप्रावबोधकरणक्षममीप्सितार्थं
वक्ष्ये विदग्धमुखमण्डनमप्रपञ्चम् ॥ ७ ॥

यद्यस्ति सभामध्ये स्थातुं वक्तुं मनस्तदा सुधियः ।
ताम्बूलमिव गृह्णीत्वा विदग्धमुखमण्डनं विशत ॥ ८ ॥
प्राहुर्व्यस्तं समस्तं च द्विर्व्यस्तं द्विःसमस्तकम् ।
तथा व्यस्तसमस्तं च द्विर्व्यस्तं द्विःसमस्तकम् ॥ ९ ॥
सद्विःसमस्तकव्यस्तमेकालापं प्रभिन्नकम् ।
भेद्यभेदकमोजस्वि सालङ्कारं सकौतुकम् ॥ १० ॥
प्रश्नोत्तरसमं पृष्टं प्रश्नं भग्नोत्तरं तथा ।
आदिमध्योत्तराख्ये द्वे अन्त्योत्तरमतःपरम् ॥ ११ ॥
कथितापह्नुतिश्चैव विषमं वृत्तनामकम् ।
नामाख्यातं च तार्क्ष्यं च सौत्रं शाब्दीयशास्त्रजे ॥ १२ ॥
वर्णवाक्योत्तरे तद्वत् श्लोकोत्तरमतः परम् ।
खड्गपादोत्तरे चक्रं पद्मं काकपदं तथा ॥ १३ ॥
गोमूत्रीं सर्व्वतोभद्रं गतप्रत्यागतं बहु ।
वर्द्धमानाक्षरं तद्वद्धीयमानाक्षरं तथा ॥ १४ ॥

शृङ्खलां नागपाशं च चित्रं संशुद्धमेव च ।
प्रहेलिकास्तथा ह्यथं कालसारादि वर्णितम् ॥ १५ ॥
अजमारादिकं गूढं पदपादार्थगूढकम् ।
स्तुतिनिन्दास्तथा ह्यर्थं सहापह्नुति विन्दुमत् ॥ १६ ॥
क्रियाकारकसंबन्धगुप्तान्यामन्त्रितस्य च ।
गुप्तस्तथा समासस्य लिङ्गस्य वचनस्य च ॥ १७ ॥
मात्राविन्दुविसर्गाणां च्युतकान्यक्षरस्य च ।
स्थानव्यञ्जनयोश्चापि च्युतदत्ताक्षरस्तथा ॥ १८ ॥

इत्युद्देशकम् ।

स्पष्टम्पदविभागेन केवलेनैव यद्भवेत् ।
विदुर्व्यस्तं समस्तं यत्समुदायेन पृच्छति ॥ १९ ॥
पूजायां किं पदं प्रोक्तमस्तनं को बिभर्त्युरः ।
क आयुधतयाख्यातः प्रलंबासुरविद्विषः ॥ २० ॥

सुनासीरः, इति व्यस्तसमस्तजातिः ।

को दुराख्यस्य मोहाय का प्रिया सुरविद्विषः ।
पदं प्रश्नवितर्कं किं को दन्तच्छदभूषणम् ॥ २१ ।

रामानुरागः । इति व्यस्तजातिः ।

अपिसेविता द्विजिह्वैः कदापि केन यान्ति विकारम् ।
विच्छिद्यमानतनवः स्वगुणैरधिकं विराजन्ते ॥ २२ ॥

मलयतरवः ।

अनिभृतकोकिलनिःस्वनमुखरितसहकारकाननः पुंसाम् ।
को भवति हृदयहारी मधुकरझङ्कारिकंकेलिः ॥ २३ ॥

मधुसमय, इति समस्तजातिः ।

व्यस्तं समस्तमथवा-समासपदभङ्गतः ।

द्विःपृष्टं यत्तदेव स्याद् द्विर्व्यस्तं द्विःसमस्तकम् ॥ २४ ॥

वर्षासु का भवति निर्मधु कीदृगब्जम्

शेषं बिभर्त्ति वसुधासहितं क एकः ।

आमन्त्रयस्व धरणीधरनाथपुत्रीम्

कोवाऽस्ति भस्मनि चिताङ्गजनाश्रयः स्यात् ॥२५॥

कालिकापालिकमठः ।

कीदृशं वद मरुस्थलं मतं हारि कुत्र सति भूषणं भवेत् ।

ब्रूहि कांत ! सुभटः सकार्मुकः कीदृशो भवति कुत्र विद्विषाम्॥२६॥

अवारितो रणे, इति द्विर्व्यस्तजातिः ।

पक्षिश्रेष्ठसखीबभ्रू सुरावाच्याः कथं वद ।

ज्येष्टे मासि गताः शोषं कीदृशोऽल्पजला भुवः ॥ २७ ॥

विवरालीनकुलीराः ।

विश्वम्भराप्रलम्बघ्नत्रीहिमानुषसंयतः ।

कथं वाच्याः भवन्त्येता दिनादौ विकसन्ति काः ॥ २८॥

कुवलयवनराजयः, इतिद्विःसमस्तजातिः ।

पृष्टं पदविभागेन समुदायेन यद्भवेत् ।

विदु र्व्यस्तसमस्तं तदुभयार्थप्रदर्शनात् ॥ २९ ॥

का प्रियेण रहिता वराङ्गना धाम्नि केन तनयेन नन्दिता ।

कीदृशेन पुरुषेण पक्षिणां बन्धनं समभिलष्यते सदा ॥ ३० ॥

शकुन्तला भरतेन

कीदृशं हृदयहारि कूजितं कः सखा शशसि भूपतेर्मतः।
कस्तवास्ति विपिने भयाकुलः कीदृशश्च न भवेन्निशाकरः॥३१॥

कलङ्कविरहितः, इति व्यस्तसमस्तजातिः।

द्विर्व्यस्तमेव यत् पृष्टं समुदायेन यद्भवेत्।
त्रिधाभिन्नं तदेवोक्तं द्विर्व्यस्तकसमस्तकम्॥ ३२॥

को शङ्करस्य वलयावपयोधरः कः
कीदृक् परस्य नियतं वशमेति भूपः।
संबोधयोरगपतिं विजयी च कीदृग्
दुर्योधनो न हि भवेद्‌द कीदृशश्च॥३३॥ अहीनाचतनयः।

को मोहाय दुरीश्वरस्य विहितः सम्बोधनीयो गुरुः
कोधात्रां विरलः काली नवघनः किंवन्न कीदृग् द्विजः।
किं लेखावचनं भवेदतिशयन्दुःखाय कीदृक् खलः
को विघ्नाधिपतिर्मनोभवसमो मूर्त्या भवन् कीदृशः॥३४॥

राजीवसन्निभवदनः, इति द्विर्व्यस्तसमस्तजातिः।

द्विःसमस्तं यदा पृष्टं व्यस्तकेन पुनर्भवेत्।
तद् द्विःसमस्तकव्यस्तं कथितं प्रश्नपण्डितैः॥ ३५॥

कीदृक्षः सकलजनो भवेत्सुराज्ञः
कः काली विदित इहान्धकारहेतुः।
कः प्रेयान् कुमुदवनस्य को निहन्ति
भ्रातृव्यं वद शिरसा जितस्त्वया कः॥ ३६॥

विधुरविरहितः।

संग्रामे स्फुरदसिना हतास्त्वया के

के दुःखं वत निरये नरस्य कुर्युः।
कस्मिन् उद्भवति कदापि नैव लोम
ख्याताः के जगति महालघुत्वभाजः॥ ३७॥
नरकरोमवः, इति द्विःसमस्तकव्यस्तजातिः।
एकश्रुत्या वचो यत्र भिन्नार्थप्रतिपादकम्।
प्रभेदं द्विःसमस्तस्य तमेकालापकं विदुः॥ ३८॥
कीदृशी निरयभूरनेकधा सेव्यते परमपापकर्मभिः।
प्रेतराक्षसपिशाचसेविता कीदृशीच पितृकाननस्थली॥३९॥
नरकपालरचिता।
केसरद्रुमतलेषु संस्थितः कीदृशो भवति मत्तकुञ्जरः।
तत्वतः शिवमपेक्ष्य लक्षणैः अर्जुनः समिति कीदृशो भवेत्।४०॥
दानवकुलभ्रमरहितः, इत्येकालापकजातिः।
शब्दार्थलिङ्गवचनैर्व्यस्तैर्यद्वा समस्तकैः।
विभक्त्या च प्रभिन्नं यत् तत् प्रभिन्नकमुच्यते॥ ४१॥
निर्जितसकलारातिः पृच्छति को नैको मृत्योर्भयमृच्छति।
मेघात्ययजतरुचिराशायाः किं तिमिरक्षयकारि निशायाः॥४२॥
विधुतारातेजः।
विहगपतिः कं हतवानहितं कीदृक् भवति पुरं जनसहितम्।
किं कठिनं विदितं वद धीमद्! यादःपतिरपि कीदृग् भयकृत्४३
अहिमकरमयः, इति शब्दार्थलिङ्गप्रभिन्नकम्।
अनुकूलविधायिदैवतो विजयी स्यान्न तु कीदृशो नृपः।
विरहिण्यपि जानकी वने निवसन्ती मुदमादधौ कुतः॥४४॥

कुशलवर्द्धितः ।

कुसुमं पतदेत्यनाकृतो वद कस्मै स्पृहयन्ति भोगिनः ।
अधिगम्य रतं वराङ्गना क्व नु यत्नं कुरुते सुशिक्षिता ॥४५॥
सुरतरवे, इति शब्दार्थभिन्नम् ।

कामुज्जहार हरिरम्बुधिमध्यमस्मां
कीदृक् श्रुतं भवति निर्मलमागमानाम् ।
आमन्त्रयस्व वनमग्निशिखावलीढम्
तत्रापि को दहति के मदयन्ति भृङ्गान् ॥ ४६ ॥
कुन्दमकरन्दविन्दवः ।

वसति कुत्र सरोरुहसन्ततिः
दिनकृतो ननु के तिमिरच्छिदः ।
पवनभक्षसपत्नरणोत्सुकं
पुरुषमाह्वय को जगति प्रियः ॥ ४७ ॥
केकिरणोत्कराः । इति शब्दार्थवचनभिन्नम् ।

कीदृग् गृहं याम्यगृहङ्गतस्य
कास्त्राणमभ्यस्तरणे जनानाम् ।
भूषा कथं कण्ठ न ते नु पृष्टे
मुक्ताकलापैरिति चोत्तरं किम् ॥४८॥ हाराविनावः ।

कवयो वद कुत्र कीदृशाः कठिनं किं विदितं समन्ततः ।
अधुना तव वैरियोषितां हृदि तापः प्रबलो विहाय काः॥४९॥
गिरिसारमुषाः । इति शब्दार्थलिङ्गवचनविभक्तिभिन्नम् ।

मेघात्यये भवति किं सुभगावगाहं

का वा विडम्बयति चारणमत्तवेश्याः ।
दुर्व्वारवीर्य्यविभवस्य रणे भवेत् कः
काः क्षीरवल्लसुभगास्तरणिप्रभाभिः ॥५०॥ सरोजराजयः ।

पृच्छति शिरोरुहो मधुमथनं
मधुमथनस्तं शिरोरुहस्य ।
कः खलु चपलतया भुवि विदितः
का ननु यानतया गवि विदिताः ॥ ५१ ॥

केशवनौकाः । इति शब्दार्थलिङ्गवचनभिन्नम् ।

न भवति मलयस्य कीदृशी भूः
क इह कुचं न विभर्त्ति कं गता श्रीः ।
भवदरिनिवहेषु कास्ति नित्यं
बलमथनेन विपदं व्यधायि केषाम् ॥५२॥ विपन्नगानाम् ।

समयमिह वदन्ति कं निशीथं
शमयति कान् वद वारिवाहवृन्दम् ।
वितरति जगतां मनःसु कीदृङ्
मुदमतिमात्रमयं महातड़ागः ॥ ५३ ॥ अरविन्दवान् ।

इति शब्दार्थविभक्तिवचनभिन्नम् ।

कीदृक्षं समिति बलं निहन्ति शत्रं
विष्णोः का मनसि मुदं सदा तनोति ।
तुच्छं श्वच्छरधिमुखं निगद्यते किं
पल्लवैः सममपमान एव केषु ॥ ५४ ॥ अभिमानिषु ।

घनसमये शिखिषु स्वामृत्यं कीदृषु किं घनात् पतति ।

प्रावृषि कस्य न गमनं मानसगमनाय कीदृशा हंसाः ॥५५॥
समुत्सुकमनसः।
इति शब्दार्थलिङ्गवचनभिन्नम्। इति प्रभिन्नकजातिः।
अर्थमात्रैकभेदेन भिन्नं बध्नन्ति केचन।
सुकुमाराधियस्तच्च विदग्धैर्नादृतं यथा ॥ ५६ ॥
आनन्दयति कोऽत्यर्थं सज्जनानिव भूतले।
प्रबोधयति पद्मानि तमांसि च निहन्ति कः ॥ ५७ ॥
मित्रोदयः।
अटवी कीदृशी प्रायो दुर्गमा भवति प्रिये।
प्रियस्य कीदृशी कान्ता तनोति सुरतोत्सवम् ॥ ५८ ॥
मदनवती।
भिन्नावश्यं कर्त्तव्यौ शब्दार्थौ प्रश्नकोविदैः।
लिङ्गादिषु यथा शक्तिभेदमाहुर्विपश्चितः ॥ ५९ ॥
इति श्रीधर्मदासविरचिते विदग्धमुखमण्डने
प्रथमः परिच्छेदः।

---

विशेषणं विशेष्यञ्च यत्र प्रश्ने विधीयते।
भेद्यभेदकमाहुस्तं प्रश्नं प्रश्नविदो यथा ॥ १ ॥
कीदृक् किं स्यान्न मत्स्यानां हितं स्वेच्छाविहारिणाम्।
गुणैःपरेषामत्यर्थं मोदते कीदृशः पुमान् ॥ २ ॥ विमत्सरः।
अगस्त्येन पयोराशेः कियत् किं पीतमुज्झितम्।

त्वया वैरिकुलं वीर! समरे कीदृशं कृतम् ॥ ३ ॥

सकलङ्कम् । इति भेद्यभेदकजातिः ।

दीर्घवृत्तेन यत् पृष्टमुत्तरं कियदक्षरम् ।

तदोजस्वीति विख्यातमूर्जितं चेति के चन ॥ ४ ॥

कामिन्यास्तनभारमन्थरगतेर्लीलाचलच्चक्षुषः
कन्दर्पैकविलासनित्यवसतेः कीदृक् पुमान्वल्लभः ।
हेलाकृष्टकृपाणपाटितगजानीकात् कुतस्तेऽरयः
श्वासायासविशुष्ककण्ठकुहरा निर्यान्ति जीवार्थिनः ॥ ५ ॥

समरतः ।

दैत्यारातिरसौ वराहवपुषा कामुज्जहाराम्बुधेः
का रूपं विनिहन्ति को मधुवधूवैधव्यदीक्षागुरुः ।
स्वच्छन्दं नवशल्लकीकवलनैः पम्पासरोमज्जनैः ।
के विन्ध्याद्रिवने वसन्त्यभिमतक्रीडाभिरामस्थिताः ॥ ६ ॥

कुञ्जराः इत्योजस्विजातिः ।

उपमादिरलङ्कारो बहुधा परिकीर्त्तितः ।

यत्रेन कथ्यते सार्द्धं सालङ्कारं तदुच्यते ॥ ७ ॥

कल्याणवाक् त्वमिव किं पदमत्र कान्तं
सद्भूपतेस्त्वमिव कः परितोषकारी ।
कः सर्वदा वृषगतिस्त्वमिवातिमात्रं
भूत्याश्रितः कथय पालितसर्वभूतः ॥ ८ ॥ शङ्करः ।

सूर्य्यस्य का तिमिरकुञ्जरवृन्दसिंही
सत्यस्य का सुकृतवारिधिचन्द्रलेखा ।

पार्थस्य कीदृगरिदावहुताशनोऽभूत्
का मालतीकुसुमदाम हरस्य मूर्ध्नि ॥ ९ ॥
भागीरथी । रूपकं सालङ्कारजातिः ।
लघुवृत्तेन यत् पृष्टं प्रभूताक्षरमुत्तरम् ।
सकौतुकमितीच्छन्ति तद्विदस्तदिदं यथा ॥ १० ॥
के स्थिराः के प्रियाः स्त्रीणां कोऽप्रियोनत्तमाह्वय ।
नृत्यभूः कीदृशी रम्या नदी कीदृग्घनागमे ॥ ११ ॥
अगाधवारिपूरजनिततरङ्गाः ।
का क्षता विष्णुना कीदृग्योषितां कः प्रशस्यते ।
असेव्यः कीदृशः स्वामी को निहन्ति निशातमः ॥ १२ ॥
कुमुदवनवान्धवोदयः । इति सकौतुकजातिः ।
प्रश्नवर्णश्रुतेस्तुल्यं यत्र स्यादुत्तरं वरम् ।
प्रश्नोत्तरसमन्तज्ज्ञास्तदाहुः श्रयतां यथा ॥ १३ ॥
कन्दर्पं मदजनकं प्राहुः काचघटी गदिताच्छतमेह ।
इत्यादि प्रश्ने युक्तं यद्भूत तदुत्तरमाशु विचिन्त्य ॥ १४ ॥
पथिकस्तिष्ठति कष्टं विरही नाविक आस्ते तत्क्षतरक्षः ।
इत्यादि प्रश्ने युक्तं यद्ब्रूहि तदुत्तरमुत्तमपूरुष ! ॥ १५ ॥
इति प्रश्नोत्तरसमजातिः ।
यस्मिन्नुत्तरमुच्चार्य्य प्रश्नस्तस्यैव पृच्छ्यते ।
पृष्टप्रश्नं तदिच्छन्ति प्रश्नोत्तरविदो यथा ॥ १६ ॥
लक्ष्मणेत्युत्तरं यत्र प्रश्नः स्यात्तत्र कीदृशः ।
ग्रीष्मे द्विरदवृन्दाय वनाली कीदृशी हिता ॥ १७ ॥

कासारसहिता ।

चादय इति यत्र स्यादुत्तरमथ तत्र कीदृशः प्रश्नः ।
कथय त्वरितं के स्युर्नौकाया वाहनोपायाः ॥ १८ ॥

केनिपाताः । इति पृष्टप्रश्नजातिः ।

कथयामुकमित्यादि भंक्त्वा यत्रोत्तरं भवेत् ।
भग्नोत्तरं तदिच्छन्ति काकुमात्रेण गोपितम् ॥ १९ ॥

भवत इवातिस्वच्छं कस्याभ्यन्तरमगाधमतिशिशिरम् ।
काव्यामृतरसमग्नस्त्वमिव सदा कः कथय सरसः ॥ २० ॥

वीरे सदपि रिपूणां नियतं का हृदयशालिनी भवति ।
नभसि प्रस्थितजलदे का राजति देव! वद तारा ॥ २१ ॥

इति भग्नोत्तरजातिः ।

यत् पृष्टं प्रश्नवाक्ये स्यादादिमध्यान्तसंस्थितम् ।
उत्तरं तत् त्रिधा प्रोक्तमादिमध्यान्तसंश्रितम् ॥ २२ ॥

भ्रमरहितः कीदृक्षो भवतितरां विकसितः पद्मः ।
ज्योतिषि कः कीदृक्षः प्रायो भुवि पूज्यते लोकैः ॥ २३ ॥

प्रभवः को गङ्गाया नगपतिरतिसुभगशृङ्गधरः ।
के सेव्यन्ते सेवकसार्थैरत्यर्थमर्थरतैः ॥२४॥ आद्युत्तरजाति ।

अयमुदितो हिमरश्मिर्वनितावदनस्य कीदृशः सदृशः ।
नीलादिकोपलब्धः स्फुरति प्रत्यक्षतः कस्य ॥ २५ ॥

गैरिकमनःशिलादिः प्रायेणोत्पद्यते कुतो न गतः ।
यः खलु न चलति पुरुषः स्थानादुक्तः स कीदृक्षः ॥ २६ ॥

इति मध्योत्तरजातिः ।

कस्मिन्वसन्ति वद मीनगणा विकल्पं
किं वा पदं वदति किं कुरुते विवस्वान्।
विद्युल्लतावलयवान् पथिकाङ्गनानाम्
उद्वेजको भवति कः खलु वारिवाहः॥ २७॥

शब्दः प्रभूगत इति प्रचुराभिधायी
कीदृग् भवेद्वदत शब्दविदो विचिन्त्य।
कीदृग् बृहस्पतिमते विदिताभियोगः
प्रायः पुमान् भवति नास्तिकवर्गमध्यः॥ २८॥

इत्यन्तोत्तरजातिः।

पदान्तरादिसम्बन्धात् प्रश्नवाक्येऽपि संस्थितम्।
कथितापह्नुतिः सा स्याल्लभ्यते यत्र नोत्तरम्॥२९॥

पृथ्वीसम्बोधनं कीदृक् कविना परिकीर्त्तितम्।
केनेदं मोहितं विश्वं प्रायः केनाप्यते यशः॥ ३०॥

कस्य मरौ दुरधिगमः कमले कः कथय विरचितावासः।
कैस्तुष्यति चामुण्डा रिपवस्ते वद कुतो भ्रष्टाः॥ ३१॥

इति कथितापह्नुतिजातिः।

यत्र भङ्गस्य वैषम्यं विषमन्तन्निगद्यते।
वृत्तं नामोत्तरं यत्र प्रश्नं तद्वृत्तनामकम्॥ ३२॥

कीदृग्वनं स्यान्न भयाय पृष्टे यदुत्तरं तस्य च कीदृशस्य।
वाच्यं भवेद्दीर्घगजातमम्बु कं चाधिशेते गवि कोऽर्चनीयः॥३३॥

अहिंस्रमहिमः।

प्रायः कार्य्ये न मुह्यन्ति नराः सर्वत्र कीदृशाः।

नाधा इति भवेच्छन्दो गौवाची वद कीदृशः ॥ ३४ ॥

सावधानाः । इति विषमजातिः ।

गतक्लेशायासाः विमलमनसः कुत्र मुनयः
तपस्यन्ति स्वस्थाः सुररिपुरिपोः का च दयिता ?
कविप्रेयः किं स्यान्नवलघुयुतैरष्टगुरुभिः
बुधावृत्तं वर्णैः स्फुटघटितबन्धं कथयत ॥ ३५ ॥

शिखरिणी ।

उरसि मुरभिदः का गाढमालिङ्गितास्ते
सरसिजमकरन्दामोदिता नन्दने का ।
गिरिसमलघुवर्णैरर्णवाख्यातिसंख्यैः
गुरुभिरपि कृता का छन्दसां वृत्तिरम्या ॥ ३६ ॥

मालिनी । इति वृत्तनामजातिः ।

एकमेवोत्तरं यत्र सुश्लिष्टत्वाद्द्विधा भवेत् ।
सुप्तिङन्तप्रभेदेन नामाख्यातन्तदुच्यते ॥ ३७ ॥

समरशिरसि सैन्यं कीदृशं दुर्निवारं
विगतघननिशीथे कीदृशे व्योम्नि शोभा ।
कमपि विधिवशेन प्राप्य योग्याभिमानं
जगदखिलमनिन्द्यन्दुर्जनः किं करोति ॥ ३८ ॥

अभिभवति ।

पदमनन्तरवाचि किमिष्यते कपिपतिर्विजयी ननु कीदृशः ।
परगुणं गदितुं गतमत्सराः कुरुत किं सततं भुवि सज्जनाः ॥ ३९ ॥

अनुसरामः । लट् ।

वदति राममसुष्य जघन्यजो
वसति कुत्र सदालसमानसः।
अपि च शक्रसुतेन तिरस्कृतो
रविसुतः किमसौ विदधे त्वया ॥ ४० ॥ अनुजग्म्हे।
भवति गमनयोग्या कीदृशी भूरथानां
किमतिमधुरमन्नंभोजनान्ते प्रदेयम्।
प्रियतम! वद नौचामन्त्रणे किं पदं स्यात्
कुमतिकृतविवादाद्यञ्चिरे किं समर्थैः ॥ ४१ ॥

समादधिरे। लिट्।

वदतानुत्तमवचनं ध्वनिरन्यैरुच्यते स कीदृक्षः।
तव सुहृदो गुणनिवहैरिपुनिवहं किं नु कर्त्तारः ॥ ४२ ॥

अवमन्तारः।

कीदृक्कोऽयं दुस्तरं स्यात्तितीर्षोः
का पूज्यास्मिन् खड्गमामन्त्रयस्व।
दृष्ट्वा धूमं दूरतो मानविज्ञाः
किं कर्त्तास्मि प्रातरेवाश्रयाशम् ॥ ४३ ॥

अनुमातासे। लुट्लकारः।

कामुकाःस्युः कया नौचाः सर्वः कस्मिन् प्रमोदते।
अर्थिनः प्राप्य पुण्याहं करिष्यध्वे वसूनि किम् ॥ ४४ ॥

दास्यामहे।

को दुःखी सर्वकार्येषु किं भृशार्थस्य वाचकम्।
यो यत्र विरतो नित्यन्ततः किं स करिष्यति ॥ ४५ ॥

प्रयास्यति । लृट् ।

वियन्त इति समानार्थः शब्दः कोऽचिरयति मुद्रां किम् ।
कथमपि यदि कोपः स्यात्त्वां सुजनः किं करोतु वद ॥ ४६ ॥

सन्त्यजतु ।

मेघात्यये भवति का सुभगावगाहा
वृत्तं वसन्ततिलकं कियदक्षराणाम् ।
भो भोः कदर्थपुरुषा विषुवद्दिने च
वित्तस्य नः सुबहु तत् क्रियतां किमेतत् ॥ ४७ ॥

नदीयतां । लोट् ।

का माद्यति मकरन्दैः तनयं कमसूत जनकराजसुता ।
कथय कृषीवल ! सस्यं पक्वं किमचीकरस्त्वमपि ॥ ४८ ॥

अलीलवम् ।

पृच्छति पुरुषः केऽस्यां समभूवन्वत्सकृत्तपक्षतयः ।
बहुभयदेशं जिगमिषुरे काकी वार्य्यते च कथम् ॥ ४९ ॥

मानवनगाः कथम् । लुङ् ।

किमकरवमहं हरिर्मिहीर्षु
स्वभुजबलेन गवां हितं विधित्सुः ।
प्रियतम वदने न पीयते कः
परिणतबिम्बफलोपमः प्रियायाः ॥ ५० ॥ अधरः ।
परिहरति भयात्सवाहितः किं
कमथ कदापि न विन्दतीह भीतः ।

कथय किमकरोरिमां धरित्रीं
नृपतिगुणैर्नृपते ! स्वयं त्वमेकः ॥ ५१ ॥

समरञ्जयम् । लङ् ।

कीदृक् सेना भवति रणे दुर्वारा
वीरः कस्मै स्पृहयति लक्ष्मीमिच्छन् ।
का सम्बुद्धिर्भवति भुवः संग्रामे
किं कुर्व्वीध्वं सुभटजना भ्रातृव्यान् ॥ ५२ ॥

पराजयेमहि ।

कंसारातेर्वद गमनं केन स्यात्
कस्मिन् दृष्टिं लभते स्वल्पेच्छुः ।
कं सर्वेषां शुभकरमूचुर्धीराः
किं कुर्य्यास्त्वं सुजन ! सशोकं लोकम् ॥ ५३ ॥

विनोदयेयम् । लिङ् ।

वारणेन्द्रो भवेत् कीदृक् प्रीतये भृङ्गसंहतेः ।
यद्यवक्ष्य तदास्मै किमकरिष्यमहं धनम् ॥ ५४ ॥

समदास्यः ।

काले देशे यथा युक्तं नरः कुर्व्वन्नुपैति काम् ।
भुक्तवन्तावलस्येतां किमन्नमकरिष्यताम् ॥ ५५ ॥
महास्यताम् । लृङ् । इति नामाख्यातजातिः ।

श्रेयस्ताक्ष्यदृशा तार्क्ष्यं सौत्रं सूत्रोत्तरैस्तथा ।
शाब्दीयं शब्दसंज्ञाभिः शास्त्रजं शास्त्रभाषया ॥५६॥
हिमानीस्थगिरी स्यातां कीदृशौ शशिभास्करौ ।

कः पूज्यः कः प्रमाणेभ्यो न प्रभाकरसम्मतः ॥ ५७ ॥

अभावः ।

के प्रवीणाः कुतो हीनं जीर्णं वासोऽश्मांश्च कः ।

निराकरिष्णवो वाह्यं योगाचाराश्च कीदृशाः ॥ ५८ ॥

विज्ञानवादिनः । तार्क्यजातिः ।

को नयति जगदशेषं चयमथ बिभराम्बभूव कं विष्णुः ।

नीचः कुत्र सगर्वः पाणिनिसूत्रञ्च कीदृक्षम् ॥ ५९ ॥

यमोगन्धने ।

किं स्याद्विशेष्यनिष्ठं का संख्या वदत पूरणी भवति ।

नीचः केन सवर्गः सूत्रं चन्द्रस्य कीदृक्षम् ॥ ६० ॥

विशेषणमेकार्थेन । इति सौत्रजातिः ।

न श्लाघते खलः कस्मै सुप्तिङन्तं किमुच्यते ।

लादेशानां नवानाञ्च तिङां किं नाम कथ्यताम् ॥ ६१ ॥

परस्मैपदम् ।

सततं श्लाघते कस्मै नीचोभुवि किमुत्तमम् ।

कर्त्तर्य्यपि रुचादीनां धातूनां किं पदं भवेत् ॥ ६२ ॥

आत्मनेपदम् ।

किमव्ययतया ख्यातं कस्य लोपो विधीयते ।

ब्रूत शब्दविदो ज्ञात्वा समाहारः क उच्यते ॥ ६३ ॥

स्वरितः । इति शाब्दीयजातिः ।

जलदात्यये भवति कः समदः

सुभगश्च किं कमधरम्मुरजित् ।

कटुतैलमिश्रितोगुड़ो नियतं
विनिहन्ति कं त्रिगुणसप्तदिनैः ॥६४॥ श्वासरोगम्।
कीदृक् प्रातर्दीपवर्त्तेः शिखा स्याद्
उष्ट्रः पृच्छत्याभजन्ते मृगाः किम्।
देवामात्ये किं गते प्रायशोऽस्मिन्
लोकः कुर्य्यान्नो विवाहं विविक्तः ॥ ६५ ॥

विभाकरभवनम्।

वर्णएवोत्तरं यत्र तद्वर्णोत्तरमुच्यते
वाक्यं यत्रोत्तरं तत्तु वाक्योत्तरमिति स्मृतम् ॥ ६६ ॥
को मल्लू भुवि विख्यातौ शोकं वदति किं पदम्।
कोऽभीष्टोऽत्र दरिद्रस्य सेवन्ते के च भिक्षुभिः ॥ ६७ ॥

विहासः।

किं मुञ्चन्ति पयोवाहाः कीदृशी हरिवल्लभा।
पूजायां किं पदं कोऽग्निः कः कृष्णेन हतो रिपुः ॥६८॥

कंसासुरः। इति वर्णोत्तरजातिः।

दधौ हरिः कं शुचि कीदृगब्जं
पृच्छत्यकः किं कुरुते सशोकः।
शोकं विधायापि किमित्युदारः
कविर्न तोषं समुपैति भूयः ॥ ६९ ॥

आगमकमकरोदिति।

अम्भोधरः पृच्छति कीदृशः स्यात्
नृपः सपत्नैरपि दुर्निवारः।

अकारि किं ब्रूहि नरेण सम्यक्
पितृत्वमारोपयितुं स्वकीयम् ॥ ६८ ॥
समजनितनयः । इति वाक्योत्तरजातिः ।

इति श्रीधर्मदासविरचिते विदग्धमुखमण्डने
द्वितीयः परिच्छेदः ।

---

श्लोक एवोत्तरं यत्र तत् श्लोकोत्तरमुच्यते ।
खण्डोत्तरं भवेदर्द्धं श्लोकात् पादात्तदुत्तरम् ॥ १ ॥
कन्देवङ्केऽर्चयन्ति स्फुटरुचि निशि किं कीदृशी दुःखिनी स्त्री
कीदृक् चक्रं सदास्ते क्व च तव विजयी प्रावृषं कीदृशं खम् ।
कामाङ्कः प्रेतयोर्ग्यां कथय सुकृतिनः कीदृशाःस्युः पुमांसः
कं धत्ते कश्च धत्ते गगनतलमलं प्रेक्षणीयं जनानाम् ॥ २ ॥
पुष्पः कीदृक् चकास्ति स्फुटनवकुसुमाशोकमासाद्य कान्तं
किं मुञ्चन्त्यम्बुवाहा भवदरिनिवहे संज्वरः किं भवस्य ।
किं नेत्रप्रावृतिःस्याद्‌तिशयलघवः के च को व्रीहिभेदः
प्रायेण प्रावृषेण्याः प्रियतमदिवसाः कीदृशाः कीदृशास्युः॥३॥
अञ्जनाभमहावारिवाहौघनिचिताम्बराः ।
कदम्बकान्दलीकन्दरजः पञ्चलवायवः ॥ ४ ॥
कुर्य्यादुद्वेगवन्तं कमपि निशि सरः कीदृशं कास्ति वक्त्रे
वक्त्रानिम्बःकयास्यात् परिषदिनियतं मन्दसम्बोधनं किम् ।

वर्णोपान्त्यद्दम्भूषु: किमसुररिपुणा नन्दगोपालयेऽस्तं
कः प्रालेयाद्रिपुत्रीकुचकलशलुठत्पाणिरेणाङ्कमौलिः ॥ ५ ॥
कीदृक् कस्येह बन्धुः सुतमपहरत् प्रेयसी का लयान्ते
कीदृग् भीतिं विधत्ते धनुरवनिरुहां कश्चिदामन्त्रयस्व ।
दैत्यः कंसद्विषा कः कथय विनिहतो गद्गदः कः प्रतीतः
कीदृक्कीदृग्वसन्तः प्रियतम ! भवतः प्रीतये नित्यमस्तु ॥ ६ ॥

कोकिलालापवाचालसहकारमनोहरः ।
अशोकस्तवकालीनमत्तालिमधुरस्वनः ॥ ७ ॥

इति श्लोकोत्तरजातिः ।

का चक्रे हरिणा धने क्षपणधीः कीदृग् भुजङ्गेऽस्ति किं
कीदृक् कुम्भसमुद्भवस्य जठरं कीदृग् यियासुर्वधूः ।
शोकः कीदृगभाषितः सुजातना कीदृङ् नभो निर्मल
क्षोणीमाह्वय सर्वगं किमुदितं रात्रौ सरः कीदृशम् ॥ ८ ॥
कुमुदवनपरागरञ्जिताम्भो विहितगमागमकोकमुग्धरेखम् ।
बन्धः पृच्छति किं मुरारिशयनं का हन्ति रूपं नृणां
कीदृग्वीरजनस्य कोऽतिगहनः सम्बोधयावस्थितम् ।
का धात्री जगती बृहस्पतिबधूः कीदृक् कविः कीदृतः
कोऽर्थः किं भवता कृतं रिपुकुलं कीदृक् सरो वासरे ॥ ९ ॥
विकचवारिजराजिसमुद्भवोच्छलितभूरिपरागविराजितम् ।

इति खण्डोत्तरजातिः ।

बिभर्त्ति वदनेन किं क इह सत्वपीडाकरं
कुलं भवति कीदृशं गलितयौवनं योषिताम् ।

बभार हरिरम्बुधेरुपरि काश्च केन स्तुते
हतः कथय कस्त्वया नगपते भयं कीदृशात् ॥ १० ॥

विषमपादनिकुञ्जगताहितः ।

हरिर्वहति कान्यवास्थरिपु का गता काश्वका
कमर्चयति रोगवान् धनवती पुरी कीदृशी ।
हरिः कमधरद्बलिप्रभृतयो धरां किं व्यधुः
कया सदसि कस्त्वया वद जितोऽम्बुधिः कीदृशः ॥ ११ ॥

कुम्भीरमीनमकरागमदुर्गवारिः । इति पादोत्तरजातिः ।

चत्वार्य्यराणि पादाभ्यां नेमिं पादद्वयेन च ।
लिखित्वा दक्षिणावर्त्तं चक्रं प्रश्नमवेहि मे ॥ १२ ॥

कं चौरस्य च्छिनत्ति क्षितिपतिरनघः किं पदं वक्ति कुत्रां
क्षोणीसम्बोधनं किं वदति कमलभूः काच विश्वं बिभर्त्ति ।
चक्राङ्गामन्त्रणं किं कथमपि सुजनः किं न कुर्य्यादनार्य्ये
कीदृग्भोक्तुः पुरं स्यात्पयसि वद कुतो मीनपंक्तिर्बिभेति ॥१३॥

किं स्वच्छं शारदं स्याद्वदति वृषगतिः कोऽश्रुमालीपवित्रः
कोऽस्मिन् किं जीवनं कां विरचयति कविर्वक्ति सम्बोधनं किम्।
मा कां घ्नन्ति स्त्रियः कन्तनुरसुररिपोः कीदृशी काच मूकः
सम्यक्प्रीतिस्तडागः प्रियतम! तनुते कीदृशः कीदृशस्ते ॥१४॥

करंकुकोककुररकलहंसकरम्बितः ।
सरोजकोमलोद्गारनीरसंसक्तमारुतः ॥ १५ ॥

इति चक्रजातिः ।




वर्णद्वयद्वयैकैकदलभूतदलाष्टकम् ।
सर्वोत्तराद्यवर्णेन पद्मं स्यात् कृतकर्णिक ॥ १६ ॥

पुष्पात्मा वद कीदृशः सरसिजैः के मोदिताः कीदृशः
तद्वैरीगतचक्षुषः कुलमभूत् कीदृक् त्वया के जिताः ।
बद्धालिः सलिलाशयः कथय भोः कीदृक् च आक्षेपवाक्
शब्दः कुत्र न तस्करादिकभयं दत्ते भवेत्नायशः ॥ १७ ॥
अप्पित्तं गवि कीदृशं निगदितो मुक्तः पुमान् कीदृशः
कस्माद्बिभ्यति कौशिका भुवि क्षतः कीदृक् त्वया तस्करः ।
हस्ती स्यान्ननु कीदृशो बहुमतः शोथोरणः कीदृशः
कीदृक्षः पुरुषः पराप्रतिहतः कीदृक् भवेद्वासुकिः ॥१८॥

अलयः अपश्चत् अबन्धः अहस्तः अगजः अहीनः

इति पद्मोत्तरजातिः ।




काकस्येव पदं यत्र यत्तत्काकपदं मतम्।
तिर्यगन्योन्यरेखाभिर्गोमूत्री द्विपदीद्वये ॥ १९ ॥

कुतः कः सम्प्राप्तो दृक् कथय विषवैद्य स्फुटमिदं
रिपोः कः कीदृक्षो भवति वशगः कश्च करभः।
प्रवीणः सम्बोध्यः सुभग ! वद कौ रत्नवचनौ
सुरूपे विख्यातिं जगति महती का गतवती ॥ २० ॥

नागदरतः। नागतनयः। नागरमणी। इति काकपदजातिः।




कामाद्रु युवतीममङ्गलवती कीदृग्ग्रहाणां गतिः
सम्बोध्या वत मत्सरविधनपरः कीदृग्भवेत्पामरः।

कीदृग्वाल्मीकिवेश्म कोऽस्तनमुरोधत्ते सुरैरच्यते
गौः कीदृङ्न कदापि कम्बुरहितं वाञ्छन्ति कं योषितः ॥२१॥
कीदृक् पान्यकुलस्तमोहरति का किञ्चङ्गसम्बोधनं
रम्या चम्पकशाखिनां कथय का कपाटजर्थं भवेत् ।
किं क्षिप्तं वलिवैरिणा मुररिपोः कान्ता श्मशानेऽस्ति का
क्ष्मा कीदृग् भवति स्म पूर्वमधुना कीदृक् पुनर्वर्त्तते ॥ २२ ॥

अजरामशुभाचारवलिशीलविनोदिता ।
भुजङ्गमनिभासारकलिकालजनोचिता ॥ २३ ॥

गोमूत्रजातिः ।

अ ज रा म शु भा चा र व लि शी ल वि नो दि ता
भु ज ङ्ग म नि भा सा र क लि का ल ज नो चि ता

इति गोमूत्रिकाबन्धः ।

वर्णैरेकेन वा द्वाभ्यां सर्वैर्वा सर्वदिग्गतैः ।
उत्तरैः सर्वतोभद्रं दुष्करं तदिदं यथा ॥ २४ ॥

कस्त्यागी धातुरत्नस्तव रिपुहृदि का भूषणं के स्तनानां
को दुःखी कश्च शब्दो वदति वद शुचङ्गौरिपू ख्यातवीर्य्यौ ।
शृङ्गारी कीदृशः का रणशिरसि भयाद्भङ्गमाप्नोति सेना
को दानार्थाभिधायी शिर सिशिरसि कौ युध्यतः संप्रहृत्य॥२५॥
कीदृक्तोयार्थिनो स्तो भवति मदकरः प्रायशः को दुराढ्ये
कस्मिन्मन्दायतेऽसौ नियतमुडुपतिः प्रेयसी का मुरारेः ।
विख्यातौ वाहनौ कौ द्रुहिणमुरभिदोः कीदृगाखेटकस्तौ
कीदृग्मेवाचिराभा समितिगतभयाः के गतीकश्च धातुः ॥२६॥

हारावी । इति सर्वतोभद्रजातिः ।




प्रतिलोमानुलोमाभ्यामुत्तरेण गतागतम् ।
मध्यवर्णविलोपेन तच्चानेकप्रकारकम् ॥ २७ ॥

वद वल्लभ सर्वत्र साधुर्भवति कीदृशः भोविन्दे ।
नानासिद्धिर्मे नन्दवेश्मनि काभवत् ॥ २८ ॥ दीनरक्ष ।

यत्नादन्विष्य का ग्राह्या लेखकैर्मसिमल्लिका ।
घनान्धकारनिःशङ्कं मोदते केन बन्धकी ॥ २९ ॥ नारिकेरज ।

असुरसुरनरेन्द्ररुह्यते का शिरोभिः
तनुरपि शुचिवस्त्रे कोऽतिविस्तारमेति ।
वदति कमलयोनिः सेव्यते केन पुष्पं
मधुरमसृणमह्वी का भवेदुत्पलस्य ॥ ३० ॥

| | | |
|---|---|---|
| | ना | |
| मा | लि | का |
| | का | |

हिमांशुखण्डं कुटिलोज्ज्वलप्रभं
भवेद्वराहप्रवरस्य कीदृशम् ।
विहाय वर्णं पदमध्यसंस्थितं
न किं करोत्येव जिनः करोति किम् ॥ ३१ ॥ दंष्ट्राभम् ।

वसन्तमासाद्य वनेषु कीदृशाः
पिकेन राजन्ति रसालभूरुहाः।
निरस्य वर्णद्वयमत्र मध्यमं
तव द्विषां कान्ततमा तिथिश्च का ॥ ३२ ॥
कान्तगिरा। गतप्रत्यागतजातिः।

आदौ मध्ये तथान्ते वा वर्द्धन्ते वर्णजातयः।
एकद्वित्र्यादयो यत्र वर्द्धमानाक्षरं हि तत् ॥ ३३ ॥

किमनन्ततया ख्यातं पादेन व्यङ्गमाश्रय।
जनानां लोचनानन्दङ्के तन्वन्ति घनात्यये ॥३४॥ खञ्जनाः।

उरःस्थलं कोऽत्र विना पयोधरं
बिभर्त्ति सम्बोधय मारुताशनम्।
वदन्ति कं पत्तनसम्भवं जनाः
फलञ्च किं गौडवधूकुचोपमम् ॥ ३५ ॥ नागरङ्गम्।

प्रायेण नीचलोकस्य कः करोतीह गर्वताम्।
आदौ वर्णद्वयं दत्त्वा ब्रूहि के वनवासिनः ॥ ३६ ॥ शवराः।
सानुजः काननङ्गत्वा नैकषेयान् जघान कः।
मध्ये वर्णत्रयं दत्त्वा रावणः कीदृशो वद ॥३७॥ राक्षसोत्तमः।
धत्ते वियोगिनी गण्डस्थलपाण्डुफलानि का।
वद वर्णौ विधायान्ते शीता हृष्टा कयाभवत्॥ ३८ ॥
विष्णोः का वल्लभा देवी लोकत्रितयपावनी। लवलीलया
वर्णमाद्यं तयोर्दत्त्वा कः शब्दस्तुल्यवाग्वद ॥ ३९ ॥
समानः। इति वर्द्धमानाक्षरजातिः।

आदितो मध्यतोन्ताद्वा हीयन्ते वर्णजातयः।
एकद्वित्राद्यो यत्र हीयमानाक्षरं हि तत्॥ ४०॥

वसन्तमासाद्य विकासि राजते
वनेषु किं वल्लभ पुष्पमुच्यताम्।
विहङ्गमं कञ्च परिस्फुटाक्षरं
वदन्ति कम्पङ्कजसम्भवं विदुः॥ ४१॥ किं शुकम्।

समुच्यते कुत्र न याति पांशुलाः
समुच्यते कुत्र भवं भवेज्जलात्।
समुच्यते कुत्र तवापयात्यरिः
प्रहीनसम्बोधनवाचि किं पदम्॥ ४२॥ हिमकरे।

तपस्विनोऽत्यन्तमहासुखाशया
वनेषु कस्मै स्पृहयन्ति सत्तमाः।
इहाद्यवर्णद्वितयं निरस्य भोः
सदा स्थितं कुत्र च सत्त्वमुच्यताम्॥ ४३॥ तपसे।

पुरुषः कीदृशो वेत्ति प्रायेण सकलाः कलाः।
मध्यवर्णद्वयं त्यक्त्वा ब्रूहि कः स्यात्सुरालयः॥ ४४॥

नागरिकः।

यजमानेन कः स्वर्गहेतुः सम्यग्विचार्य्यते।
विहायाद्यन्तयोर्वर्णौ गोत्वं कुत्रस्थितं वद॥ ४५॥

यागविधिः। हीयमानाक्षरजातिः।

अन्योन्याक्षरवर्त्तिन्या चैकान्तरितयाऽथवा।
शृङ्खलाबन्धः इत्युक्तो ग्रन्थिमान्नागपाशकः॥ ४६॥

पवित्रमतिदुर्लभं किमिह किं भटा मेऽग्रणं
ब्रवीति धरणीधरस्तु किमजीर्णसम्बोधनम् ।
हरिर्वदति को जितो मदनवैरिणा संयुगे
तनोति ननु कः शिखण्डिकुलताण्डवाडम्बरम् ॥ ४७ ॥

पयोधरसमयः ।

भवति जयिनी काञ्ची सेनाश्रयाधरभूषणं
वहति किमहिः पुष्पं कीदृक् कुसुम्भसमुद्भवम् ।
महति समरे वैरी वीर त्वया वद किं कृतः
कमलमुकुले भृङ्गः कीदृक् पिबन्मधु राजते ॥ ४८ ॥

परागरञ्जितः । शृङ्खलाजातिः ।

आह्वानं किं भवति हि तरोः कस्यचित् प्रश्नविज्ञाः
प्रायः कार्य्यं किमपि न कलौ कुर्वते के परेषाम् ।
पूर्णं चन्द्रं वहति ननु का पृच्छति ग्लानचक्षुः
केनोदन्या जनितमसमं कष्टमाप्नोति लोकः ॥ ४९ ॥

नीरापकारेण ।

का संबुद्धिः सुभट भवतो ब्रूहि पृच्छामि सम्यक्
प्रातः कीदृग् भवति विपिनं संप्रवृद्धैर्विहङ्गैः ।
लोकः कस्मिन् प्रथयति मुदं का त्वदीया च जैत्री
प्रायो लोके स्थितमिह सुखं जन्तुना कीदृशेन ॥ ५० ॥

विहारसेविना । एकान्तरितशृङ्खलाजातिः ।

गोष्ठी विदग्धजनवत्यपि शोचनीया
कीदृग् भवेत्तरणिरश्मिषु का सदास्ति ।

दुर्वारदर्पदलितामरनायकापि
कीदृश्यकारि सुरशत्रुचमूरनेन ॥ ५१ ॥

तारकविरहिता ।

|  | क |  |
|---|---|---|
| वि | र | हि |
|  | ता |  |

कीदृक् परैरपहृतो भवति क्षितीशः
पृच्छत्यमुत्र इह किं विदितं पवित्रम् ।
विच्छिन्नपाणिचरणौ जनको यदीयः
कीदृक् परैरभिहितः स पुमान् पुनः स्यात् ॥ ५२ ॥

व्यङ्गतनयः । नागपाशजातिः ।

भाषाभिश्चिलितं यत् स्यात्संस्कृतप्राकृतादिभिः ।
सन्तश्चित्रन्तदिच्छन्ति संश्लिष्टं लैकभाषया ॥ ५३ ॥

किं न स्यात्कीदृगत्रं महतोपि च तादृशस्य जलराशेः ।
दिनअरकिरणध्वंसण पडिउत्तं होइ किं गोसे ॥ ५४ ॥

कमलवणम् ।

मत्यहितमम्बु कीदृक् पृच्छति रोगी निशासु किं भाति ।
कोऽनङ्गो वदति मृगः खे गम्मइ केरिसा रहणा ॥ ५५ ॥

अविसामभमिरेण । संस्कृतप्राकृतजातिः ।

प्रायो बिभ्यति कीदृशा द्विरिगजाइन्तप्रहीणा गजाः
पृथ्वी सम्प्रति कीदृशी नृपतिना राजन्वती राजते ।
प्रायः प्रावृषि कीदृशी गिरितटी धत्ते च कः कज्जले
मज्झिवलिये घणच्चयदिवे जादं सरी केरिसम् ॥ ५६ ॥

सरदादवताविद्वाहिरम् ।

छत्तं कीदृशमङ्गं दन्तभवं कं वदन्ति विद्वांसः ।
अतिलघुवाचि पदं किं केरिसुः सुअणेसु होइ जणो ॥ ५७ ॥

विस्त्रन्तमण । इति संस्कृतापभ्रंशजातिः ।

किं सुखमाहुः प्रायः केशविकारश्च का हरेर्दयिता ।
कथमाभा कस्मिंश्चिमि वो लुब्ध इवीरपुलिसाणम् ॥ ५८ ॥

शमलकम्मालम्भे ।

कास्तम्बेरमसुत इति विख्यातः पृच्छति स्फुटं हरिणः ।
अहिणवणअलीरणो असाहुणो केण उज्जलइ ॥ ५९ ॥

कलभएण । संस्कृतमागधिकम् ।

कीपारणं किमरुणाग्रसरस्य पूर्वं
काष्ठाग्रनिष्ठिततनोरुपमानपात्रम् ।
पत्तं खणेण मरणं सअरः सरणं
पुत्तेहि किं पविसिऊण तुरङ्गमत्थम् ॥ ६० ॥

कपिलपणम् ।

कं प्रीणयन्ति जलदाः सैन्यं कीदृक् पलायते समरात् ।
धत्ते शिरोधरा किं रुद्दसिरं केरिसम्भोदि ॥ ६१ ॥

चातकं कातरं कम् । संस्कृतपैशाचिकम् ।

को वर्णाद्यः क्व च जलधिसुता कश्च दीर्घादिसंज्ञं
प्राहुर्बुद्धाः कमजयदसौ तार्किकैः के क्रियन्ते ।
आमन्त्र्यो विः कथय विदितं किं पदं हेतुवाचि
जाणन्तेडं महइ महिला साविवोलेइ कोसे ॥ ६२ ॥

अरोचन्मारं वादाविहि ।

शब्दः कः स्यात्पुरुषवचनं कुण्डली को स्मरारिः
कामम्भोधेर्हरिरुदहरद्दीबधः पृच्छतीदम् ।
ह्रण्डी कुण्डी अणसिणधरे कोस अम्हार अत्थं
ये पुच्छिल्ला सउण परिहारुत्तरं कोसदेइ ॥ ६३ ॥

नाह्वीकुम्भार। संस्कृतलौकिकं इति चित्रजातिः ।

को निवसइ स्वच्छन्दं सुन्दरि गिरिगहकुञ्जमज्झम्मि ।
सह अज्जुणेण योद्धुं सिहि समणो केरिसो होइ ॥ ६४ ॥

सरहससवाराहवम्मो ।

काहरइ मणं पइणो गुणगणजोवण सलाहणिगास्स ।
कस्र चड़चड़ेति सहाहुआ सना केरिसाहोन्ति ॥ ६५ ॥

सरिसवल्लआ । इति शुद्धप्राकृतम् ।

पाणिगाहणणि अंसणुसोहइ केहि मण्डिअम् ।
साहसु बहुवीर पइणो रिइबलं केहिं खण्डिअम् ॥ ६६ ॥

समरङ्गणेहिम् ।

रसिअहु केण उआड़ण किज्जइ
जुअइ भाणसु केण उविज्जइ ।
तिसि अलोअ खणु केण सुहिगाइ

एहु पडु मम भुअणे गिम्धद ॥ ६७ ॥

णीरसराइण । शुद्धापभ्रंशम् ।

सुअलो मेहं पुच्छइ पुच्छइमेहोवि तन्तहा सुअलम् ।
केणह आसअलसुआ केण जणो विसइ पाआलम् ॥ ६८ ॥

बलाहककविलेन ।

धवलुज्जलेहिं केहि सोहइ धलणी मसाण देसस्स ।
णिलअस्सरकवणाला केहिं पलिवेटि आहोन्ति ॥ ६९ ॥

णलकलकेहिम् । शुद्धमागधिकम् ।

वैरी पृच्छइ ककणे रोचइ कसणो घणो केह्मिम् ।
सच्चाइणकेहिं समत्थन्ति सच्चंणि हितं कता दम्मि ॥ ७० ॥

अहितपकवेहिम् ।

पत्तूण किं भइ अणो णिधणे हताणं
अद्वासण फचति चम्फणि सूअणस्य भोत्तूण ।
खोरतर तुक्खस आइ पावामोहं
धआकरणं लप किं लहन्ति ॥ ७१ ॥

विसमरणम् । शुद्धपैशाचिकम् ।

जाणी आणइ णिं भेदे भलि
साकिस वुच्चइ वोल्लरे सभरि ।
जोतिलसरीस वपोड़यि जाणी
कोस भणीज्जइ सोविस्साणी ॥ ७२ ॥

सुतेल्लोशुद्धलौकिकम् । इति संशुद्धजातिः ।

एतावतापि दिङ्मात्रं प्रश्नानां दर्शितं मया ।
येन येन हि माद्यन्ति तद्विधस्तत्तदूह्यताम् ॥ ७२ ॥

इति श्रीधर्म्मदासविरचिते विदग्धमुखमण्डने
तृतीयः परिच्छेदः ।

---

व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात् ।
यत्र वाह्यान्तरावर्थौ कथ्येते सा प्रहेलिका ॥ १ ॥
सा द्विधार्थी च शाब्दी च विख्याता प्रश्नशासने ।
आर्थी स्यादर्थविज्ञानाच्छाब्दी शब्दविभागतः ॥ २ ॥
तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः ।
गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः ॥ ३ ॥

पानीयकुम्भः ।

आपाण्डु पीनकठिनं वर्तुलं सुमनोहरम् ।
करैराकृष्यतेऽत्यर्थं किं वृद्धैरपि सस्पृहम् ॥ ४ ॥

पक्वविल्वफलम् । इत्यार्थीजाति ।

दुर्वारवीर्यं सरुषि त्वयि का प्रसुप्ता
श्यामा सपत्नहृदये सुपयोधरा च ।
तुष्टे पुनः प्रणतशत्रुसरोजसूर्ये
सैवाद्य वर्णरहिता वद नाम का स्यात् ॥ ५ ॥ शस्त्री ।
सदारिमध्यापि न वैरियुक्ता नितान्तरक्तापि सितैव नित्यम् ।

यथोक्तवादिन्यपि नैव दूतिका का नाम कान्तेति निवेदयाशु॥६॥

सारिका। प्रश्नोजातिः।

नीरस आउण सो बहुगुणवन्तउ भमइ

निरन्तरु णोश्चलहोन्तउ।

तरुगिज्जइ णउण फलुपत्तु ससु

योपरि आणइ पावइ सोविजसु॥ ७ ॥ गुणरुकेवा।

घर घर चल्लइ सअलपि आरी

जीवन्ति होइ वैरिणोः णारी।

खाबन्धइ खन मुञ्चइ खण एकल्ली

तह जाणह जह जाइ णपेल्ली॥ ८ ॥

पाशासारी। इति प्रहेलिकाजातिः।

कालसारादिकं छद्मजमरादिगूढ़कम्।

विदग्धा दुर्विदग्धानां कुर्वते दर्पशान्तये॥ ९ ॥

अनुनेतुं मानिन्या दयितश्चरणे सरागचरणायाः।

यावत् पतितः स तया तत्क्षणमवधीरितः कस्मात्॥१०॥

रजस्वला यतः।

अवलोक्य स्तनौ वध्वा गुञ्जाफलविभूषितौ।

निःश्वस्य रोदितुं लग्ना कुतो व्याधकुटुम्बिनी॥ ११ ॥

असारस्तनयो यतः। कालसार जातिः।

दरदिवुचू अमडलं पिच्छि असहि आरा विरहिणीं सहियम्।

णमिओकं केल्लितरु चूओचलणाह ओकतो॥ १२ ॥

पिच्छन्तमणिमिसच्छ पिच्छि अबहुआए भत्तिभिरुक् वअंरम्।

दंसिअकआइ सीसे कतोदीजाइ कुसुमाइ ॥ १३ ॥

इतिकालसारादिच्युतजातिः ।

रविसुतकृतगोकर्णः श्रुतिविषयगुणांबरो वनात्मधरः ।
नरकगिरो जगदखिलश्चिरमव्यादसमरुक्पाणिः ॥ १४ ॥

कुम्भेन सुग्रीनयनाश्रयास दग्धोन्मदादर्दुरहर्षकाले ।
स्वजन्मभच्चप्रियभोजनाशा नृत्यन्ति भीमानुजगोजभाजः।१५॥

इत्यजमारादिगूढ़जातिः ।

वाताच्छीतिररिप्रोरं बोहरताम्महासुरीदयितः ।
वीड्बाह्यानौकावार्वाहाभोसमस्तानाः ॥ १६ ॥

इति पदगूढ़जातिः ।

दयावान् प्रयतः शुद्धः प्रबुद्धकमलेक्षणः ।
पापापहस्त्रिभुवनं बुद्धः पायादपायतः ॥ १७ ॥

न सज्जति क्वचिद्दोषे प्रीणाति जगतां मनः ।
य एकः स परं श्रीमांश्चिरं जयति सज्जनः ॥ १८ ॥

इति पादगूढ़जातिः ।

दृष्टो मया सखि ब्रूहि रोदयित्वा गतोद्य माम् ।
भद्रे कल्याणिनी भूयाः प्राचीं पश्यातिनिर्मलाम् ॥ १९ ॥

डाहिणपवण विग्गासं मीलइ लोअणाइ पहि अवङ्क ।
णिउण सही उणतीएकस्से विवरे ढक्के इठ ॥ २० ॥

अर्थगूढ़जातिः ।

स्तुतिनिन्दा तदर्थत्वाद्यथमर्थद्वयोदयात् ।
निह्नवात्कथितस्यापि शब्दव्याजादपह्नुतिः ॥ २१ ॥

बहुदोषो गुणध्वंसी गोहन्ता जनपीड़कः।
करोतु विरथो लोकमस्तमाप्तमहोदयम् ॥ २२ ॥
विष्णोःस्तुतिनिन्दे।
सततमहितजनवत्सलबहुभयपापक्रियापरिभ्रष्टः।
इह कलिकाले कुपतिर्जगतस्त्वं परमदुःखकरः ॥ २३ ॥
राज्ञः स्तुतिनिन्दे। इति स्तुतिनिन्दाजातिः।
प्रसन्नवदनः श्रीमानयं लब्धगुणोदयः।
करप्रचारसुभगो राजा नन्दयति प्रजाः ॥ २४ ॥
चन्द्रभूपती।
विनायकाहितप्रीतिर्देवो गङ्गां बभार यः।
सर्वदो माधवः स त्वामव्याद्व्यर्थविक्रमः ॥ २५ ॥
शङ्करवासुदेवौ। द्व्यर्थजातिः।
शीत्कारं जनयति व्रणयत्यधरं तनोति रोमाञ्चम्।
नागरिकः किमु मिलितो नहि नहि सखि हैमनः पवनः॥२६॥
रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति।
तत्किं तरुणी नहि नहि वाणी बाणस्य मधुरशीलस्य ॥२७॥
अपह्नुतिजातिः।
स्वरेषु बिन्दुयुक्तेषु हलां यदवबोधनम्।
तद्बिन्दुमदिति प्राहुः केचिद्बिन्दुमतीमिति ॥ २८ ॥
मनसौ नाभसीत्याद्याः बुद्ध्यादौ न्यासतो हि याः।
बाहुल्येनाप्रयोगात्तु नेह तासां प्रदर्शनम् ॥ २९ ॥
विनयनचूड़ारत्नं मित्रं सिन्धोः कुमुद्वतीदयितः।

अयमुदयति मुद्राभञ्जनः पद्मिनीनामुदयगिरिवनालीबालमन्दारपुष्पम् ...

अयमुदयति कुङ्कुमारुणवरमणीवदनोपमश्चन्द्रः ॥ ३० ॥

इति विन्दुमज्जातिः।

क्रियादिकं पदे यत्र पदसाधनकौशलात्।
स्फुटं न लक्ष्यते तत्स्यात् क्रियागुप्तादिकं यथा ॥ ३१ ॥

राजन्! नव घनश्याम निस्त्रिंशाकर्षदुर्जय।
आकल्पं वसुधामेतां विद्विषोऽद्य रणे बहून् ॥ ३२ ॥

पुंस्कोकिलकुलस्यैते मितान्तं मधुरारवैः।
सहकारद्रुमारम्या वसन्ते काममपि श्रियम् ॥ ३३ ॥

इति क्रियागुप्तजातिः।

न करोतु नाम रोषं न वदतु परुषं न हन्तु वा शत्रून्।
रचयति महीमखिलां तथापि धीरस्य वीरस्य ॥ ३४ ॥

शरदिन्दुकुन्दधवलं नगनिलयरतं मनोहरन्देवम्।
यैः सुकृतं कृतमनिशन्तेषामेव प्रसादयति ॥ ३५ ॥

कर्तृगुप्तम्।

शीतलरासारसंवाही सरोजवनमारुतः।
प्रक्षोभयति पान्थस्त्री निश्वासैरिव मांसलः ॥ ३६ ॥

सुभग! तवाननपङ्कजदर्शनसञ्जातनिर्भरप्रीतेः।
शमयति कुर्वन् दिवसः पुण्यवतः कस्य रमणीयः ॥ ३७ ॥

कर्मगुप्तम्।

पूतिपङ्कमयेऽत्यर्थं कासारे दुःखिता अमी।
दुर्वारा मानसं हंसाः गमिष्यन्ति घनागमे ॥ ३८ ॥

अहं महानसायातः कल्पितो नरकस्तव ।
मया मांसादिकं भुक्तं भीमं जानीहि मां वक ॥३९॥

कारणगुम्फम् ।

अम्भोरुहमये स्नात्वा वापीपयसि कामिनी ।
ददाति भक्तिसम्पन्ना पुष्पं सौभाग्यकामया ॥ ४० ॥
प्रशस्त्यायुक्तमार्गस्य तव सम्मानिताश्रिताः ।
स्पृहयन्ति न के नाम गुणरत्नालय प्रभो ! ॥ ४१ ॥

सम्प्रदानगुम्फम् ।

शिलीमुखैस्त्वया वीर ! दुर्वारैर्निर्जितो रिपुः ।
बिभेत्यत्यन्तमलिनोः वनेऽपि कुसुमाकुले ॥ ४२ ॥
सरसीतोयमुद्धृत्य जनः कन्दर्पकारकम् ।
पिबत्यम्भोजसुरभिस्वच्छमेकान्तशीतलम् ॥ ४३ ॥

अपादानगुम्फम् ।

या कटाक्षच्छटापातैः पवित्रयति मानवम् ।
एकान्तरोपितप्रीतिरस्ति सा कमलालया ॥ ४४ ॥
विपद्यमानता सिद्धा सर्वस्यैव निरूपणः ।
तथाहि भवापादाभ्यां निर्वाणं इन्त्ययं जनः ॥ ४५ ॥

अधिकरणगुम्फम् । कारकगुम्फजातिः ।

तूणीव मधुमासेऽस्मिन् रसालद्रुममञ्जरी ।
इयमुन्निद्रमुकुलैः भाति न्यस्तशिलीमुखा ॥ ४६ ॥
प्राप्तमदो मधुमासः प्रबलारुक् प्रियतमो विदूरस्थः ।

असतीयं संनिहिता हा हतशीला सखी नियतम् ॥४७॥

सम्बन्धगुप्तजातिः ।

सर्वज्ञेन त्वया किञ्चिन्नास्त्यविज्ञातमीदृशम् ।
मिथ्या वचस्तथा हि त्वमसत्यं वेत्सि न क्वचित् ॥ ४८ ॥

कमले कमले नित्यं मधूनि पिबतस्तव ।
भविष्यति न सन्देहः कष्टं दोषाकरोदये ॥ ४९ ॥

आमन्त्रितगुप्तजातिः ।

विषादी भैक्ष्यमश्नाति सदारोगं न मुञ्चति ।
दृष्टेनापि त्वया वीर ! शम्भुनारिः समः कृतः ॥ ५० ॥

नित्यमाराधिता देवैः कंसस्य द्विषतस्तनुः ।
मण्डलाग्रं गदां शङ्खं चक्रं जयति बिभ्रती ॥ ५१ ॥

समासगुप्तजातिः ।

नितान्तस्वच्छहृदयं सखि ! प्रेयान् समागतः ।
त्वां चिराद्दर्शनप्रीत्या यः समालिङ्ग्य रंस्यते ॥ ५२ ॥

कलिकालमियन्तावदगस्त्यस्य मुनेरपि ।
मानसं खण्डयत्यत्र शशिखण्डानुकारिणी ॥ ५३ ॥

लिङ्गगुप्तजातिः ।

प्रमोदं जनयन्त्येव सदाराः गृहमेधिनः ।
यदि धर्म्मश्च कामश्च भवेतां सङ्गतावुभौ ॥ ५४ ॥

सुब्वचनगुप्तम् ।

कस्मात्त्वं दुर्बलासीति सख्यस्तां परिपृच्छति ।
त्वयि सन्निहिते तास्तु दद्यात् किं कथयोत्तरम् ॥ ५५ ॥

लिङ्गवचनगुप्तम् । वचनगुप्तजातिः ।

अन्योऽप्यर्थः स्फुटो यत्र मात्रादिच्युतकेष्वपि ।
प्रतीयते विदुस्तज्ज्ञास्तन्मात्राच्युतकादिकम् ॥ ५६ ॥
महाशयमतिस्वच्छं नीरं सन्तापशान्तये ।
खलावासादतिश्रान्ताः समाश्रयत हे जनाः ॥ ५७ ॥
तुषारधवल स्फूर्जन्महामणिधरोऽनघः ।
नागराजो जयत्येकः पृथिवीवरवल्लभा ॥ ५८ ॥

मात्राच्युतजातिः ।

सुश्यामा चन्दनवती कान्ता तिलकभूषिता ।
कस्यैषा नगभूः प्रीतिं भुजङ्गस्य करोति न ॥ ५९ ॥
यथा सत्प्रसवः स्निग्धः सन्मार्गविहितस्थितः ।
तथा सर्वाश्रयः सत्यमयमेव कुलद्रुमः ॥ ६० ॥

विन्दुच्युतकजातिः ।

महीरुहो विहङ्गानामेते हृद्यैः कलापिनाम् ।
विरुतैः स्वागतानीव नीरवाहाय कुर्व्वते ॥ ६१ ।
अगस्त्यमुनेः शापाद्ब्रह्मस्यन्दनमाश्रितः ।
महासुखात् परिभ्रष्टो नहुषः सर्पतां गतः ॥ ६२ ॥

विसर्गच्युतकजातिः ।

महानपि सुधीरोऽपि बहुरत्नयुतोऽपि सन् ।
विरसः कुपरीवारः नदीनः केन सेव्यते ॥ ६३ ॥
सुशीलः स्वर्णगौराभः पूर्णचन्द्रनिभाननः ।
सुगतः कस्य न प्रीतिं तनोति हृदि संस्थितः ॥ ६४ ॥

असतीयं संनिश्चिता हा हतशीला सखी नियतम् ॥४७॥

सम्बन्धगुप्तजातिः ।

सर्वज्ञेन त्वया किञ्चिन्नास्त्यविज्ञातमीदृशम् ।
मिथ्या वचस्तथा हि त्वमसत्यं वेत्सि न क्वचित् ॥ ४८ ॥

कमले कमले नित्यं मधूनि पिबतस्तव ।
भविष्यति न सन्देहः कष्टं दोषाकरोदये ॥ ४९ ॥

आमन्त्रितगुप्तजातिः ।

विषादी भैष्यमश्नाति सदारोगं न मुञ्चति ।
दृष्टेनापि त्वया वीर ! शम्भुनारिः समः क्षतः ॥ ५० ॥

नित्यमाराधिता देवैः कंसस्य द्विषतस्तनुः ।
मण्डलाग्रं गदां शङ्खं चक्रं जयति बिभ्रती ॥ ५१ ॥

समासगुप्तजातिः ।

नितान्तस्वच्छहृदयं सखि ! प्रेयान् समागतः ।
त्वां चिरादर्शनप्रीत्या यः समालिङ्ग्य रंस्यते ॥ ५२ ॥

कलिकालमियन्तावदगस्त्यस्य मुनेरपि ।
मानसं खण्डयत्यत्र शशिखण्डानुकारिणी ॥ ५३ ॥

लिङ्गगुप्तजातिः ।

प्रमोदं जनयन्त्येव सदाराः गृहमेधिनः ।
यदि धर्मश्च कामश्च भवेतां सङ्गतावुभौ ॥ ५४ ॥

सुव्वचनगुप्तम् ।

कस्मात्त्वं दुर्बलासीति सख्यस्तां परिपृच्छति ।
त्वयि सन्निहिते तासु दद्यात् किं कथयोत्तरम् ॥ ५५ ॥

लिङ्गवचनगुप्तम् । वचनगुप्तजातिः ।

अन्योऽप्यर्थः स्फुटो यत्र मात्रादिच्युतकेष्वपि ।
प्रतीयते विदुस्तज्ज्ञास्तन्मात्राच्युतकादिकम् ॥ ५६ ॥
महाशयमतिस्वच्छं नीरं सन्तापशान्तये ।
खलावासादतिश्रान्ताः समाश्रयत हे जनाः ॥ ५७ ॥
तुषारधवल स्फूर्जन्महामणिधरोऽनघः ।
नागराजो जयत्येकः पृथिवीवरवल्लमा ॥ ५८ ॥

मात्राच्युतजातिः ।

सुश्यामा चन्दनवती कान्ता तिलकभूषिता ।
कस्यैषा नगभूः प्रीतिं भुजङ्गस्य करोति न ॥ ५९ ॥
यथा सत्प्रसवः स्निग्धः सन्मार्गविहितस्थितः ।
तथा सर्वाश्रयः सत्यमयमेव कुलद्रुमः ॥ ६० ॥

विन्दुच्युतकजातिः ।

महीरुहो विहङ्गानामेते हृद्यैः कलापिनाम् ।
विरुतैः स्वागतानीव नीरवाहाय कुर्व्वते ॥ ६१ ।
अगस्त्यमुनेः शापाद्ब्रह्मस्यन्दनमाश्रितः ।
महासुखात् परिभ्रष्टो नहुषः सर्पतां गतः ॥ ६२ ॥

विसर्गच्युतकजातिः ।

महानपि सुधीरोऽपि बहुरत्नयुतोऽपि सन् ।
विरसः कुपरीवारः नदीनः केन सेव्यते ॥ ६३ ॥
सुशीलः स्वर्णगौराभः पूर्णचन्द्रनिभाननः ।
सुगतः कस्य न प्रीतिं तनोति हृदि संस्थितः ॥ ६४ ॥

अक्षरच्युतकजातिः ।

तनोतु ते यस्य फणी गरुत्मान् पाणौ मुरारिर्दयिता च यस्याः ।
नाभ्यां स्फुरन् भद्र दमशुभ्रदेहः पद्मा गतिश्चक्रमसौ विरिञ्चिः ।६५॥
हरः क्षयी तापकरः सुरेशः शान्तो हरिर्गोत्ररिपुर्विवस्वान् ।
चन्द्रोऽहिजिह्वाश्रित इत्युपेक्ष्य लक्ष्म्या वृतः पातु विधिर्जगन्ति ।६६॥

स्थानच्युतकजातिः ।

भिक्षवो रुचिराः सर्वे सुरसाश्च जनप्रियाः ।
क्षमायामतिसम्पन्ना दृश्यन्ते मगधे परम् ॥ ६७ ॥
सत्यशीलो दयोपेतो दाता शुचिरमत्सरः ।
जिनः सर्वात्मना सेव्यः पदमुच्चैरभीप्सिता ॥ ६८ ॥

व्यञ्जनच्युतजातिः ।

स्फोटयित्वाक्षरं किञ्चित् पुनरन्यस्य दानतः ।
यत्रापरो भवेदर्थश्च्युतदत्ताक्षरं हि तत् ॥ ६९ ॥
सदागतिहतोच्छ्रायस्तमसो वशताम् गतः ।
अस्तमेष्यति दीनोऽयं विधुरेकः शिवंस्थितः ॥ ७० ॥
पूर्णचन्द्रमुखी रम्या कामिनी निर्मलाम्बरा ।
करोति कस्य न स्वान्तमेकान्तमदनोत्तरम् ॥ ७१ ॥

इति च्युतदत्ताक्षरजातिः ।

इति श्रीधर्मदासविरचिते विदग्धमुखमण्डने
चतुर्थः परिच्छेदः ।

समाप्तः ।

# रतिमञ्जरी ।

नत्वा सदाशिवं देवं नागराणां मनोहरम् ।
रचिता जयदेवेन सुबोधा रतिमञ्जरी ॥ १ ॥

रतिशास्त्रं कामशास्त्रं तस्य सारं समाहृतम् ।
सुप्रबन्धं सुसंक्षिप्तं जयदेवेन भण्यते ॥ २ ॥

पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा ।
शशो मृगो वृषोऽश्वश्च स्त्रीपुंसोर्जातिलक्षणम् ॥ ३ ॥

भवति कमलनेत्रा नासिकाक्षुद्ररन्ध्रा
अविरलकुचयुग्मा चारुकेशी कृशाङ्गी ।
मृदुवचनसुशीला गीतवाद्यानुरक्ता
सकलतनुसुवेशा पद्मिनी पद्मगन्धा ॥ ४ ॥

भवति रतिरसज्ञा नातिखर्वा न दीर्घा
तिलकुसुमसुनासा स्निग्धनीलोत्पलाक्षी ।
घनकठिनकुचाढ्या सुन्दरी बद्धशीला
सकलगुणसमेता चित्रिणी चित्रवक्त्रा ॥ ५ ॥

दीर्घातिदीर्घनयना वरसुन्दरी या
कामोपभोगरसिका गुणशीलयुक्ता ।
रेखात्रयेण च विभूषितकण्ठदेशा
सम्भोगकेलिरसिका किल शङ्खिनी सा ॥ ६ ॥

स्थूलाधरा स्थूलनितम्बभागा स्थूलाङ्गुली स्थूलकुचा सुशीला ।
कामोत्सुका गाढरतिप्रिया या नितान्तभोक्त्री करिणी मता सा ॥

शशके पद्मिनीतुष्टा चित्रिणी रमते मृगम् ।

वृषभे शङ्खिनी तुष्टा हस्तिनी रमते हयम् ॥ ८ ॥
पद्मिनी पद्मगन्धा च मीनगन्धा च चित्रिणी।
शङ्खिनी क्षारगन्धा च मदगन्धा च हस्तिनी ॥ ९ ॥
बाला च तरुणी प्रौढ़ा वृद्धा भवति नायिका।
गुणयोगेन रन्तव्या नारी वश्या भवेत्तदा ॥ १० ॥
आ षोड़शाद्‌ भवेद्बाला तरुणी त्रिंशका मता।
पञ्चपञ्चाशका प्रौढ़ा भवेद्वृद्धा ततः परम् ॥ ११ ॥
फलमूलादिभिर्बाला तरुणी रतियोगतः।
प्रेमदानादिभिः प्रौढ़ा वृद्धा च दृढ़ताड़नात् ॥ १२ ॥
बाला तु प्राणदा प्रोक्ता तरुणी प्राणहारिणी।
प्रौढ़ा करोति वृद्धत्वं वृद्धा मरणादिशेत् ॥ १३ ॥

अङ्गुष्ठे चरणे च गुल्फनिलये जानुद्वये वस्तिके
नाभौ वक्षसि कक्षयोर्निगदिता कण्ठे कपोलेऽधरे।
नेत्रे कर्णयुगे ललाटफलके मौलौ च वामभ्रुवा
मूर्धाधश्चलनक्रमेण कथिता चान्द्री कला पक्षयोः ॥ १४ ॥
सीमन्ते नयनेऽधरे च गलके कक्षस्तटे चूचुके
नाभौ श्रोणितटे मनोभवगृहे जङ्घातटे गण्डके।
गुल्फे पादतले तदङ्गुलितटेऽङ्गुष्ठे च तिष्ठत्यसौ
दृद्धिक्षीणतया समं शशिकला पक्षद्वयोर्योषिताम् ॥ १४ ॥
शुक्लपक्षे वसेद्वामे पादाङ्गुलिकनिष्ठके।
शुक्लप्रतिपदादौ च कृष्णे चाधः प्रलम्बते ॥ १६ ॥
पुंसः सव्ये स्त्रियो वामे शुक्ले कृष्णे विपर्य्ययः।

एतानि कामस्थानानि ज्ञेयानि नागरैः सदा ॥ १७ ॥
बलयुक्ता यदा नारी विपरीतरतिर्भवेत् ।
सञ्चाल्य तु कलास्थानं रन्तव्या कामिनी तदा ॥ १८ ॥
नेत्रे कण्ठे कपोले च हृदि पार्श्वद्वयेऽपि च ।
ग्रीवायां नाभिदेशे च कामी चुम्बति कामिनीम् ॥ १९ ॥
मुखे जङ्घे नितम्बे च जघने मदनालये ।
स्तनयुग्मे सदाप्रीतिः कामी चुम्बति कामिनीम् ॥ २० ॥
प्रेम्णा स्त्रियं समालिङ्ग्य शीत्कारं मुखचुम्बनम् ।
कण्ठासक्तं पुनः कृत्वा गाढालिङ्गनमाचरेत् ॥ २१ ॥
विधृत्य हस्तौ जघनोपविष्टः शीत्कृत्य वक्त्रे च मुदा प्रचुम्ब्य ।
भगे च लिङ्गं स्तनमर्द्दनञ्च दत्त्वापि कृत्वा प्ररमेच्च कामी ॥२२॥
केतक्यग्रनखं कृत्वा नखांस्त्रीन् पञ्चचैव वा ।
पृष्ठे च जघने योनौ दत्त्वा कामी रमेत् स्त्रियम् ॥ २३ ॥
नखरोमाञ्चितं कृत्वा दन्तेनाधरपीड़नम् ।
ग्रीवामाकृष्य यत्नेन योनौ लिङ्गेन ताड़नम् ॥ २४ ॥
लिङ्गप्रवेशनं कृत्वा धृत्वा गाढ़प्रयोगतः ।
पार्श्वद्वयेन सम्पीड्य निस्पृहं ताड़येद्भगम् ॥ २५ ॥
समालिंग्य स्त्रियं गाढ़ं स्तनयुग्मे च मर्द्दनम् ।
योनौ नाभौ च संमर्द्य निष्ठुरं लिङ्गताडनम् ॥ २६ ॥
केशं करेण संगृह्य दृढ़ं सन्ताडयेद्भगम् ।
वदने चुम्बनं कृत्वा भगं हस्तेन मर्द्दयेत् ॥ २७ ॥
कुचं करेण संमर्द्य पीडयेदधरं दृढ़म् ।

रमनं पद्मबन्धेन पद्मिनीरतिमादिशेत् ॥ २८ ॥
शीत्कारं चुम्बनं पीडा गले हस्ते च चुम्बनम् ।
चरणे चरणे स्तने हस्तं चित्रिणीरतिमादिशेत् ॥ २९ ॥
स्त्रीपुंसयो स्तथान्योन्यं भगे लिङ्गे च चुम्बनम् ।
रमणन्तु तथा गाढं शङ्खिणीरतिमादिशेतम् ॥ ३० ॥
केशं करेण संगृह्य सुदृढं गजबन्धनम् ।
भगं करेण संताड्य हस्तिनीरतिमादिशेत् ॥ ३१ ॥
कूर्मपृष्ठं गजस्कन्धं पद्मगन्धं सुगन्धि यत् ।
अलोमकं सुविस्तीर्णं पश्चैतद् भगमुत्तमम् ॥ ३२ ॥
शीतलं निम्नमत्युच्चं गोजिह्वासदृशं परम् ।
इत्युक्तं कामशास्त्रज्ञै भंगदोषचतुष्टयम् ॥ ३३ ॥
मुसलं वंशकं वीरं द्विविधं लिङ्गलक्षणम् ।
स्थूलं मुसलमित्युक्तं दीर्घं वंशकवीरकम् ॥ ३४ ॥
स्त्रीजितो गायकश्चैव नारीसत्यपरः सुखी ।
षडङ्गुलशरीरश्च स श्रीमान् शशको मतः ॥ ३५ ॥
श्रेष्ठस्तु धार्मिकः श्रीमान् सत्यवादी प्रियम्वदः ।
अष्टाङ्गुलशरीरश्च रूपयुक्तो मृगो मतः ॥ ३६ ॥
उपकारपरो नित्यं स्त्रीजितः श्लेषणः सुखी ।
दशाङ्गुलशरीरश्च मनस्वी वृषभो मतः ॥ ३७ ॥
काष्ठतुल्यवपुर्धृष्टो मिथ्यावाक्यश्च निर्भयः ।
द्वादशाङ्गुललिङ्गश्च नरिद्रश्च हयो मतः ॥ ३८ ॥
न रमन्ते यदा नार्य्यस्तृप्ता वा रमते च या ।

नानाबन्धां स्तथा वक्ष्ये रन्तव्या कामिभिः स्त्रियः ॥३९॥
पद्मासनो नागपादो लतावेष्टोऽर्द्धसंपुटः ।
कुलिशः सुन्दरश्चैव तथा केशर एव च ॥ ४० ॥
हिल्लोलो नरसिंहोऽपि विपरीतस्तथापरः ।
चुम्बारो धेनुकश्चैव उत्कण्ठश्च ततः परः ।
सिंहासनो रतिर्नागो विद्याधरस्तु षोडशः ॥ ४१ ॥
हस्ताभ्याञ्च समालिङ्ग्य नारीं पद्मासनोपरि ।
रमेद्गाढ़ं समाकृष्य बन्धोऽयं पद्मसंज्ञकः ॥ ४२ ॥
पादौ स्कन्धयुगे हस्तौ चिपेल्लिङ्गं भगे लघु ।
प्ररमेत्कामुको नारीं बन्धो नागपदो मतः ॥ ४३ ॥
बाहुभ्यां पादयुग्माभ्यां वेष्टयित्वा रमेत् स्त्रियम् ।
लघु लिङ्गं ताडयेद्योनौ लतावेष्टोऽयमुच्यते ॥ ४४ ॥
स्त्रीपादावन्तरोच्चे तु किञ्चिद्भूमौ च जानुनि ।
स्तनयोर्मर्द्दनं पीड़ा बन्धोमम‌र्द्धसंपुटः ॥ ४५ ॥
स्त्रीपादद्वयमास्फाल्य हटाल्लिङ्गस्य ताडनं ।
योनिमापीड़येत्कामी बन्धः कुलिशसंज्ञकः ॥ ४६ ॥
नारीपादद्वयं स्वामी धारयेदूर्द्ध्वदेशतः ।
कुचौ धृत्वा पीवेद्वक्त्रं बन्धोऽयं रतिसुन्दरः ॥ ४७ ॥
स्त्रीयो जङ्घे समापीड्य दोर्भ्यां गात्रस्य मर्द्दनं
पुनः प्रपीड़येद्योनिं बन्धः केशरसंज्ञकः ।
हृदि कृत्वा स्त्रियः पादौ कराभ्यां धारयेत् करौ
यथेष्टं ताड़येद् योनिं बन्धो हिल्लोलसंज्ञकः ॥ ४८ ॥

पादौ संपीड्य योनौ च हठाल्लिङ्गप्रवेशनम् ।
हस्तयो वेष्टनं गाढं बन्धो नृसिंहसंज्ञकः ॥ ५० ॥
पादमेकमुरौ कृत्वा द्वितीयं कटिसंस्थितम् ।
नारीश्च सुरमेत्कामी विपरीतस्तु बन्धकः ॥ ५१ ॥
पार्श्वोपरि पदौ कृत्वा योनौ लिङ्गेन ताड़येत् ।
बाहुभ्यां तायेद्गाढं क्षुद्रारो बन्ध एव सः ॥ ५२ ॥
सुप्तां स्त्रियं समालिङ्ग्य स्वयं सुप्तो रमेत् पुनः ।
यल्लिङ्गं चालयेद् योनौ बन्धोऽयं धेनुकः स्मृतः ॥५३ ॥
नारीपादौ च हस्तेन धारयेद् गलके पुनः ।
स्तनार्पितकरो कामी बन्धश्चोत्कण्ठसंज्ञकः ॥ ५४ ॥
स्वयं जङ्घाद्वयं बाह्वौ कृत्वा योषित्पदद्वयम् ।
स्तनौ धृत्वा रमेत् कामी बन्धः सिंहासनो मतः ॥५५॥
पीड़येदुरुयुग्मेन कामुकः कामिनीं यदि ।
रति र्नागः समाख्यातः कामिनीनां मनोहरः ॥५६॥
नार्याश्चोरुयुगं धृत्वा कराभ्यां ताडयेत्पुनः ।
रमयेन्निर्भरं कामी बन्धो विद्याधरो मतः ॥ ५७ ॥
स्त्रीयमानीय यत्नेन विधृत्य चरणद्वयम् ।
वश्यं नयति यः कामी रतिशास्त्रविचक्षणः ॥ ५८ ॥
रतिशास्त्रं समाकर्ण्य बन्ध्यान् पद्मादिषोड़श ।
नानाविधरतिं कुर्य्यात् कामिनीं कामुको जनः ॥ ५९ ॥
सर्वशास्त्रार्थवक्त्रेण जयदेवेन धीमता ।
मञ्जरी रतिशास्त्रस्य कृता नीता समाप्तताम् ॥ ६० ॥
इति श्रीजयदेवेन विरचिता रतिमञ्जरी समाप्ता ।

# नलोदयः ।

## प्रथमोच्छ्वासः ।

हृद्य सदायादवतः पापाटव्या दुरासदायादवतः ।
अरिसमुदायादवतस्त्रिजगन्त्या गाः स्मरेणदायादवतः ॥१॥
योऽजनि नागोपीतश्चचार यो वल्लवांगनागोपीतः ।
भूर्येननागोपीतः कंसाद्यो द्विषमेव नागोपीतः ॥ २ ॥
यदरिषु सन्नामानस्थितयो यन्नुन्नमुद्गलसन्नामानः ।
यत्र ससन्नामानस्त्र्यंबभाजस्य पठितसन्नामानः ॥ ३ ॥
समनिन्द्दानवनाशञ्जनतालिकुलंयथैवदानवनाशम् ।
द्विरदाद्दानवनाशं जगच्च लभते यतः स दानवनाशम् ॥ ४ ॥
अस्ति सराजा नीते रामाख्यो यो गतीः परा जानीते ।
यस्य रराजानीते रत्नानि जनः कुले धराजानीते ॥ ५ ॥
यः सेनानावारिप्रकरनदीः शरमयं धुनानावारि ।
अतरन्नानावारि व्यसनैर्यङ्कुवि वनश्च नानावारि ॥ ६
अपि यो दायादाय क्षयप्रदोऽस्ति सतां यदायादायः ।
करमादायादाय श्रियोऽब्धिरधिराजमसिगदायादायः ॥७॥
अविदूराजादित्या कृतास्यभेदैव भूः सराजादित्या ।
येन सराजादित्यात् त्रिदिवात्संयुक्तमनुराजादित्या ॥ ८ ॥
खलसेना नावेद्यः स्वां दोष्णौ भुवि च यस्य नानावेद्यः ।

स्निग्धजनानावेद्य प्रयतेऽस्य सुकाव्यविरचनानावेद्य ॥ ९ ॥
अथ निजराज्यन्तेन प्राशाषि नलेन शत्रुराज्यन्तेन ।
येनाराज्यन्तेनश्रिया दिशो यस्य विहृतिराज्यन्तेन ॥ १० ॥
मूर्त्तिं मारसमानां योऽदधदायुः सहस्रमारसमानाम् ।
रुद्रकुमारसमानामजयद् द्विषताम्पंक्तिमारसमानाम् ॥ ११ ॥
सास्त्रनियामानयतः श्रेष्ठाविद्यास्तदाश्रयामानयतः ।
अधिकायामानयतः शत्रावपि यस्य धीर्दयामानयतः ॥१२॥
अहितानामायस्य चाता यः शरणगामिनामायस्य ।
गतनोनामायस्य सुतः पिता वीरसेननामायस्य ॥ १३ ॥
भुव्यतनोदन्तेन द्विषतां सयशांसि शोभनोदन्तेन ।
नीतानोदन्तेन क्षितिमभजन्नहितदन्तिनोदन्तेन ॥ १४ ॥
सचिवगिरागोपायन्नलः सपृथिवीं निरस्तरागोपायम् ।
शत्रोरागोपायं नीत्वा नेमुर्महत्तरागोपायम् ॥ १५ ॥
योऽदम्भीमान्यायादधिकोऽथ रिपुर्यमेत्य भीमान्यायात् ।
वैदर्भीमान्यायाञ्चिजगति कन्या बभूव भीमान्यायात् ॥१६॥
महिततमारम्भाभिर्दमयन्ती सहगुमारमारम्भाभिः ।
दधती मारम्भाभिर्वदधे सोरुद्वये समारम्भाभिः ॥ १७ ॥
सारत्नंनारीणां नलःश्रियामजनि निलयनंनारीणाम् ।
यस्यानम्रारीणां मरुभुवमापद्घटा वनं नारीणाम् ॥ १८ ॥
चक्रमे साराजन्यश्रेष्ठन्तान्तां स तेजसाराजन्यः ।
आत्तविसाराजन्यश्रियोऽधितययाजिताः ससाराजन्यः ॥१९॥

नार्त्तिनोद्यानेन प्रभाविहीनेन श्रीमनोद्यानेन ।
स्मरजानोद्यानेन स्फुटमितिगमिह्ननलोतनोद्यानेन ॥२०॥
सोऽह्नितहन्तापततः कांश्चिदपश्यद्धिताय हन्तापततः ।
सखेहन्तापततस्तान्यद्मी तोषमावहन्तापततः ॥ २१ ॥
तन्तरसारसमानः सविहंगगणोऽब्रवीत् ससारसमानः ।
गतहिंसारसमानस्तुद्लभ्योनिष्क्रयः स्वसारसमानः ॥ २२॥
त्वं झषकेत्वङ्गत्वादधिको भैम्यास्तुमोन्तिकेत्वङ्गत्वा ।
सातेऽङ्केत्वङ्गत्वासक्ता लल तत्सकाशकेत्वङ्गत्वा ॥ २३ ॥
इति हंसारामाया निकटंयामयक्ततेव सारामाया ।
जग्मुः सारामाया जगदुश्चालीभिरभिससारामाया ॥ २४ ॥
श्रीसंकाशास्यस्य त्वं भैमि नलस्य शशिनिकाशास्यस्य ।
अरिलोकाशास्यस्य यदि भार्यास्याः कुमारिकाशास्यस्य ॥२५॥
इति हांसेनोदितया गणेन भैम्या मुदारसेनोदितया ।
नवभासेनोदितया स्मरेण सपुनर्नलौकसेनोदितया ॥ २६ ॥
ता बहुधावायस्य श्रेण्यः पुनरस्य सन्निधावायस्य ।
ताश्चनिधावायस्य व्यनुवंस्तुलनाय न विबुधावायस्य ॥२७॥
इति सविनामानितया जह्रे भैम्यानलोऽपि नामानितया ।
स्यास्थ्यं नामानितया शिश्ये च विचिन्त्यतस्यनामानितया ॥२८
अथ ससमुद्रागस्य ह्यान्तस्यालङ्कृतेः समुद्रागस्य ।
यौवनमुद्रागस्य स्वसुतारत्नस्य सादमुद्रागस्य ॥ २९ ॥
दृष्ट्वा राजातनुत स्वयंवरं विधिवदिन्दिराजातनुतः ।
यस्य जराजातनुतः पृथग्व्यथासौजनाद्राजातनुतः ॥ ३० ॥

तं हासेनापालिः स्वयंवरं चितिभुजां सखेनापालिः ।
न बभासेनापालिः स्वगेषु यैः श्रिरपि या रखेनापालि ॥३१॥
तां गां सेनाराजिः स्वर्गसदां यैः सदारसेनाराजि ।
आयासेनाराजिच्चयितरिपौ चलति विबुधसेनाराजि ॥३२॥
सो.थ परमहस्तेन प्रापि नलेनोत्सवः परमहस्तेनः ।
स्फुरितपरमहस्तेन प्रबभौरविश्वेवतत्पुरं परमहस्तेन ॥३३
चिप्तलसन्नालीकानहितेषु मुखेन्दुतुलितसन्नालीकान् ।
राज्ञः सन्नालीकान् कान्तिर्विबुधांश्चनाहसन्नालीकान् ॥ ३४
अजनिकलापास्यन्तं स्वयशोऽनिजकंमहः कलापास्यन्तम् ।
शबुकलापास्यन्तम्प्रेच्य नलं सुरततिः कलापास्यन्तम् ॥ ३५ ॥
स्वर्निलयानामनलंकृतमपि जेतुन्ततिः श्रियामामनलम् ।
यमजेयानामनलम्प्रोचे शक्रस्तमरिचयानामनलम् ॥३६॥
वद कामायामन्नस्त्वम्भैम्यै यद्गुणाः श्रमायासन्नः ।
श्रेष्ठतमायासन्नस्त्वान्द्रष्टा ननु जनः स्वमायासन्नः ॥ ३७ ॥
इति सरवकेहास्तिन्नरस्य समुकुलं सुरप्रवेकेहास्त ।
तामविवेकेहास्तः श्रयति स्वीतत्र पार्थिवेकेहास्त ॥३८॥
हरिपवमानयमानान्दूतीऽस्मिनलोमहारमानयमानान् ।
भवतीं मानयमानान्भैमिसुरान्विद्धिमहमिमानयमानान् ॥३९
तुभ्यं स्मरसादेहिप्रभवो मग्नाः स्मर प्रसरसादेहि ।
तानभिसरसादेहि स्वजस्वनाकात्सुखस्वसरसादेहि ॥ ४० ॥
इति श्रुतसामारवतः सुरलोकात्तनुमुखेन सामारवतः ।
नरिरंसामारवतस्थलादिव नलोत्कमानसामारवतः ॥ ४१ ॥

सात्रिरराजायतया वीक्ष्य दृश्या तं स्मरातुराजायतया ।
स्थितिरत्राजायतया ससदास्वाभाषिनिषधराजायतया ॥ ४२ ॥
तस्या देवाद्यस्य प्रणम्य च नलेन धीः पदेवाद्यस्य ।
सति निनदेषाद्यस्य स्वयं प्रियायाः पदं मुदेवाद्यस्य ॥ ४३ ॥
अथ तरसारं गेयन्नृपतिगणोऽस्थित पदेषु सारंगेयं ।
चञ्चलसारंगेयन्दमयन्ती चाचितुलितसारंगेयं ॥ ४४ ॥
व्यधुरवनामान्येषु प्रजा नृपेष्वथनिवेद्य नामान्येषु ।
स्तुतैर्नामान्येषु प्रकीर्त्तमानेषु शोभनामान्येषु ॥ ४५ ॥
सांगेननलसमानाननलसमानानमुत्ककतिचित्पुरुषान् ।
प्रैक्षत ननलसमानाननलसमानानभून्न तेषाम्भेदः ॥ ४६ ॥
कचिक्षतनासत्यागाः स्फुरतु नलोयदिषवर्त्मनासत्यागाः ।
अपि दीनासत्यागाक्मरायथुतेनैव वर्त्मनासत्यागा ॥ ४७ ॥
यदि वाभावन्नरस्य स्थितास्मि नल एव नरविभावन्यस्य ।
देवसभावन्यस्य द्विपस्य वपुषो भवेद्विभावन्यस्य ॥ ४८ ॥
क्षतभावासावनितानितिभुवमैच्चत्सुरान्सुवासावनिता ।
स्वपतिं वासावनिताचिक्ष धार्म्मिकजने भुवासावनिता ॥४९॥
स्वरिरंसादेवाल्याकुलया दृश्यार्थितापि सादेवाल्या ।
वपुषि ससादेवाल्यादृष्टनलमुपस्थितं रसादेवाल्या ॥ ५०
सत्सदसोमाननया कद्रसमोयः स्वतेजसोमाननया ।
प्रस्तुतः सोमाननया नलोबभौ भत्रिगुणेन सोमाननया ॥ ५१
मदद्भावरमस्यज्ञात्वाथमनोगुरुप्रभावरमस्य ।
सुरवृषभावरमस्य प्रदिश्य जग्मुर्गतप्रभावरमस्य ॥५२ ॥

गुरुमहिमापरमायास्तस्मौ नलएषवसतिमापरमायाः ।
प्रिययामापरमायाः स्वपुरमगुर्येव तं चमापरमायाः ॥५३॥
ग्निनाश्च समहासमहानगरेजनतासमहासमहास्तमुदम् ।
अतिभासुरयासुरयाव्यहरद्वरतनोत्सुरयासुरयागमपि ॥५४॥

इति श्रीकालिदासकृते नलोदये सत्काव्ये
प्रथमः सर्गः ।

## द्वितीयः सर्गः ।

अथ रतिरेकान्तेन प्रापि नलेनाव मन्दिरेकान्तेन ।
ताम्यनरेकान्तेन प्राप्तवता रिपुमदातिरेकान्तेन ॥ १ ॥
बभौ ससारसागरश्चकाससारसार्द्रधीः ।
मधः ससारसारवस्तदा ससारसार्त्तवः ॥ २ ॥
समुदधिताशालीनां करेण कणिशाग्रवचिजिताशालीनाम् ।
दिनभर्त्तीशालीनामिव नलिनीमथ समुत्थिताशालीनाम् ॥३॥
कुरवापचसारसकाकुरवान् कुरवाख्यनगोपितदांकुरवान् ।
कमलं कृतवद्गतपङ्कमलं कमलं नविलोभयितुङ्कमलम् ॥४॥
अगुरतिमहिमानीतस्ततोरविमहांसिगुरुतमहिमानीतः ।
भवनं महिमानीतः स्मरेण परितः शराख्यमहिमानीतः ॥५॥
स्मरसूचितयाजगतः चितिसूचितयाभवद्धिचम्पकमुकुलम् ।
तदसूचितया व्यथया निरसूचितया यथाद्वियुग्दम्पतिकौ॥ ६

ऽिरलोचपलाशस्य प्रचुरम्पुष्पं बभूव चपलाशस्य ।
स्मरनोचपलाशस्य प्राप्याध्वगपिशितचारुचपलाशस्य ॥ ७ ॥

स्रुतो बभुर्निशाङ्कया विभा विभा विभा विभाः ।
कलाश्च तेषु सत्पतेरदा रदा रदा रदाः ॥ ८ ॥

इहललनाशोकालिप्रदेन येनात्ममदशिनाशोकालि ।
कामनाशोकालिस्वनकृतिभिः सदिच्छनाशोकालि ॥ ९ ॥

स्मरस्य युद्धरङ्गतां रसा रसा रसा रसा ।
जिता वियोगिनः समुन्नते नते नते नते ॥ १० ॥

नुन्नमनामधुनानाश्यतिम्नतिक्रोविनाङ्गनामधनाना ।
इति ललनामधुनानाविधमधयत्किलतदर्थनामधनाना ॥११॥

पिका पिका पिका पिका वियोगिनीरभर्त्सयत् ।
वचांसि भङ्गमालपन्निता निता निता निताः ॥ १२ ॥

श्रोत्रापिकलापेन प्रवृत्तमाम्रावलिषु पिकलापेन ।
न कलापिकलापेन प्रणर्त्तनमकारि वागपिकलापेन ॥ १३ ॥

सहकारवृते समये सहकारहृतस्य के न सस्मार पदम् ।
सहकारमुपरिकान्तैः सहकारमणीपुरः सकलवर्णमपि ॥१४

अधिगतकामधरागात् अगमेत्यभ्रमरपटलिकामधुरागात् ।
पीत्वोत्कामधरागात्द्रुतमकृततत:श्रियोधिकामधरागात्॥१५

नसमा नसमा नसमा नसमा गममाप समीक्ष्य वसन्तनभः ।
भ्रमद भ्रमद भ्रमद भ्रमद भ्रमरच्छलतः खलु कामिजनः॥१६

गतमत्र चयेन गृहादसमुत्तरतान्तरतान्तरतान्तरताम् ।
परएव विकार इयाय वृहत्तमसन्तमसन्तमसन्तमसन् ॥ १६ ॥

अधिकान्तवसन्तदामसमापनयापनयापनयापनया।
तम्हतेऽनुभयेन च तामभनैरवता रवता रवता रवता ॥ १८ ॥
नभसो विवरं कुसुमेच्छयभागतरो गतरो गतरो गतरो।
मद कान्तमवेक्ष्य यथाद्य मधावरमे वरमे वरमे वरमे ॥ १९ ॥
श्रितेतिगामनागतस्त्वबन्धुकामनागतः।
परापनामनागतस्तुतामकामनागतः ॥ २० ॥
कालनादिवसन्तं कुसुमसरमसोढ्वानादिवसन्तम्।
अलिभिरनादिवसन्तं दृष्ट्वा यत्रात्मनोऽर्थनादिवसन्तम् ॥ २१ ॥
स्वयमथ मन्दारितया युक्तो युक्तबलः स मन्दारितया।
आरामन्दारितया मदनेन धियापदुत्तमन्दारितया ॥ २२ ॥
अनुव्रता समाननं समाननन्द भीमजा।
तमिन्दुना समाननं समाननन्दने वने ॥ २३ ॥
इह रुचिरामावलयस्तस्त्वमिति पृथक् प्रियस्य रामावलयः।
प्राप्तारामावलयस्फुरो गिरा यद्दुरेभिरामावलयः ॥ २४ ॥
नवकुसुमानमनागा गन्तुं नेच्छत्परा समानमनागाः।
अजनिपुमानमनागाश्रित्य ससत्कुसुमदानमानमनागाः ॥ २५ ॥
रुषितं सखिसादमसुष्यलसत्तनुते तनुते तनुते तनुते।
ननवाननवाननवाननवागिह्नते परयोम्हतिमेष्यति सः ॥ २६ ॥
अपि चैत्यनगानवतानवतानवतानवतास्ततरामधना।
इह सौख्यमगोचरमाचरमाचरमाचरमाचरमास्तनरम्यतरा २७

इति लालिकयालिकयातकचै-
रतिकयालिकयालिकया कथिता।

दयितं समया समयादपरा
व्यहरत्समया मसयाचतया ॥ २८ ॥
अतिरुचिमानस्तवकः सरस्तटोऽयं विचीयमानस्तवकः।
इह खलु मानस्तवकः प्रियामिति परोनयत्समानस्तवकः ॥२९
अवदातरपरागस्य प्रसवमृप्रेचिष्ट न पुनरपरागस्य।
हसितैरपरागस्य स्वैस्तिष्ठन्त्यपि लवेष्वरपरागस्य ॥ ३० ॥
अवेच्य पल्लवालयानगान् श्रितालवालया।
लतातयेवबालयाबभेऽन्ययावबालया ॥ ३१ ॥
व्रततीनामालीनां मध्येव्योर्व्यचिनुताङ्गनामालीनाम्।
अप्येनामालीनां स्मिताच्च जानन् मदाधनामालीनाम् ॥३२॥
कमितुः कलुषाचिसुखार्थनभागपरागपरागरागपरा।
स्थितिमाप तथैव हृतः सपुमाननयाननयाननयाननया ॥३३
स्वमनेन समायतयाव्यधिताग: स्वेवकश्चनसमायतया।
ऋजुमानसमादतथातस्मैनाक्रोधिजीवनसमायतया ॥३४॥
अभवद्नेनानाविस्मयदोन्योमानिनीजनेनानावि।
अतिसुजने नानाविस्खलनं यदुपवनमनेनानावि ॥ ३५ ॥
जनादसौ: समानतः पदाहतिं समानतः।
परोदधौ समानतः स्वमूर्द्धि भासमानतः ॥ ३६ ॥
तनुच्छटोत्तमालया तयाभुवोत्तमालया।
अहारिशीतमालयानिलावधूतमालया ॥ ३७ ॥
श्रितलसदारामाभिः प्राप्येति जनोविहृतिमुदारामाभिः।
आरादारामाभिस्फुरितसरोजं सरस्तदारामाभिः ॥ ३८ ॥

किमपः सरसीमाया धाम गुणान्नत प्रसरसीमायाः ।
इतमिति सरसीमायात्यक्तोभैम्या नलस्य सरसीमायात् ॥३९॥
गतपङ्काः सारस्यश्रियोऽस्यजहुर्मनोऽधिकाः सारस्यः ।
अपिकोकाः सारस्यस्थिताः कुरव्यंश्चहंसिकाः सारस्यः ॥४०॥
काचतिरस्तिमिताभिः स्फुटमङ्गि विहृतिरस्तिमिताभिः ।
अनतितरस्तिमिताभिः कमेत्ययदङ्गङ्क्षितिभिरस्तिमिताभिः ४१
अलिभिस्तत्परागतः सरोरुहात्पारागतः ।
मुखंमुदापरगतस्तदीयमापरागतः ॥ ४२ ॥
अथकामानलिनोनांस्त्रीणां संघैर्मनोरमानलिनोनाम् ।
विधुरतमानलिनीनाम्यंक्तिर्विततान संभ्रमानलिनीनाम् ॥४३
सरःश्रियोऽन्तरङ्गतःसरोजवृन्तरङ्गतः ।
भयंमहत्तरङ्गतस्तनूजनस्तरङ्गतः ॥ ४४ ॥
अथ नीरात्सारसतः फेनपरीताद्यथाम्बरात्सारसतः ।
अतिमुखरात्सारसत स्तीरमितास्तीतस्थिरात्सारसतः ॥४५॥
सचोदयावलीनतः समुत्प्रभावलीनतः ।
नयन्ययावलीनतः पदंजनोवलीनतः ॥ ४६ ॥
दिश्यः कामानङ्गेहं मन्यो मदनेषुविकृतिमानङ्गेहम् ।
इति परमानङ्गेहं नलः प्रियामनयदतिविमानङ्गेहम् ॥ ४७ ॥
अरुणमहस्तेनेन प्रापि च सोऽङ्गैर्गुणग्रहस्तेनेन ।
भाव्यमिहस्तेनेन स्फुटमस्यहि तद्गतेऽप्यहस्तेनेन ॥ ४८ ॥
यतो यतो यतो यतो रवेर्मरीचिसञ्चयः ।
महान्धकारसञ्चयस्तत स्तत स्तत स्ततः ॥ ४९ ॥

छादितरविवितानेन प्रापि च कालेन सस्वरवितानेन ।
जितरुधिरवितानेन व्योम्नाचस्फुरितमुडुभिरवितानेन ॥ ५० ॥
अथोद्यतोम्बुराजतःश्रियं खमाप राजतः ।
यथा घटो व्यराजतस्मराग्रगःसराजतः ॥ ५१ ॥
दधतं कालं कालं कालं कालं वियोगनी शशिनन्तम् ॥
अध्वगकालं कालं कालं कालंप्रशमीचितुप्रोद्यन्तम् ॥ ५२ ॥
चरत्तुषारशीकराः प्रबुद्धकैरवाकराः ।
ततोजजृम्भिरे करा जगत्सु शार्वरीकराः ॥ ५३ ॥
बधस्तदानुनिन्यिरे नये नये नये नये ।
वशं नरोऽनयन्समुन्नते नते नते नते ॥ ५४ ॥
सहासहावमादरैः सहा सहाः स्मरस्य ते ।
सुरा सुरा यथाम्रते मरा सुरागमादधुः ॥ ५५ ॥
मधुं प्रपीय चाभवन्नता नता नता नताः ।
रमा रमा रमा रमाकुले जनेऽत्र हालया ॥ ५६ ॥
भ्रमरैर्द्रोगस्तानि प्रपीय च मधूनि सानुरागस्तानि ।
दृत्तनिरागस्तानि प्रापच्छयनञ्जनस्त्वरागस्तानि ॥ ५७ ॥
ससमुद्रमहेलाभिस्फुरितगुणाभिस्ततस्मरमहेलाभि ।
श्रीः प्रवरमहेलाभिस्तथैवयुवपंक्तिभिः परमहेलाभिः ॥ ५८ ॥
तयार्द्रधीरमायया मुदामनारमायया ।
नलो विहारमाययावयःसुतारमायया ॥ ५९ ॥
साशंकामायासीत्सुतिनी भैमी नलस्य कामायासीत् ।
कामनिकामायासीद्यतिन्तदिष्टांसचाधिकामायासीत् ॥ ६० ॥

इतिनानामायानांनलः कलिभुवांबलेननानामायानाम्।
व्यसनानामानाम्निधिररमद्राज्यजम्मनामायानाम्॥ ६१ ॥
स्वयंवरादनन्तरं मही मही महीनधोः।
ररक्षनैषधस्तदाररराजरा जरा जराः॥ ६२ ॥

इति श्रीकालिदासकृते नलोदये सत्काव्ये
द्वितीयः सर्गः।

---

## तृतीयः सर्गः।

अथसुरर्षभाः स्वरतः प्रेक्ष्यकलिंप्रस्थितामहाङ्गास्वरतः।
यः कृतिषुशुभास्वरतः पप्रच्छस्तद्गतिङ्गननिभाः स्वरतः॥ १ ॥
यन्नसामायामितयाहृतः श्रियाभीमदिहृमदायामितया।
तदधिगमायामितया स्पृहयायमनुष्यमायामितया॥ २ ॥
इतिविकलोमायायास्तदुक्तऊचेजनोऽमलोमायायाः।
शुभगोलोमायायाः स्थितीनलोऽस्यावरोऽनुलोमायायाः॥ ३ ॥
वचइतिवस्वादिभ्यः श्रुत्वाकलिरतृपवासवस्वादिभ्यः।
मखसस्वार्वदिभ्यश्चुकोपदोषात् समदभुवः स्वादिभ्यः॥ ४ ॥
प्रबलतमानबलतयासंयोज्यनलेपुरोत्तमानवलतया।
तेनानामानवलतयातरुणेवतयास्यतांनमानवलतया॥५॥
इति बलवानन्तरतः कलिः किलैतज्जगादवानन्तरतः।
अवहितवानन्तरतः सन्द्विषुनलस्यविविधिवानन्तरतः॥ ६ ॥

सोऽथसदारोदरतः पुष्करविजितोनलः सदारोदरतः ।
व्याजाद्दारोदरतः स्वपुरान्निर्यातवानुदारोदरतः ॥ ७ ॥
असमानानाहारिः सैनं मन्त्रांश्च किमसुनानाहारि ।
अपितेनानाहारि भ्रान्तभूषणमपास्य मानाहारि ॥ ८ ॥
क्षुधमकरोदन्यस्य भ्रमन्नलः पथिपदं सरोदन्यस्य ।
नच पुनरोदन्यस्य ग्रासायाभूत्परम्परोदन्यस्य ॥ ९ ॥
नास्य रमानावासस्तच्च खगाजह्रुर्य्यं मानावासः ।
अपिमद्रमानावासस्तरोषजलधिन्तरन् क्षमानावासः ॥ १० ॥
तापयतेनवसानौद्रवेदिशीमौनगाद्वतेनवसानौ ।
वेलान्तेनवसानौ चेरतुरेकेन पर्वतेनवसानौ ॥ ११ ॥
तद्वासः स्वापायान्नीतिरियं चेति विपदि सखापायाम् ।
निजवासः स्वापायान्निकृत्य तामसुखदिक्सखापायाम् ॥१२॥
बभ्रामानस्तेन श्रमेण कलिना विधूयमानस्तेन ।
सर्व्वहरिपुमानस्तेनः स्वभाग्यदोषाः क्व समहिमानस्तेन ॥१३॥
मृगकुलमारसदाविश्रममभितापातुरो ममारसदाविः ।
स्फरिततमारसदाविस्तृतामगा यत्र विपिनमारसदावि ॥१४॥
शोकभरोदस्तेन स्रुतः स च नलाद्द्रवेतिरोदस्तेन ।
द्युतिमकरोदस्तेन स्वयमित्यूचे भयं पुरोदस्तेन ॥ १५ ॥
क्व भवान् शंसत्वस्य त्वापजमित्याश्रयो नृशंसत्वस्य ।
तन्देशं सत्वस्य प्राप नलः सत्वरो भृशं सत्वस्य ॥ १६ ॥
अथ पवनाशमयन्तं क्वापि दवाग्नौ ददर्श नागमयन्तम् ।
स्वबले नागमयन्तं रुजमधिजिह्वस्य पुनरनागमयन्तम् ॥१७

स च च्युतनागस्तेन स्वविषेण विकल्पितो मनागस्तेन ।
सञ्चितो नागस्तेन प्रोक्तश्चात्मास्तु वेदनागस्तेन ॥१८॥

स्वान्तरसाकल्यन्ते वपुरमुनात्तेन वाससाकल्यन्ते ।
ये यत्नसाकल्यन्ते गुणोदयैर्दधति भूतिसाकल्यन्ते ॥१९॥

अपि च विनामानेन श्रयणीयः सत्त्वपर्णनामानेनः ।
स्वांगेमानेन स्युर्विपदो न हि नृणां क्व नामानेन ॥२०

व्रजसुखमायाहीनश्रीरित्यन्तर्हितः श्रमायाहीनः ।
स्निग्धो मायाहीनः स्वाज्जनतायाः कनोत्तमायाहीनः ॥२१

प्रीतिवशादनवनतः कृत्वा तद्वसनमात्मसादनवनतः ।
बहुमांसादनवनतः सोऽस्माद्दतुपर्णमाससादनवनतः ॥२२॥

अकृतमुदायन्तारन्तममनुतमोऽध्वनीयदायन्तारम् ।
ध्वनिसमुदायन्तारन्दधतोऽस्य हयाश्वतन्तदायन्तारम् ॥२३

अथ सहसा दमयन्त्या सादमयन्त्यात्मश्रमं निद्रामुमुचे ।
जीवितसादमयन्त्या सादमयन्त्यागमकृतसचयदातस्याः ॥२४॥

सात्र ससादारामा सीतेव त्राससमाससादारामा ।
याप्रासादारामानुपत्य भर्त्री रतिं रसादारामा ॥२५॥

तत्र पदे व्यालीनामथ विभ्रान्तं वने च देव्यालीनाम् ।
तरुवृन्दे व्यालीनान्ततिन्दधाने तयास्यदेव्यालीनाम् ॥२६॥

वेगवलापाश्रितया वेण्या भैमीयुता खलापाश्रितया ।
नृपसकलापाश्रितया कृत्वा रीन् बान्धवान् किलापाश्रितया ॥२७

सकथं मानवनानान्यायविदाचरसिसेव्यमानवनानाम् ।
कृतसीमानवनानान्दाराणां त्यागमनुपमानवनानाम् ॥२८॥

परकृतमेतत्त्वेन स्मरामि यन्न स्मृतोऽसिमेतत्त्वेन ।
दोषसमेतत्वेन प्रदूषये नात्र संभ्रमेतत्वेन ॥ २९ ॥
हृदयाकायस्तेन स्थीयेत यथैव पावकायस्तेन ।
यावत्कायस्तेनत्यजेत स्वहृदि चाधिकायस्तेन ॥ ३० ॥
यस्य पदे शङ्कमितः स्वजनोऽयं प्राप्य जनपदेशङ्कमित ।
अरिवृन्दे शङ्कमितस्मित सत्वमुपागतोऽसिदेशङ्कमितः ॥ ३१ ॥
यद्यशसानुकरोदःकुहरं योऽद्रेष्टुरं जसानुकरोदः ।
अद्रेः सानुकरोदः किमापदयितो ममेति सानुकरोद ॥ ३२ ॥
अयकलनामानन्तेत्ययज्ञनो ददति चाङ्गनामानन्ते ।
हार्द्दं नामानन्ते जनमेनमशोककुसुमनामानन्ते ॥ ३३ ॥
उच्चशिरोदारावालप्यति वने सुबन्ध रोदारावा ।
द्रुतिमकरोदारावारुचं मरुतलमथो सरोदारावा ॥ ३४ ॥
मृगकुलमारव्याधिप्रचुरं बिभ्रद्वनं समारव्याधि ।
वीथ्या मारव्याधिष्ठितभुजगभीमजेयमारव्याधि ॥ ३५ ॥
सास्रवनासारासा वेगमना भीमनन्दनासारासा ।
सुनयननासारासावजगरमग्रासि चामुनासारासा ॥ ३६ ॥
अथ शवरोहास्यन्तं स्वास्तसूंदसूंश्च रिपुतरोहास्यन्तम् ।
समधिकरोहास्यन्तं न्यस्य तदास्येऽकरोत्खरोहास्यन्तम् ॥ ३७ ॥
तान्पुनरेकामयतः क्षमां किरातः स्मरातिरेकामयतः ।
कान्तारेकामयत स्त्रियं न कांचेदुपकरेकामयतः ॥ ३८ ॥
हतत्रनमह्यन्तेन त्वातासि मया ननु त्वमह्यन्तेन ।
मानिनिमह्यन्तेन प्रसीद शरणागताः क्वमह्यन्तेन ॥ ३९ ॥

सुमुखनिशापेतेन: स्मर दृशानिति प्रोच्य वशापेतेन।
दत्ते शापेतेन स्थितया सान्त्वेन चलद्दृशापेतेन ॥४०॥
दग्धस्मरागाहितयादमयन्त्या विपिनभूः परागाहितया।
उन्नतरागाहितया दृष्टा घोराच कन्दरागाहितया ॥४१॥
पदवा पदवा पदवा पदवारयतोऽद्रिवनं विललाप च सा।
तरसान्तरसान्तरसान्तरसान्वयदुःखहृदीप्स मनो मरणम् ॥४२
ह्वककोपपुरः सरमा सरमा सरमा सरमा भवतानुसा।
किम्प्रतेदयितादयतोदयतोदयतोदयतोऽस्तिममेह सुखम् ॥४३
अयिराजसमजयमांशुधितो नवमानवमानवमानवमाः।
रुजमुज्झजनेऽद्य चकेकरणान्तरदान्तरदान्तरदान्तरदाम् ॥४४
करमाकरमाकरमाकरमाकलयव्यसनं ममपाहि हरे।
दरतोदरतोदरतोदरतोजितैर्मनतांसुकरत्वमपि ॥४५॥
त्वदरिर्निषधेश समृद्धिमना रमयारमयारमयारमयाः।
व्यसनत्वमुपैमिकदानुरुभीश्रमनाश्रमनाश्रमनाश्रमनाः ॥४६॥
यमनायमनायमनायमनागभिनीद्धरतन्द्रवतोह परः।
स्वरुषोनिषधचितिनाथगलत्त्वमानवमाववमानवमाः ॥४७॥
नयमानयमानयमानयमावसरत्यनिवाममुञ्चकता।
भवनोयमपायमरीनुदयान्नयतानयतानयतानयता ॥४८॥
सनयासनयासनयासनयाश्रुसुहृद्घटयाविपदं स्वपदम्।
हितदेहितदेहितदेहितदेत्वलपद्मकधानरदेवसुता ॥४९॥
साविधुराधावन्तं रवौघं क्वापिनिरपराधावन्तम्।
सार्थं राधावन्तं प्रैक्षिष्टापच्च मुतनुराधावन्तम् ॥५०॥

व्याकुलयेवारितयाविधेर्गतिरनेनमित्त्रयेवारितया ।
अपिचययेवारितया यथाप्रफर्य्यौजलौघयेवारितया ॥५१॥
प्रतिषिद्धान्यायस्य प्रापि सुबाहोश्च राजधान्यायस्य ॥
बहुधनधान्यायस्य प्रबभुर्वृन्दानि बहुविधान्यायस्य ॥५२॥
सत्कृत्नामात्वामानन्दंराज्ञोभ्वताच नामात्वामा ।
शोकेनामात्वामावबभ्रतद्देहयापनामात्वामा ॥५३॥
पदापदापरिभूमन्त्रयेनयापदा पदा ।
वना वना वनाथवत्सजीवना वनाभवत् ॥ ५४ ॥

इति श्रीकालिदासकृते नलोदये सत्काव्ये
तृतीयः सर्गः ।

---

## चतुर्थः सर्गः ।

अथतुङ्गोपायस्य श्रवणेन नलस्य सानुगोपायस्य ।
वश्रगा गोपायस्य स्वमनोभीमश्चिरं जुगोपायस्य ॥१॥
निश्चिचदिवाचाव्यंस्यचतस्यनलविचिन्तयेथवाचाव्यंस्य ।
भ्रममेवाचाव्यंस्य द्विजोत्तमैः शिष्यकैरिवाचाव्यंस्य ॥ २ ॥
अथनयनेत्वामादिप्रचुरापूः केनचिज्जनेत्वामादि ।
यत्रसुनेत्वामादिग्भूमेणा दुःखङ्गतावनेत्वामादि ॥३॥
सहृदोनायततेनस्वगृहस्वभैमीययेमुनायततेन ।
स्वनयेनायततेन प्राप्यै स्वासोश्च शोभनायततेन ॥ ४ ॥

वसनांशस्य स्तेन कामिममःथंत्रिधियंमस्यस्तेन ।
कच्रिग्रस्यस्तेनस्वजनेभ्रतेनभवमिमस्यस्तेन ॥५॥
सजनस्तेनागादिक्रामीतिजमेनतम्रतेनागादि ।
भर्तृकृतेनागाहिस्वरेनभुविवस्य परिहृतेनागादि ॥६॥
कोऽप्यूचेतनयायाःपद्मेत्यनृपस्यतेषुचेतनयायाः ।
भीर्मुखेतनयायादन्तिस्वादुःसहायचेतनयाया ॥ ७ ॥
निजधामेतंसमयाम्नतुपर्णश्राविताेऽथमेतंसमया ।
सचिवसमेतंसमयागिरोत्तरंनाजनिष्टमेतंसमया ॥ ८ ॥
दीनानायतनस्योनानायतमच्चमोऽस्यसौत्येधिकृतः ।
नानायतनकरोलीनानायतनः पथ्युवाचाथ रहः ॥९॥
दीनायानायतयाविवाससेऽस्मैविहीनयानायतया ।
नखलुधियानायतयाक्रोधव्यन्धर्म्मनिस्वयानायतया ॥ १०॥
कृतकर्म्मानमत्वागतोऽस्मिवचसेतितस्यमानेनत्वा ।
वेदयमानेनत्वा विप्रे च धनेषु दीयमानेनत्वा ॥ ११ ॥
तत्रापर्णायततस्वनयाङ्गमी तपस्वपर्णायतत ।
तुलितसुपर्णायततस्तस्यागमनायमर्त्तुपर्णायततः ॥ १२ ॥
साकतसामान्येनश्रावितवत्यमुमनन्यसामान्येन ।
स्वंरहसामान्येमस्वयंवरंस्मरतिनाङ्गसामान्येन ॥ १३ ॥
रहसितदामस्माहस्थितःस्मनलंयुतोमहासम्माह ।
श्रीस्त मदामस्माहस्फुटंप्रयामोव्रजेदितिव्युदामस्माहः ॥१४॥
सावनितावध्वानःस्वगुणैःकर्षतिकेहृताश्ववध्वान ।
समहस्तावद्धानःस्वदतियोजनशतंमितावध्वानः ॥१५॥

तत्त्वरथामायामः प्रणये धृतिमानिततवियामायामः ।
न लज्जायामायाम त्वत्वेत्यूचे क दुर्धियामायामः ॥१६
मां भजमानाश्वःस्त्राम् नमसौ ततप्रणोद्यमानाश्वःस्त्राम् ।
इतिमतिमानाश्वस्त्रान्यायमनागःक्वविकृतिमानाश्वस्त्राम् ॥१७॥
अथरथमावन्तंमल्लाविनलःशुम्राश्वमारावन्तम् ।
सजगामारावन्तंनृपतिमारोप्य बगुरुतमारावन्तम् ॥ १८ ॥
स्वांसकृतावसनस्य नणदूरलेनसङ्गतावसनस्य ।
भूभर्त्तीत्रसनस्य व्यस्मयतरथद्रुतेर्धुतावसनस्य ॥ १९ ।
फलगणनादच्चस्य व्यधित तदासोऽश्वनोदनादच्चस्य ।
तर्पास च नादच्चस्य प्रहर्षणं हृदयबोधनादच्चस्य ॥ २० ॥
बलजितदेवाख्यीभ्यां विद्याविनिमयोयुगपदेवाख्यीभ्याम् ।
संमर्देवाख्यीभ्यां व्यधायि संस्पृश्य सम्पदेवाख्यीभ्याम् ॥ २१ ॥
तदनु द्रुतमचमतः स्वीकृत्यास्वदहनेधिकतमचमतः ।
कलिकन्वतमचमतः स्फुटमेवगतोनलस्तु नतमचमत ॥ २२ ॥
पतितमनलसमेतस्याभैम्याक्षिविद्धिमानलसमेतस्याः ।
आर्त्तंनलमेतस्याश्रितस्य शरणप्रदोनरूसमेतस्याः ॥ २३ ॥
कलिमितिनानामायंनमन्तममुष्यमहामनानामायम् ।
कीर्त्तिधनानामायंमदधातिहरन्तिरिपुजनानामायम् ॥ २४ ॥
अथनुन्नाश्वस्तेन प्रास्थित राजामहात्मनाश्वस्तेन ।
सा ललनाश्वस्तेनस्यादितिहसताविरोधिनाश्वस्तेन ॥ २५ ॥
सोऽधमनेनायततामिष्ट इति नरः समंत्वनेनायततताम् ।
वहतिदिनेनायततामपुरीमिप्रयेणाश्रिताञ्जनेनायततताम् ॥२६

कर्त्तुम्मानन्तेनश्रमद्गतिनीतोभुवोऽयमानन्तेन: ।
खन्धामानन्तेनप्रेम्णा भीमेन जितविमानन्तेन ॥ २७ ॥
सज्जनतामहितस्वव्यग्रेतरलोकसूचितामहितस्य ।
सद्विषतामहितस्य द्रुतं पुरस्थेत्वणात्ततामहितस्य ॥ २८ ॥
प्रथिततमायामायांश्रुचिरथत्रसतावनुत्तमायामायाम् ।
चारुतमायामान्नलः स्मरन्वासमससमायामायाम् ॥२९॥
तं स्वनयानन्तरसान्निध्यगतमवेच्यनुन्नयानन्तरसा ।
अभ्युद्यानन्तरसावधितमुदानैषधप्रियानन्तरसा ॥३०॥
तन्नम्रालोकेन स्थोयतद्रत्यत्र सुखमुखनालोकेन ।
किंहीनालोकेनस्वकमित्राक्रान्तरिपुजनालोकेन ॥३१॥
तंसाब्धामानयत: परीच्यबहुधागुणाभिरामानयत: ।
स्वजनगिरामानयत: स्ववयस्यावसतिमपिपरामानयत ॥३२॥
तरसैवासावासस्वांविक्षतिमह्वैवंहन् सुवासावास ।
स्थिरभावासावासस्निग्धश्चारंस्तनृपतिवासावास: ॥ ३३ ॥
नृपधामनिशान्तेनव्यतीत्यभैमीसमागमनिशान्तेत ।
द्विषतामनिशान्तेन श्वशुरोहृष्ट: श्रितोत्तमनिशान्तेन ॥३४॥
ध्रुतजड़िमानेहासीद्दृतुपर्णोऽपिप्रहृष्यमानेहासी ।
आत्मसमानेहासीदभिपूज्यैनं नलोरिमानेहासी ॥ ३५ ॥
सासुसमासामासस्वयमत्र पुरे नलोऽयमासामास ।
स्त्रीणामासामासश्रममनुनानायिसुमुखमासामास: ॥३६
अथमहदाराजितयास्वपुरन्वम्वानलस्तदाराजितया ।
सासिगदाराजितया पुष्करमभ्यधादुदाराजितया ॥३७॥
मयिगहनामायासि त्वयामनोनाम्रमानिनामायासि ।

धनुरवनामायासि चूतायालं क चेतनामायासि ॥३८॥
इत्युक्तो देवनतः सोऽर्थं भवत्पुष्करःप्रमादेवनतः।
येनसविभिर्देवनतः पुरावनेः अममपि प्रपेदेवनतः ॥३९॥
सचराजायततेनद्युतेऽसुपर्णेजितोव्यजायततेन।
मिव्यौजायततेन त्यक्त्वागस्तुगतरजायततेन ॥ ४० ॥
अथिभवनेत्रायस्वस्वभुवं पुष्करमुदञ्जनेत्रायस्व।
युगबजनेत्रायस्वस्नेहायपुरेव विमलनेत्रायस्वः ॥ ४१ ॥
हरिपवनयमानस्य स्वबलादिति तुलयतोनुनयमानस्य।
स्नेहानयमानस्य प्रणतिमधात् पुष्करः सुनयमानस्य ॥४२॥
अरिसेनानाशस्य क्षितवत्सलतेऽस्तुचेतनानाशस्या।
पूरितनानाशस्यालोकयशोभिः कदापिनानाशःस्याः ॥४३॥
इतिसननामनलस्य प्रणतोंघ्रीफलवक्त्रनामनलस्य।
अह्नितानामनलस्य प्रययौ सार्द्धं तेननामनलस्य ॥४४॥
मुदमसुनामुक्तेन प्राप्य सुराज्यं महात्मनामुक्तेन।
छतनानामुक्तेन राज्यश्चिरं प्राशासिविघट्टनामुक्तेन ॥४५॥
अरिसंहतिरस्य वनेष प्रचाम्पदमापदमापदमा।
सुखदश्च मथैव जनायहरिं यतमायतमायतमायतमा ॥४६॥
नलेन पुर्ध्यना यता यता यता पुरेवसा।
सदायमुन्महा महा महा महास्तसम्पदम्। ४७ ॥

इति श्रीकालिदासकृतौ नलोदये सत्काव्ये

चतुर्थः सर्गः।

**समाप्तः।**

# जगन्नाथाष्टकम् ।

कदाचित्कालिन्दीतटविपिनसङ्गीतकवरो
मुदाभिरीनारीवदनकमलास्वादमधुप ।
रमाशम्भुब्रह्मासुरपतिगणेशार्चितपदो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ १ ॥

भुजे सव्ये वेणुं शिरसि शिखिपुच्छं कटितटे
दुकूलं नेत्रान्ते सहचरिकटाक्षेण विदधत् ।
सदा श्रीमद्वृन्दावनवसतिलीलापरिचयो
जगन्नाथस्वामी० ॥ २ ॥

महाम्भोधेस्तीरे कनकरुचिरे नीलशिखरे
वसन् प्रासान्ते सहजबलभद्रेण बलिना ।
सुभद्रामध्यस्थः सकलसुरसेवावसरदो
जगन्नाथस्वामी० ॥३॥

कृपापारावारः सजलजलदश्रेणिरुचिरो
रमावाणीरामस्फुरदमलपद्मेक्षणमुखः ।
सुरेन्द्रैराराध्यः श्रुतिमुखगणैर्गीतचरितो
जगन्नाथ० ॥४॥

परं ब्रह्मापीषत्कुवलयदलोत्फुल्लनयनो
निवासी नीलाद्रौ निहितचरणोऽनन्तशिरसि ।
रसानन्दीराधासरसवपुरानन्दनसुखी
जगन्नाथ० ॥५॥

रथारूढो गच्छन् पथि मिलितभूदेवपटलैः
स्तुतिप्रादुर्भावं प्रतिपदमुपाकर्ण्य सदयः।
दयासिन्धोर्बन्धुः सकलजगतां सिन्धुसदयो
जगन्नाथ० ॥६॥

नचेद्राज्यं राज्यं न च कनकमाणिक्यविभवो
न याचेऽहं रम्यां सकलजनकाम्यावरविधे।
सदा काले कामः प्रथमपठिनोद्गीतचरितो
जगन्नाथ० ॥७॥

हरत्वं संसारं द्रुततरमसारं सुरपते
वरत्वं भोगीशं सततमपरं नीरजपते।
अहो दीनानाथो निहितमचलं निश्चितमिदं
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥८॥

जगन्नाथाष्टकं पुण्यं यः पठेत् प्रयतः शुचिः।
सर्वपापविशुद्धात्मा विष्णुलोकं स गच्छति ॥९॥

इति जगन्नाथाष्टकं सम्पूर्णम्।

---

# यमुनाष्टकम्।

मुरारिकायकालिमाललामवारिधारिणी
तृणीकृतत्रिविष्टपात्रिलोकशोकहारिणी।

मनोऽनुकूलकूलकुञ्जपुञ्जधूतदुर्मदा
धुनोतुनोमनोमलङ्कलिन्दनन्दिनीसदा ॥१॥
मलापहारिवारिपूरिभूरिमण्डितामृता
भृशंप्रपातकः प्रपञ्चनाति पण्डितानिशा ।
सुनन्दनन्दिनाङ्गरागरागरञ्जिताहिता
धुनो तु० ॥२॥
लसत्तरङ्गसङ्गधूतभूतजातपातका
नवीनमाधुरीधुरीनभक्तिजातचातका ।
तटान्तवासदासहंससंसृताम्बिकामदा
धनोतु नो० ॥३॥
विहाररासखेदभेदधीरतीरमारुता
गतागिरामगोचरे यदीयनीरचारुता ।
प्रवाहसाहचर्यपूतमेदिनीनदीनदा
धुनोतु नो० ॥४॥
तरङ्गसङ्गसैकतान्तरान्तितंसदासिता
शरन्निशाकरांशुमंजुमंजरीसभाजिता ।
भवार्चनाप्रचारुणाम्बुनाधुनाविशारदा
धनोतु नो० ॥५॥
जलान्तकेलिकारिचारुराधिकांगरागिणी
स्वभर्तुरन्यदुर्लभांगतागतांशभागिनी ।
स्वदत्तसुप्तसप्तसिंधुभेदिनातिकोविदा
धुनोतु नो० ॥६॥

जलच्युतच्युतांगरागलम्पटालिशालिनी
विलोलराधिकाकचान्तचम्पकालिमालिनी ।
सदावगाहनावतीर्णभर्तृभृत्यनारदा
धुनोतु नो० ॥७॥

सदैवनन्दिनन्दकेलिशालिकुञ्जमञ्जुला
तटोत्थफुल्लमल्लिकाकदम्बरेणुसुज्ज्वला
जलावगाहिनां नृणां भवाब्धिसिन्धुपारदा
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा ॥८॥

इति श्रीशङ्कराचार्यविरचितं यमुनाष्टकं सम्पूर्णम् ।

---

# उद्धवसन्देशः ।

सान्द्रीभूतैर्नवविटपिनां पुष्पितानां वितानैः
लक्ष्मीवत्तां दधति मथुरापत्तने दत्तनेत्रः ।
कृष्णः क्रीडाभवनवडभीभूम्नि विद्योतमानो
दध्यौ सद्यस्तरलहृदयो गोकुलारण्यमैत्रीम् ॥ १ ॥
श्वासोल्लासैरथ तरलितस्थूलनालीकमालः
कुर्वन् पूर्णा नयनपयसां चक्रवालैः प्रणालीः ।
स्मारं स्मारं प्रणयनिविडां बल्लवीकेलिलक्ष्मीम्
दीर्घोत्कण्ठाजटिलहृदयस्तत्र चिन्तायितोऽभूत् ॥ २॥

अन्तःस्वान्ते क्षणमथ परामृश्य पाराभिलाषी
कष्टाम्भोधेर्भवनशिखरे कुट्टिमान्तर्निविष्टः ।
सोत्कण्ठोऽभूदभिमतकथां शंसितुं कंसभेदी
नेदिष्टाय प्रणयलहरी बद्धवागुद्धवाय ॥ ३ ॥
त्वं सर्वेषां मम गुणनिधे बान्धवानां प्रधानम्
त्वत्तो मन्त्रैः श्रियमविचलां यादवाः साधयन्ति ।
इत्याश्वासादभिमतविधौ कामये त्वां नियोक्तुम्
न्यस्तः साधीयसि सफलतामर्थभारो हि धत्ते ॥ ४ ॥
संरम्भेण क्षितिपतिगिरां लम्भिते गर्वितानां
वृन्दारण्यान्मयि मधुपुरीं गान्दिनीनन्दनेन ।
वल्लव्यस्ता विरहदहनज्वालिकामण्डलीनाम्
अन्तर्लीनाः कथमपि सखे जीवितं धारयन्ति ॥ ५ ॥
प्राणेभ्यो मे प्रणयवसतिर्मित्र तत्रापि राधा
धातुः सृष्टौ मधुरिमधराधारणादद्वितीया ।
वाचोयुक्तिस्तवकितपदैरद्य सेयं सखीनां
गाढ़ाश्वासैर्विधुरविधुरं प्राणभारं बिभर्ति ॥ ६ ॥
गत्वा नन्दीश्वरशिखरिणो मेखलां रत्नभूताम्
त्वं वल्लीभिर्वलयितनगां वल्लवाधीशपल्लीम् ।
तां दष्टाङ्गीं विरहफणिना प्राणयन् प्रीणयार्त्तां
वार्तामन्त्रध्वनिभिरथ मे मन्त्रिचूडामणीन्द्र ॥ ७ ॥
तिष्ठन्त्येते जगति बहवस्त्वद्विधानां विधातुं
चेतःपूर्तिं ननु जनपदामूर्तिभिर्मे सनाथाः ।

भूयोभूयः प्रियसख शपे तुभ्यमव्याजतोऽहम्
भूरन्या मे हृदि सुखकरी गोष्ठतःकापि नास्ति ॥ ८॥
मद्विश्लेषज्वलनपटलीज्वालया जर्जराङ्गीः
सर्वे तस्मिन्निधनपदवीं प्राप्स्यन्तोऽप्याश्रयिष्ठन् ।
गोपीनेत्रावलिविगलितैर्भूरिभिर्वाष्पवारां
पूरैस्तेषां यदि निरवधिर्नाभिषेकोऽभविष्यत् ॥ ९ ॥
आत्मक्लेशैरपि नहि तथा मेऽन्तुदुङ्गैर्व्यथन्ते
वल्लव्यस्ताः प्रियसख यथा मद्व्यथालेशतोऽपि ।
दुर्वारां मे विरहविहितां निष्कुवानस्तदाति
प्रेमग्रन्थिं त्वमतिपृथुलं तासु विख्यापयेथाः ॥ १० ॥
भ्रातर्नन्दीश्वरगिरिमितो यास्यतस्ते विदूरं
पन्थाः श्रीमानयमकुटिलः कथ्यते पथ्यरूपी ।
प्रीये सद्यस्त्वयि निपतिते गोकुलानन्दसिन्धौ
सन्तस्तुष्टे सुहृदि हि निजां तुष्टिमेवामनन्ति ॥ ११ ॥
अग्रे गौरीपतिमनुसरेः पत्तनान्तर्वसन्तं
गोकर्णाख्यं व्यसनजलधौ कर्णधारं नराणाम् ।
यस्याभ्यर्णे सह रविजया सङ्गमो जङ्गमानाम्
आविष्कुर्वन्नभिमतधुरां धीर सारस्वतोऽस्ति ॥१२॥
आरूढस्ते नयनपदवीं तन्निधन्यासि सोऽयं
गोपीनम्रं करणमुरलीकाकलीकः कलावान्
इत्यालापस्फुरितवदनैर्यत्र नारीकदम्बैः
दृग्भङ्गीभिः प्रथममथुरासङ्गमे चुम्बितोऽस्मि ॥१३॥

तस्मादन्तर्विरचितपरानन्दपूराददूरां
याहि प्रीत्या सपदि पदवीमम्बिकाकाननस्य।
यत्रानन्दोत्सवमकरवं सर्पतः सर्पतोया
नन्दं विद्याधरमपि पुरामोचयन् बल्लवीनाम् ॥२४॥
भूयोऽभिख्यं किल कुवलयापीड़दन्तावघातैः
एता निम्नोन्नतपरिसरां स्यन्दने वर्त्तमानः।
मुञ्चोत्तुङ्गां मिहिरदुहितुर्धीरतीरान्तभूमिं
मन्दाक्रान्तां न खलु पदवीं साधवः शीलयन्ति ॥२५॥
मुञ्चासव्ये विहगरुचिरं किञ्चिदस्मादुदञ्चं
राजत्तीरं नवसुमनसां राजिभिस्तीर्थराजम्।
यत्रापूर्वं किमपि कलयाञ्चक्रतुर्मत्प्रभावाद्
आभीराणां कुलमपि तथा गान्दिनीनन्दनोऽपि ॥२६॥
यज्वानस्ते यदपि भवतो विप्रिया हेलनान्मे
नमस्तेषां तदपि भवनद्वाररथ्यां जिहीथाः।
गायन्तीनां मदनुरचितं तत्र विप्राङ्गनानाम्
आलोकाय स्पृहयसि न चेदध्वभावैर्जितोऽसि ॥२७॥
तद्विख्यातं स्फटविटपिनां मण्डलेनाभिपूर्णं
तूर्णं गच्छेस्त्रिपुरिपुरः कोटिकाख्यं प्रदेशम्।
यत्र प्राप्ते मयि विकिरती नेत्रमुद्यानपाली
शालीनापि प्रकटितभुजा मूलमल्यं जहास ॥२८॥
इत्थं क्रान्त्वा पुरपरिसरान् याहि सङ्कीकराख्यं
पद्मीभूतं भ्रमरनृपतेः पुष्पितारण्यमारात्।

श्रीदामानं सुभग गरुडीकृत्य यत्राधिरूढः
क्रीड़ाकारी दधदुरुभुजां द्वादशाहं वसामि ॥१६॥
मुग्धे श्यामः कलयति युवा पश्य मामेव नत्वाम्
इत्युल्लासैरहमहमिकां सर्वतः कुर्वतीभिः ।
यानालम्बी सरलनयनालोकमैत्रीभराणां
ग्रामीणाभिर्युवतिभिरहं यत्र पात्रीकृतोऽस्मि ॥२०॥
मुञ्चन् सव्ये वहलवकुलां काननस्योपशल्यं
तन्वीं तुङ्गं ह्रदपरिसरं दक्षिणे कालियस्य ।
फुल्लाभिस्त्वं पिहितमिहिरद्योतमन्तर्लताभिः
धीराध्वानं विमलसरसीराजिभाजं भजेथाः ॥२१॥
वक्षि चित्रं व्रजमृगदृशं तं व्रजस्योपशल्ये
कल्ये क्रीड़ावनविहरणोत्कण्ठया गच्छतो मे ।
यत्रोदश्वत् कलवलयितैर्वेणुगीतैर्मृगाणां
तूर्णं राजीरजनि विरहव्याकुलानामहारि ॥२२॥
आनम्राणां हसितमुकुलैः फुल्लगण्डस्थलानां
दूराद्दृष्टिं स्फुटसुमनसां स्यन्दने मुञ्चतीनाम् ।
ते वैदग्धीपरिमलकिरो दत्र सीमन्तिनीनां
सख्यु वीणावलिविलसिता रुत्वलक्षाः कटाक्षाः ॥२३॥
एष श्रीमान् प्रसवति रथी माधवो राधिकायाः
प्रेम स्थूलं करणकुटिलालोकभङ्गीविलासैः ।
इत्यौत्सुक्याद्व्रजयुवतिभिः स्मारितोद्दामनर्मा
वर्माश्लोभिष्टं ततनुरहं यत्र चित्रायितोऽस्मि ॥२४॥

लीलाखानी मम विजयते यत्र नागेन्द्रभोगे
श्रीराधाङ्कीकृतपदयुगाम्भोजसंवाहनस्य ।
तत्र क्षीराम्बुधिपरिमलस्यन्दने वर्द्धहस्ते
ग्रामे कामं ध्वजवति भजे बद्धविश्रामसौख्यम् ॥२५॥
सोऽयं दध्नां मथननिनदाक्रान्तदिक्चक्रवालो
घोषस्तोषं तव जनयिता योजनद्वन्द्वचुम्बी ।
दिव्येनालं निखिलजगतीं सर्पिषा तर्पयन्तो
भ्रातर्भूम्ना विलसति विधे गोमयी यत्र सृष्टिः ॥२६॥
कच्छां लक्ष्माणधिभिरभितः कासरीभिः परीतां
तां सङ्क्रद्धव्रजविजयिनीं शाल्मलाख्यां भजेथाः ।
वीथ्यां वीथ्यां पृथुकनिकरा यत्र मित्रानुवेलं
खेलन्तस्तानविदधते विक्रमान् मे क्रमेण ॥२७॥
दूरादेष प्रणयति पुरा लब्धसाक्षारनामा
प्रेमानन्दं तव नयनयोरौपनन्दो निवासः ।
जङ्घालेन क्षितिपतिपुरीं स्यन्दनेनानुविन्दन्
यत्राहारं प्रियमकरवं हारि हैयङ्गवीनम् ॥२८॥
गोपेन्द्रस्य व्रजपरिसरे लब्धतुष्टिर्लभेथाः
तां विख्यातां कलितमहिलाचारुहेलां रहेलाम् ।
यामासाद्य प्रहितसुरलोकाकलीदूतिकोऽहं
सायं गोपीकुलमकरवं सामि नेपथ्यनद्धम् ॥ २९ ॥
यत्र प्रीतानहमकरवं मित्रभावेन ग्रावान्
हारं हारं त्रिदिवसमयोवल्लवीनां दधीनि ।

शाखिव्रातः स खलु वलितः प्रीतधाराभिधस्ते
देशः क्लेशं पथिषु रथिनो दारयिष्यत्युदारम् ॥ २० ॥
सोऽयं रम्भानटनपटुभिः सेव्यमानो मरुद्भिः
कम्पाशोकोत्तमसुमनसां निर्भरामोदधारी ।
पीयूषेण स्फुरितवसतिस्तामुदञ्चद्गुरुश्रीः
लोकातीतः किल मदधिता बल्लवेन्द्रस्य लोकः ॥ २१ ॥
पश्यन्तीनां चकितचकितं लब्धसङ्गं मताङ्गे
मामुत्तुङ्गव्यसनविसरैः काममुन्मादितानाम् ।
तासां विद्युत्तरलवपुषां बल्लवीनां प्रपातात्
त्रियुक्कारीं कथयति जनो दक्षिणां यस्य कक्षाम् ॥२२॥
यत्राक्रूरः प्रणयनिविडोत्कण्ठया गुम्फितात्मा
रङ्गाद्गोष्ठाङ्गणमनुसरन् मामलोकिष्ट बन्धुम् ।
तद्दास्यान्धः कुलपरिचयारब्धनृत्यैः कदम्बैः
सा सम्वीता विलसति तटी यत्र सौधाचिकाख्या ॥२३॥
धावद्वालार्भलिकरतलग्रीवलद्वालधीनां
यत्रोत्तुङ्गस्फटिकपटलस्पर्द्धिदेहद्युतीनाम् ।
घ्रायं घ्रायं नवतृणशिखां मुञ्चतीनां वलन्ते
वत्सालीनां चटुलचटुलं शष्पदाटीकनानि ॥ २४ ॥
आभीरीणां नयनसरणीसङ्गमादेव तासां
सद्यो मोहायितमधुरिमोल्लासभङ्गीविधाता ।
पीठीभूतो मम परिमलोद्गारगोष्ठी गरीयान्
यत्रास्थानीमनुविजयते पाण्डुरो गण्डशैलः ॥ २५ ॥

रेणुर्नायं प्रसरति गवां धूमधारा कृशानोः
वेणुर्नासौ गहनकुहरे कीचको रोरवीति ।
पश्योन्मत्ते रविरभिययौ नाधुनापि प्रतीचीं
मा चाञ्चल्यं कलय कुचयोः पत्रवल्लीं तनोमि ॥२६॥
दूरे वंशीध्वनिरुदयते हन्त मा धाव तावत्
धूम्रे द्रानीमपि नहि गवां लक्ष्यते धूलिलेखा ।
अस्ति द्वारे गुरुरपि ततो लम्बितां स्रंसयन्ती
चीरे नीवीं त्वमिह तरसा याहि गेहान्तरालम् ॥२७॥
आप्रत्यूषादपि सुमनसां वीथिभिर्ग्रथ्यमाना
धत्ते नासौ सखि कथमहो वैजयन्ती समाप्तिम् ।
धिन्वन् गोपीनयनशिखिनो व्योमकक्षां जगाहे
सोऽयं मुग्धे निविडधवलो धूलिचक्राम्बुवाहः ॥२८॥
अस्मिन् भूयो विहृमरवपुः सौरभे सौरभेयी
धूलेर्जालैः सवलितशिरो मालतीचक्रवाले ।
अन्तर्गोष्ठं प्रविशति हरौ हन्त कस्या न चेतः
तृष्णां धत्ते अरति मुखरे किं वृथा रारटीषि ॥२९॥
मा मन्दाक्ष्यं कुरु गुरुजनाद्दूतिके गेहमध्यात्
एहि क्लान्ता दिवसमखिलं हन्त विश्लेषतोऽसि ।
एष स्मेरो मिलति मृदुले वल्लवीचित्तहारी
हारी गुञ्जावलिभिरलिभिर्लीढगन्धो मुकुन्दः ॥४०॥
सौरिर्गोष्ठाङ्गणमनुसरन् शिञ्जितैरेव मुग्धः
किङ्किण्यास्ते परिहर दृशोस्ताण्डवं मण्डिताङ्गि ।

आराद्गीतैः कलपरिमिलन्माधुरीकैः कुरङ्गे
लब्धे सद्यः सखि विवशतां वागुरां कस्तनोति ॥४१॥
यान्त्या लीलोद्भटकलतुलाकोटि सद्यस्त्वयासौ
लब्धा चन्द्रावलि सखि कुतः शब्दभेदाख्यविद्या।
पश्योपेन्द्रः सदनपदवीं वल्लवेन्द्रस्य मुञ्चन्
अन्तर्भिन्नो मुहुरिह यया सम्भ्रमाद्भ्रमीति ॥४२॥
सा सोत्कण्ठं वसति वसतेर्वत्सला द्वारि देवी
वल्लीस्तोमैः च्चणमिह मुखाम्भोजलक्ष्मीं विधेहि।
दूराच्चेतोमणिमपहरन्नेष भव्याङ्गि दिव्यो
विव्वोकस्ते मुरविजयिनो वर्त्म पाती बभूव ॥४३॥
यष्टिर्भूमौ लुठति तरसा स्रंसते पश्य वंशी
कंसारातेः स्खलनममलं स्रक्कमङ्गीकरोति।
दूरानन्दः कलयति पुरो ह्रेपयामुं न राधे
बध्ने देवि स्थगय चपलापाङ्गभङ्गीवितानम् ॥४४॥
तिष्ठन् गोष्ठाङ्गणभवि मुकुलेविनान्तं विधत्ते
जातोत्कण्ठस्तव सखि हरिर्देहलीवेदिकायाम्।
मिथ्यामानोन्नतिकवलिते किं गवाक्षार्पिताक्षी
स्वान्तं हन्त क्लपयसि वहिः प्रीणय प्राणनाथम् ॥४५॥
पश्य व्रीड़ां सकपटमसौ तन्वती नः पुरस्तात्
द्वारे गौरी न सरति मुहुः सौरिणाकारितापि।
आकृष्टाया गहनकुहरे वेणुविद्याविनोदैः
जानात्यस्याः पुनरनुपमं विभ्रमं कुञ्जवीथी ॥४६॥

इत्थं साचिस्मितरचिभृतां यत्र सन्ध्यानुबन्ध
मामुद्दिश्य स्मरपरिमलं बिभ्रतीनामदभ्रम् ।
पौनःपुन्याद्द्विविधहृदयोत्तुङ्गभावानुसङ्गी
लीलाजल्पः कुवलयदृशां प्रेमपूर्णः पुरासीत् ॥४७॥

द्वादशभिः कुलकम् ।

दामाकृष्टिद्विगुणितकरारण्यविद्योतितानां
घर्माम्भोभिर्दरवलयितस्मेरगण्डस्थलानाम् ।
भालोपान्तप्रचलदलकश्रेणिभाजां मदीयैः
कीर्त्तिस्तोमैर्मुखरितमुखाम्भोजलक्ष्मीभराणाम् ॥४८॥

हेलाचञ्चद्वलयरणितग्रन्थितैर्मन्थनीनां
ध्वानोन्मिश्रैर्मसृणमधुरं मन्थतीनां दधीनि ।
गीतैस्तासां कुवलयदृशां यत्र रात्रेर्विरामे
प्रेमोत्तानैर्मम समजनि स्वप्नलीलासमाप्तिः ॥४९॥

युग्मकम् ।

निर्माय त्वं वितरफलकं हारि कंसारिमूर्त्ति
वारं वारं दिशसि यदि मां माननिर्वाहनाय ।
यत् पश्यन्ती भवनकुहरे दृढ्ककर्णान्तराहं
साहङ्कारा प्रियसखि सुखं यापयिष्यामि यामम् ॥५०॥

सन्ति स्फीता व्रजयुवतयस्त्वद्विनोदानुकूला
रागिण्यग्रे मम सहचरी न त्वया घट्टनीया ।
दृष्ट्वाभ्यर्णे मठकुलगुरुं त्वां कटाक्षार्द्धचन्द्रान्
भ्रूकोदण्डे घटयति जवात् पश्य संरम्भिणीयम् ॥५१॥

मा भूयस्त्वं वद रविसुतातीरधूर्तस्य वार्तां
गन्तव्या मे न खलु तरले दूति सीमापि तस्य ।
विख्याताहं जगति कठिना यत् पिधत्ते मदङ्गं
रोमाञ्चोऽयं सपदि पवनो हैमनस्तत्र हेतुः ॥५२॥

कामं दूरे वसतु पटिमा चाटुवृन्दे तवायं
राज्यं स्वामिन् विरचय मम प्राङ्गणं मा प्रयासीः ।
हन्त क्लान्ता मम सहचरी रात्रिमेकाकिनीयं
नीता कुञ्जे निखिलपशुपीनागरोज्जागरेण ॥५३॥

मेदिन्यां ते लुठति दयिता मालती म्लानपुष्पा
तिष्ठन् द्वारे रमणि विमनाः खिद्यते पद्मनाभः ।
त्वं चोन्निद्रा क्षपयसि निशां रोदयन्ती वयस्या
माने कस्ते नवमधुरिमा तन्तु नालोकयामि ॥५४॥

मद्वक्षोम्भोरुहपरिमलोन्मत्तसेवानुबन्धे
पत्युः कृष्णभ्रमर कुरुषे किन्तरामन्तरायम् ।
तृष्णाभिस्त्वं यदि कलकलव्यग्रचित्तस्तदाग्रे
पुष्पैः पाण्डुच्छविभिरविरलैर्याहि पुन्नागकुञ्जम् ॥५५॥

अत्रायान्तं चलमपि हरिं लोकयन्ती वलिष्ठां
त्वामालम्ब्य प्रियसखि घने नास्मि कुञ्जे निलीना ।
अस्मान्मग्धे हृदयनिहितादद्य पीताम्बरात्ते
शक्तो नान्यः कुचपरिचये मत्पुरो मा व्यथिष्ठाः ॥५६॥

मां पुष्पाणामवचयमिषाद्दूरमानीय कुञ्जं
स्मित्वा धूर्तं किमिति रभसादुच्चकैर्गीयसि त्वम् ।

शङ्कामन्तर्न रचय मुधा तस्मि गीतं तनोमि
स्फीतं वृन्दावनभुवि मुहुः कृष्णसारोऽस्त्रवाय ॥५७॥
वारं वारं भ्रजसि सलिलच्छद्मना पद्मबन्धोः
पुत्रीं ज्ञातस्तव सखि रसः पुण्डरीकेक्षणोऽसौ ।
चेतः काम्या भवति विशदासारशाली न वामे
तेन स्मेरं मुहुरभिलषाम्यच्युतं रक्तपद्मम् ॥५८॥
पश्चात्स्यान्तर्विहितवसतिं त्वामराला‍ङ्गनानां
अत्र चौरे स्पृहयसि कथं कृष्णकण्ठग्रहाय ।
साधु ब्रूषे सखि मदकलो मां शिखण्डोज्ज्वलोऽयं
कुञ्जे दृष्ट्वा भुजगदमनोद्दामदर्पोऽभ्युपैति ॥५९॥
बाले चन्द्रावलि नहि वह्निर्भूय भूयः प्रदोषे
गेहात् तृष्णारति कुरु पुरः कृष्णवर्त्मावलोकम् ।
सर्वस्थान्तर्जडिमदमने पावके नाद्य लब्धे
मुग्धे सिद्धिर्मम रसवती प्रक्रिया न प्रयाति ॥६०॥
हस्ते नाद्य प्रियसखि लसत्पुष्कराभेन दूरात्
कृष्णेनाहं मदकलदृशा कम्पिताङ्गी विकृष्टा ।
नीचैर्जल्प भ्रमति पुरतो भ्रान्तचित्ते गुरुस्ते
कच्छकालिन्दीपुलिनविपिने दीप्रदन्तीश्वरेण ॥६१॥
वृन्दारण्ये मम विदधिरे निर्भरोत्कण्ठितानि
क्रीडोल्लासैः सपदि हरिणा हा मया किं विधेयम् ।
ज्ञातं धूर्त्ते स्पृहयसि मुहुर्नन्दपुत्राय तस्मै
मा शङ्किष्ठाः सखि मम रसो दिव्यसारङ्गतोऽभूत् ॥६२॥

इत्थंभूता बहुविधपदारम्भगम्भीरगर्भा
कर्णानां मे स्फुटतरतया कोटिभिः पातुमिष्टा।
आसीत्तासां प्रियसखि पुरा यत्र कल्याणवाणां
प्रेमोल्लासप्रकटनकला कर्मठा नर्म्मगोष्ठी ॥६३॥

चतुर्दशभिः कुलकम्।

केयं श्यामा स्फुरति सरले गोपकन्या किमर्थं
प्राप्ता सख्यं तव मृगयते निर्मितासौ वयस्या।
आलिङ्गामुं मुहुरिति तथा कुर्वती मां विदित्वा
नारीवेशं ह्रियमुपययौ मानिनी यत्र राधा ॥६४॥
यत्रोत्तुङ्गाः करपरिचयं शश्वदावेदितांसो
भूयांसो मे विमलहृषदां कल्पिता मण्डलीभिः।
बन्धायोद्यत्तरलतरसां तर्णकानां निखाताः
कीलाः कूलस्थलवलयिनो भान्ति पद्माकराणाम् ॥६५॥
नो जानीमः कठिनविधिना मद्विधानां कपाले
गोपालीनां किल विलिखिता कीदृशी वर्णलेखा।
यः सन्ध्यायां सुमुखि मिलितो गोकुले राजदूतः
सोऽयं कर्णे निभृतनिभृतं माधवं वावदीति ॥६६॥
एष चत्ता व्रजनरपतेराज्ञया गोकुलेऽस्मिन्
बाले प्रातर्नगरगतये घोषणामातनोति।
दुष्टं भूयः स्फुरति च बलादीक्षणं दक्षिणं मे
तेन स्वान्तं स्फुटति चटुलं हन्त भाव्यं न जाने ॥६७॥
प्रातर्यात्रां नरपतिपुरे तथ्यमाकर्ण्य शौरेः
आयामाय प्रियसखि मया यामिनी प्रार्थिताभूत्।

पश्य चिप्रं प्रथितलघिमा पापिनीयं प्रभाता
जायन्ते हि प्रचुरतमसो नानुकूलाः परेषु ॥६८॥
यावद्व्यक्तिं न किल भजते गान्दिनेयानुबन्धः
तावन्नत्वा सुमुखि भवतीं किञ्चिदभ्यर्थयिष्ये ।
पुष्पैर्यस्या मुहुरकरवं कर्णपूरान् मुरारेः
सेऽयं फुल्ला गृहपरिसरे मालती पालनीया ॥६९॥
नावैषि त्वं पतितमशनिं मूर्ध्नि निर्मीयमाणा-
मेनां कस्ते सखि शिखरिणीं हन्त पाता हतासि ।
तूर्णं मुग्धे वहिरनुसर प्राङ्गणं गेहमध्यात्
अध्यारूढो जिगमिषुरसौ स्यन्दनं नन्दसूनुः ॥७०॥
आसीदार्ये पथ्युपपटलीमन्तरा नान्तरायः
प्रापुः पापा नच विकलतां पादभङ्गैस्तुरङ्गाः ।
ध्वस्तो नाभूदयमपि मनाक् स्यन्दने चक्रबन्धः
सत्यं गन्ता मधुपुरमसौ हन्त किं केशिहन्ता ॥७१॥
आरादग्रे कलय नृपतेर्दूत निर्धूतलज्जा
सज्जा तन्वी किमपि विषमं साहसं कर्तुमिच्छुः ।
यानाद्यावद्विसृजसि पुरश्चन्द्रहासं न कृष्णं
हस्तात्तावद्विसृजति सखी चन्द्रहासं न कृष्णाम् ॥७२॥
मुग्धे पश्य क्षणमपि हरिं नेत्रमुन्मीलयन्ती
मोहेन त्वं विरचय मुहुर्नात्मनो वञ्चनानि ।
शृण्वन् काकूत्करमपि पुरो हन्त सीमन्तिनीनां
क्रूरस्तूर्णं विनुदति रथं दूरमक्रूरनामा ॥७३॥

पश्य श्यामोदरि तव मुखालोकजन्मा हि शोको
वारं वारं हरिनयनयोर्बाष्पमन्तस्तनोति।
धावद्वाजित्सरुदुरुखुरोत्तानितानां वितानो
धूलीनान्तु श्नथति विसरन्नेष मिथ्याकलङ्कः॥७४॥
कृष्णं मुष्णन्नकरुणबलाद्गोपनारीवधार्थी
मा मर्यादां यदुकुलभुवां भिन्धिरे गान्दिनेयः।
इत्युत्तुङ्गा मम मधुपुरे यात्रया तत्र तासां
वित्रस्तानां परिववलिरे वल्लवीनां विलापाः॥७५॥

द्वयभिः कुलकम्।

अस्याभीराश्वरथकपटप्राप्तगोपालनारी
गूढक्रीड़ावसतिनिविड़च्छायकुञ्जोपगूढ़ः।
यत्रादूरे विलसति महान् बन्धरोलम्बसङ्घा
पद्मामोदस्नपितपवनः पावनाख्यस्तड़ागः॥७६॥
लीलाक्रान्तैर्मुरविजयिनः सर्वतः पादपातैः
वैलक्षण्यं किमपि जगतामन्तराकर्षि नीताः।
एते नन्दीश्वरपरिसरा नेत्रवीथीं भजन्तः
तीव्रं मातः किमपि दहनं चेतसि ज्वालयन्ती॥७७॥
अस्ति प्रेम्णां त्वयि परिमलो मांसलः कंसशत्रोः
अद्य श्वो वा स तव भविता हारिहाराणुकारी।
दम्भोलीनामपि सुवदने गर्भनिर्भेददक्षैः
एभिः कामं किमु विलपितैर्बान्धवान् दन्दहीषि॥७८॥
मा कार्पण्यादिरचय वृथा बाष्पमोचं हताशे
कृष्णाश्लिष्टां तनुमनुपमां स्वेच्छया न त्यजामि।

ज्वालस्तीव्रो विरहदहनादाप्तजन्मा बलान्मे
मर्मोन्माथी लघुतरमिमां पातयन्दन्दहीति ॥७९॥
कारुण्याब्धौ क्षिपसि जगतीं हा किमेभिर्विलापैः
धेहि स्थैर्य्यं मनसि यदभूरच्युते बद्धरागा ।
मृत्वा बाणीमपि यदि निजां स व्रजं नाजिहीते
धर्त्ता.स्माकं त्रिजगति ततस्त्वं निर्दोषताभूत् ॥ ८० ॥
कार्यं गन्ता मधुरिपुरितो गोकुलादस्मदीयः
काले वंश्ये सुखमिति मया हन्त मानो व्यधायि ।
का जानीते यदिह खलताचातुरीदीक्षितेन
प्रक्षेप्तव्यं शिरसि कुलिशं गान्दिनीनन्दनेन ॥८१॥
न चोदीयानपि सखि मम प्रेमगन्धो मुकुन्दे
क्रन्दन्तीं मां निजशुभगताख्यापनाय प्रतीहि ।
खेलद्वंशीवलयिनमनालोक्य तं वक्त्रबिम्बं
ध्वस्तालम्बा यदहमहह प्राणकीटं बिभर्मि ॥८२॥
आशापाशैः सखि नवनवैः कुर्वतो प्राणबन्धं
जात्या भीरुः कति पुनरहं वासराणि क्षयिष्ये ।
एते वृन्दावनविटपिनः स्मारयन्तो विलासान्
उत्फुल्लास्ते मम किल बलान्मर्म निर्मूलयन्ति ॥ ८३ ॥
सा विश्राम्यन्मनसिजधनुर्विभ्रमोद्बोधविद्या
चिल्लीवल्लिभ्रमिमधुरिमोद्दामसम्पद्भिरिष्टा ।
एतामार्त्तिं मम शमयिता स्मेरता सङ्कराङ्गी
प्रेमोत्तुङ्गः किमु मुरभिदो भङ्गुरापाङ्गभङ्गी ॥८४॥

कामं दूरे सहचरि वरीवर्त्ति यत् कंसवैरी
नेदं लोकोत्तरमपि विपद्दुर्दिनं मे दुनोति।
आशाकीलो हृदि किल धृतः प्राणरोधी तु यो मे
सोऽयं पीड़ां निविड़बड़वावह्निर्तीव्रस्तनोति॥ ८५॥
तत्र स्फीताधरमधुभरे शीतलोत्सङ्गसङ्गे
सौन्दर्य्योल्लसितवपुषि स्फारसौरभ्यपूरे।
नर्मारम्भस्खपुटितवचःकन्दले नन्दसूनौ
मोदिष्यन्ते मम सखि कदा हन्त पञ्चेन्द्रियाणि॥ ८६॥
भिन्दन्नक्ष्णोः किल कलुषतां श्यामलः श्यामलाभिः
लिम्पन्नौभिर्गिरिपरिसरं माधुरीणां छटाभिः।
आविर्भावी गुरुतरचमत्कारभाजः कदा मे
खेलन्नग्रे निखिलकरुणानन्दनो नन्दसूनुः॥ ८७॥
आनयायां मयि निजमुखालोकलक्ष्मीप्रसादं
खेदश्रेणीविरचितमनो लाघवायां विधेहि।
सेवाभाग्ये यदपि न विभो योग्यता मे तथापि
स्मारं स्मारं तव करुणतापूरमेवं ब्रवीमि॥ ८८॥
क्रीड़ातल्पे निहितवपुषः कल्पिते पुष्पजालैः
स्मित्वा स्मित्वा प्रणयरभसात् कुर्वतो नर्मभङ्गीः।
विन्यस्यन्ती तव किल मुखे पूगफालीं विधास्ये
कुञ्जद्रोण्यामहमिह कदा देव सेवाविनोदम्॥८९॥
इत्य नङ्गः पशुपरमणीमण्डलीनां विलापैः
भूयोभूयः करुणकरणैरद्य कीर्णान्तरस्य।

उद्यद्बाष्पा त्यजति परितो हृद्धकर्णौ कराभ्यां
दूरात् पान्थावलिरपि सखे यस्य सीमोपकण्ठम् ॥९०॥

चतुर्दशभिः कुलकम् ।

युक्तं श्यङ्कीकनकनिकरालिङ्गिताङ्गैस्तुरङ्गैः
दृष्ट्वा नन्दीश्वरतटभुवि स्यन्दनं ते मिलन्तम् ।
मामाशङ्क्य स्फुटमुपगतं सन्निधातव्यमारात्
धावन्तीभिस्तरलतरलं राधिकायाः सखीभिः ॥९१॥

गोपालीनामपि वपुरलङ्कारलीलां दधानो
येषां नव्यः किसलयगणो रागिणां माश्चकार ।
भ्राम्यद्भृङ्गावलिषु भवता तेषु मत्स्वामिषां मे
वृन्दं वृन्दावनविटपिषु प्राज्ञ विज्ञापनीयम् ॥९२॥

मत्ता वंशीनिनदमधर्भिस्तृणगा स्तर्णकानां
ता मुञ्चन्त्यः प्रणयमभितः सल्, रल्, ताल्यः ।
तासामुच्चैर्मम परिपठन् कामतो नामधेयं
क्षेमं पृच्छेस्त्वमथ निचये नौचकैर्नैचकीनाम् ॥९३॥

डिम्भव्यूहं हृतवति विधौ तत्तदाभस्तदाहं
स्तन्यं यासां मधुरमधयं वत्सरं वत्सलानाम् ।
वारंवारं मम नतिगणान् विज्ञ विज्ञापयेथा
नम्रस्तासां जठरपाण्डुपीमण्डलीनां पदेषु ॥९४॥

आमोदं मे मधुर दधिरे मामहंपूर्विकाभिः
दूरे यान्तं कुसुमितवनालोकनाय स्पृशन्तः ।
श्रीदामाद्याः प्रियसहचरा हन्त मन्नामतस्ते

पौनःपुन्यान्निपुण भवता तुङ्गमालिङ्गनीयाः ॥९५॥

हत्वा रङ्गस्थलभुवि मया घोरकंसं नृशंसं
काकून्मिश्रैः प्रपथमतकैर्गोकुलं प्रेषितस्य ।
आनम्रस्त्वं चरणयुगलं वल्लवेन्द्रस्य कामं
नामग्राहं मम गुणनिधे वन्दमानो दधीथाः ॥९६॥

तां वन्देथा मम सविनयं नामतः क्षामगात्रीम्
आक्रोशन्तीं खलनरपतिं साङ्गलीभङ्गमुच्चैः ।
अन्तश्चिन्ताविलुलितमुखीं हा मदेकप्रसूतिं
सर्वाङ्गैस्त्वं कलितवसुधालम्बमम्बां यशोदाम् ॥९७॥

या निश्वासैर्द्रुमवलयिनं हारवं मुञ्चमाना
खेदोदग्रं मम गुणकथामन्तरेणान्तरेण
क्षामीभूता क्षितिपतिपुरीवर्त्म विन्यस्तनेत्रा
वास्पोद्गारस्नपितवसना वासराणि क्षिपन्ती ॥९८॥

अक्रूराख्ये हृतवति हठाज्जीवनं मां निदाघे
विन्दन्तीनां मुहुरविरलाकारमन्तर्विदारम् ।
सद्यः शुष्यन्मुखवनरुहां वल्लवीदीर्घिकाणां
यासामासाम्पदमनुसृताः प्राणकूर्मी वसन्ति ॥९९॥

तासां बद्धाञ्जलिरनुसरैरन्तिकं यन्त्रितात्मा
शङ्काभिस्त्वं क्लमपरिणमद्विक्रियाणां प्रियाणाम् ।
दूत्यं कुर्वन्नपि गुणनिधे सापराधस्य यन्मे
भर्तुर्दोषादपि हि कुशला हन्त दुष्यन्ति भृत्याः ॥१००॥

मन्येपर्य्यस्तवकितभवद्वीक्षणेनाकुलानां

तुङ्गातङ्कोत्तरलितमनःकल्पनाजल्पभाजाम् ।
तिष्ठन्नासां पथि नयनयोर्निःसलाकं गतानां
सन्देशं मे लघु लघु सखे द्वारिणं व्याहरेथाः ॥१०१॥

त्रिभिः कुलकम् ।

यः कालिन्दीवनविहरणोद्दामकामः कलावान्
वृन्दारण्यान्नरपतिपुरं गान्दिनीयेन नीतः ।
कुर्वन् दूत्यं प्रणयसचिवस्तस्य गोपेन्द्रसूनोः
देवीनां वः सपदि सविधं लब्धवानुद्धवोऽस्मि ॥१०२॥

तापोमद्भश्वसितपटलीधूयमानाधरश्रीः
मुक्तक्रीड़ो धवलिमधुराहिण्डिरश्यामगण्डः ।
स्मारं स्मारं गुणपरिमलं हन्त वः क्लान्तचेताः
सोऽयं कान्तः किमपि सरलाः सुन्दरं संदिदेश ॥१०३॥

कच्चिद्गीतं न भजत मुकुन्दीनवेभ्यः पुरावत्
कल्याणं वः सरलहृदयाः कच्चिदुल्लालसीति ।
कच्चिद्यूयं स्मरथ सरसं तत्र चित्तानुकूलं
कुञ्जे कुञ्जे कृतमथ मया तत्र सेवाप्रपञ्चम् ॥१०४॥

नीतो यत्नाद्विविधविनयैर्बन्धनं बन्धुताभिः
कर्त्तुं भूयः किमपि कुशलं पत्तने वर्तमानः ।
ध्यायं ध्यायं नवनवमहं सौहृदं वः सुकण्ठ्यो
गाढ़ोत्कण्ठाक्रमपरवशं वासराणि क्षिपामि ॥१०५॥

ज्ञातं ज्ञातं विरमत चिरं त्वादृशीनां चरित्रं
याभ्यस्तीव्रा समजनि मनोभेदिनी वेदनेयम् ।

चक्रुर्वक्रं मयि किल तथा प्रेमपूरं भवत्यो
येनोद्भ्रान्तभ्रुकुटिमपि बलादुत्सहे नाद्य नेतुम् ॥१०६॥
रामोल्लासान्निशि निशि चिरं स्वप्नवृन्दापदेशात्
वृन्दारण्ये सुरभिणि मया सार्द्धमास्वादयन्ते ।
भूयोभूयस्तदपि च परित्यागिता दूषणं मे
शंसन्त्यः किं कुटिलहृदया न त्रपन्ते भवत्यः ॥१०७॥
ते ते चन्द्रावलि रसभरभ्रान्तनेत्रान्तमैत्री
वैचित्रीभिस्त्रिभुवनजये दत्तहस्तावलम्बाः
उत्सर्पन्तः स्मरणसरणीं हन्त ते भ्रूविलासाः
निःशङ्कं मे हृदयमधुना प्रांशवः स्रंसयन्ति ॥ १०८ ॥
तत्तत्तन्वि स्मरसि विपिने फुल्लशाखे विशाखे
कर्णश्रोणीं तव मुकुरहं वीक्ष्य हृद्यां मिलन्तीम् ।
कल्याणीं मे वितर कितवे हन्त चेलान्तराले
गुप्तां गुञ्जावलिमिति वदन् यद्विलक्षस्तदासम् ॥१०९॥
तां वैदग्धीपरिमलकथामुद्गिरन्ती सखीषु
क्षान्तिं दूरे चपयसि निजां हन्त धन्यासि धन्ये ।
ध्यायन्नाहं तमिह नगरे देवि लोकं विलोके
प्रीत्या यत्र व्यसनविधुरं वक्त्रमुन्मुद्रयामि ॥११०॥
गम्भीराणि प्रमदगुरुभिर्गूढनर्मप्रबन्धैः
माध्वीकानां मधुरिममहाकीर्तिविध्वंसनानि ।
सोत्कण्ठं मे स्मरति हृदयं श्यामले कोमलानि
प्रेमोत्तुङ्गस्मितपरिचितान्यद्य ते जल्पितानि ॥१११॥

पद्मे पद्मस्तुतमुखि लतासद्मनि च्छद्मनिद्रां
लब्धे लुब्धा मयि मुरलिकां हर्तुकामा त्वमासीः ।
धृत्वा पाणौ मुहुरथ मया कम्बुकं मुञ्चता ते
यत्प्रारब्धं किमपि तदिदं स्वान्तमन्तः पिनष्टि ॥ ११२॥

न्यस्ताङ्गी मे सुरभिणि भुजस्तम्भयोरन्तराले
भूयोभिस्त्वं रहसि ललिते केलिभिर्लीलितासि ।
अन्तश्चिन्ताविधुरमधुना पांशुपुञ्जे लुठन्ती
हन्त म्लाना रचयसि कथं प्राणसन्धारणानि ॥ ११३॥

यः सेवाभिर्मदमुदयिनीं तत्र भद्राङ्गि भद्रे
नीतस्ताभिर्निशि निशि मनःकर्षिणीभिस्त्वयासीत् ।
स प्रेष्ठस्ते नवपरिचयादिङ्गितस्थानभिज्ञैः
कृष्णस्तूष्णीं पुरपरिजनैः सेव्यमानो दुनोति ॥११४॥

सोढव्यं ते कथमपि बलाच्चक्षुषी मुद्रयित्वा
तीव्रोत्तापं हतमनसिजोद्दामविक्रान्तचक्रम् ।
द्वित्रैरेव प्रियसखि दिनैः सेव्यतां देवि शैव्ये
यास्यामि त्वत्प्रणयचटुलभ्रूयुगाडम्बराणाम् ॥११५॥

इत्थं तासामनुनयकलापेशलः कंसहारी
सन्देशं मे कुवलयदृशां कर्णपूरं विधाय ।
त्वं मच्चेतोभवनवडभीप्रौढपारावतीं तां
राधामन्तः क्लमकवलितां संभ्रमेणाजिहीथाः ॥११६॥

सा पल्यङ्के किसलयदलैः कल्पिते तत्र सुप्ता
गुप्तानीरस्तवकितदृशां चक्रवालैः सखीनाम् ।

दृष्टव्या ते कृशिमकलिताकण्ठनालोपकण्ठ-
स्पन्देनान्तर्वपुरनुमितप्राणसङ्गा वराङ्गी ॥११७॥
मालां मैत्रीविदुरमदुरःसङ्गसौरभ्यसभ्यां
वासन्तीभिर्विरचितमुखीं पञ्चवर्णां गृहाण ।
आरूढायाः परिणतिदशां तादृशीं सारसाक्ष्याः
साक्षादेतत्परिमलभृते कः प्रबोधे समर्थः ॥११८॥
माल्यामोदव्यतिकरवशैर्बोधितायाः सबाष्पं
नेत्रद्वन्द्वं दिशि दिशि मुहुर्विक्षिपन्त्या विलक्षम् ।
तस्याः प्रोद्यत्पुलककलिकादन्तुरायाः पुरस्तान्-
मन्दं मन्दं विनयमसृणस्त्वं विनम्रो जिह्रीयाः ॥११९॥
धृत्वा मालां किसलयततेरञ्चले न्यञ्चदङ्गी
भ्रूसंज्ञाभिः सपदि सचिवीकृत्य तस्या वयस्याः ।
दूत्यं स्वस्य प्रणयहृदयस्त्वं निवेद्यानवद्यं
धीमन् सद्यो मम कथयितुं वाचिकं प्रक्रमेथाः ॥१२०॥
यः सर्वस्मात्तव किल गुरुस्त्वञ्च यस्यासि धीरे
प्राणेभ्यस्त्वं प्रणयवसतिर्यस्य यः स्यात्तवापि ।
स त्वां धृत्वा मनसि विधुरे हन्त सन्धुक्षमाणः
कृष्णस्तृष्णाचटुलचटुलं देवि सन्देशमीति ॥१२१॥
सख्यु लक्ष्मीमुखि मतमुरीकृत्य दूरीभविष्णोः
धत्ते प्राणाननुपदविपद्विद्धचित्तापि साध्वी ।
सुक्षच्छाया मुकुरसुमनाः क्षोणिपृष्ठे लुठन्ती
बद्धापेक्षं विलसति गते माधवे माधवीयम् ॥१२२॥

नीते शोषं विरहदवथुना सर्वतो हृत्तड़ागे
जाने कण्ठस्थलविलुठितप्राणमीनाधि तन्वि ।
दूरे संप्रत्यविरलसुहृद्भावतैर्वारितोऽहं
कृष्णाम्भोधौ विलसदमृतालङ्कृतः किं करिष्ये ॥ १२३॥

नायं स्वप्नो निशि निशि भवेद्यत्तया सङ्गतिर्मे
पद्मामोदं विधुमुखि निराबाधमास्वादयामि ।
किन्तु ज्ञातं त्वयि विजयते काचिदाकृष्टिविद्या
यां संसन्ती हरसि तरसा मामदूराद्यदूनाम् ॥१२४॥

लब्धान्दोलः प्रणयरभसादेष ताम्रोष्ठि मग्नः
प्रध्यायन्तीं किमपि भवतीं याचते नन्दसूनुः ।
प्रेमोद्दामप्रमदपदवी साक्षिणी शैलकच्छे
द्रष्टव्या ते कथमपि न सा माधवी कुञ्जवीथी ॥१२५॥

विन्दन् वंशीस्फुरितवदनो नेत्रवीथीमकस्मात्
अन्तर्बाधाकवलितधियो धातुभिर्धूमलोऽहम् ।
क्रीड़ाकुञ्जे लुठितवपुषः श्रान्तमानन्दधारा-
कल्लोलैस्ते रहसि सहसोत्फुल्लमुल्लासयिष्ये ॥१२६॥

प्रेमोन्मादादहमधिवहन् बाष्पधारामकाण्डे
गण्डोत्सङ्गे स्मरपरिभवैः पाण्डुरे दत्तचुम्बः ।
कुर्वन् कण्ठग्रहविलसितं नन्दयिष्यामि सत्यं
सान्द्रेण त्वां सहचरि परिष्वङ्गरङ्गोत्सवेन ॥१२७॥

इत्थं तीव्रव्यसनजलधेः पारसीमामिवाशां
संदेशैर्मे धृतगरिमभिर्दर्शयन् दूरदर्शी ।

भूयः कुर्वन् कुवलयदृशां तत्र चित्तानुकूलं
कालं कञ्चित् त्वमतुलमते गोकुलान्तर्नयेथाः ॥ १२८ ॥

गोपेन्द्रस्य व्रजभुवि सखे केवलं यात्रया ते
नार्थः सिद्धेन्नाम बहुमतः किन्तु वाढं तवैव ।
प्रेमोल्लासं परिकलयतां गोपसीमन्तिनीनां
स्मर्तव्या मे सपदि भवता भारतीसारतेयम् ॥ १२९ ॥

गोष्ठक्रीड़ोल्लसितमनसो निर्व्यलीकानुरागात्
कुर्वाणस्य प्रथितमथुरामण्डले ताण्डवानि ।
भूयोरूपाश्रयपदसरोजन्मनः स्वामिनोऽयं
तस्योद्दामं वहतु हृदयानन्दपूरं प्रबन्धः ॥१३०॥

श्रीदामाद्यैः शिशुसहचरैर्बाल्यखेलामकार्षीत्
गोपालीभिः सह युवतिभीरासकेलिं चकार ।
दुष्टान् दैत्यानपि बहुतरान् हेलया यो जघान
स श्रीकृष्णस्तरुणकरुणस्तारयेद्वो भवाब्धिम् ॥१३१॥

इत्युद्धवसन्देशाख्यप्रबन्धः समाप्तः ।

---

## रामकृष्णविलोमकाव्यम् ।

तं भूसुतामुक्तिमुदारहासं
वन्दे यतो भव्यभवं दयाश्रीः ।

श्रीयादवं भव्यभतोयदेवं
संहारदा मुक्तिमुतासुभूतम् ॥ १ ॥
चिरं विरिञ्चिर्न चिरं विरिञ्चिः
साकारता सत्यसतारका सा ।
साकारता सत्यसतारका सा
चिरं विरिञ्चिर्न चिरं विरिञ्चिः ॥ २ ॥
तामसीत्यसति सत्यसीमता
माययाक्षमसमक्षयायमा ।
माययाक्षमसमक्षयायमा
तामसीत्यसति सत्यसीमता ॥ ३ ॥
का तापघ्नी तारकाद्या विपापा
वेधा विद्या नोष्णकृत्यं निवासे ।
सेवा नित्यं कृष्णनोद्या विधाते
पापाविद्याकारताघ्नी पताका ॥४॥
श्रीरामतो मध्यमतोऽद्रि येन
धीरोऽनिशं वश्यवतोवरादा ।
द्वारावती वश्यवशं निरोधी
नयेद्रितो मध्यमतोऽमरा श्रीः ॥ ५ ॥
कौशिके क्षितपसि क्षरव्रती
योऽददाद्धितनयस्वमातुरम् ।
रन्तुमास्वयन तद्विदादयो
तीव्ररक्षसि पतत्रिकेशिकौ ॥ ६ ॥

लंबाधरीकृत्यललंबनाये
त्वं याहि याहि त्वमागताशा।
श्वातामया रच हि याहि या त्वं
येना बलं यत्र रुरोध बालम्॥ ७ ॥
लंकायना नित्यगमा धवाशा
साकं तयानुन्नयमानुकारा।
राकानुमा यन्ननु यातकंशा
शावाधमामत्य निनाय कालम्॥ ८ ॥
गाधिजाध्वरवैरा ये तेऽतीता रचसा मताः।
तामसाचरतातीते ये रावैरध्वजाधिगाः॥९॥
तावदेव दया देवे यागे यावदवासना।
नासवादयया गेया वेदे यादवदेवता॥१०॥
सभास्वये भग्नमनेन चापं
कीनाशतानन्दरुषा शिलाशैः।
शैलाशिषारुङ्ननताशनाकी
पञ्चानने मग्नभयेस्वभासः॥ ११ ॥
न वेद यामचरभामसीतां
का तारका विष्णुजिते विवादे।
देवाविते जिष्णुविकारता का
तां सीमभारत्वम यादवेन॥ १२ ॥
तीव्रगोरन्वयवार्यो वैदेहीमनसो मतः।
तमसो न महीदेवैर्योवायन्वरगो व्रती॥१३॥

वेद या पद्मसदनं साधारावततार सा।
सारता तव राधा सा नन्दसद्मप यादवे ॥१४॥
शैवतो हननेऽरोधी यो देवेषु नृपो सवः।
वत्सपो नृषु वेदे यो धीरो नेन हतो वशैः ॥१५॥
न गोपगोसि चर मे पिनाके
नापो जने धर्मधनेन दानं।
नं दानने धर्मधने जपो ना
के नापि मे रचसि गोपगोनः ॥ १६ ॥
ततान दाम प्रमदा पदाय
नेमे रुचामस्वन सुन्दराक्षी।
चीरादसुं न स्वमचार मेने
यदापदामु प्रमदा न तातः॥ १७॥
तामितो मत्तसूत्रामा शापादेष किगानताम्।
तां नगाविषदे पाशा मात्रा सूत्तमतो मिता ॥१८॥
नासावधापचपाशाविनोदी
धीरो नुत्या सस्मितोऽद्याविगीत्या।
त्यागी विद्यातोऽस्मि सत्यानुरोधी
दीनो विश्वापात्रपधावसाना ॥१९॥
सभ्रावितं भिनुरगादगारं
यातधिराप स्वनघाजवंशः।
शवं जघान स्वपराधिता या
रंगादगार चभितं विभासम् ॥ २० ॥

तपातितारः स्वनयागतं मा
लोकापवादहितयं पिनाके ।
केनापि यं तद्विदवाप कालो
मातंगयान स्वरतातिपातः ॥ २१ ॥
अवेऽविद्या चित्रकुरङ्गमाला
पञ्चावटीनमं न रीचते वा ।
वाते चरी नमं नटीव चापं
लामागरं कुत्रचिदाविवेश ॥ २२ ॥
नेह वा चिपसि पचिकन्धरा
मालिनी स्वमतमत्त दूयते ।
ते यदूत्तम तमस्वनीलिमा
राधकं चिपसि पचिवाहने ॥ २३ ॥
वनान्तयान स्वणुवेदनासु
योषाम्तते ररापगजाविरोधी ।
धीरो विजागपरा रते म्तषा यो
सुनादवेणुस्वनया तनां वः ॥ २४ ॥
किंनु तोयरसापम्या न सेवा नियतेन वैः ।
वैनतेयनिवासेन पापं सारयतो नु किम् ॥२५॥
स न तातपञ्चा तेने स्वं शेनाविहितागसम् ।
संगताद्धि विनाशे स्वं नेतेह्वापततान सः ॥२६॥
कपितालविभागेन योषादो नुनयेन सः ।
सनयेन नु योषादो नगेभा त्रिलतापिकः ॥२७॥

ते सभा प्रकपिवर्णमालिका
नाल्पकप्रसरमभ्रकल्पिता ।
ताल्पिकभ्रमरसप्रकल्पना
कालिमार्णवपिक प्रभासते ॥ २८ ॥

रावणोऽचिपम न त्वपानते
नाल्पकभ्रमणमक्रमातुरम् ।
रंतुमाक्रमणमभ्रकल्पना
ते न पात्वनतपचिणो वराः ॥ २९ ॥

दैवे योगे सेवाहानं शङ्कानापे हङ्कायाने
नेशा कालं पेनाकाशं नंदावासे गेहो वेदैः ॥ ३० ॥

शंकावज्ञानुत्वनुज्ञावकाशं
याने नद्यामुद्याननेयाः ।
याने नद्यामुद्याननेया
शंकावज्ञानुत्वनुज्ञावकाशम् ॥ ३१ ॥

वादिदेश द्विषोतापं पम्याथो वनसेतवे
वेतसेन यथो पापं पन्तासोद्विशदे दिवा ॥ ३२ ॥

वायुजोनुमतो मेने संग्रामे रक्षितोऽक्षि वः ।
वक्षितो क्षिरमे ग्रासं नेमेऽतोमनुजो यवा ॥ ३३ ॥

क्षतायमा यत्र रघोरिताकु
रंकानुगानल्पवयोऽयनानि ।
निनाय सोऽनल्पनगानुकारं
क्षतारिघोर त्वयमायताक्षः ॥ ३४ ॥

तारके रिपुराप श्रीरुचा दारसुतान्वितः ।
तन्वितासु रदाचारु श्रीपरा पुरिके रता ॥ २५ ॥
हंसारङ्गागाराध्यासं याने मेया काराध्यासे ।
सेव्या रङ्का यामे नेया संध्या रागाकारं कालम् ॥ २६ ॥

गोदावरी ब्रह्मगिरेः प्रकाशात्
संप्रापिता प्रागुदधिं प्रयत्नात् ।
येनर्षिणा सोऽपि पुनः प्रतीम
मानेतुमद्रिं प्रभवेत्किमेताम् ॥ २७ ॥

एवं विलोमाक्षरकाव्यकर्त्तु-
र्भूयः सभायां समवेक्ष्य तज्ज्ञाः ।
जानन्त्विमां चित्रकवित्वसीमां
दैवज्ञसूर्याभिधसंप्रदिष्टाम् ॥ २८ ॥

इति श्रीदैवज्ञपण्डितसूर्यकविविरचितं
विलोमाक्षररामकृष्णकाव्यं समाप्तम् ।

---

# काशीस्तोत्रम् ।

---

सत्यज्ञानानन्दतीर्थं प्राप्तोऽहं यत्प्रसादतः ।
तं गुरुं परमं हंसं विश्वेश्वरमजं भजे ॥ १ ॥
विश्वेशं माधवं ढुंढिं दण्डपाणिञ्च भैरवम् ।
वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम् ॥ २ ॥

अखण्डः सच्चिदानन्दः शिवो देवो महेश्वरः ।
तस्य तां परमां शक्तिं काशीं स्तौमि सदुक्तिभिः ॥३॥
श्यामां षोड़शवार्षिकीं सकरुणां मर्त्तिं दधानां वरां
हस्ताभ्यामभयञ्च विश्वजननीं विद्येति या गीयते ।
या दृष्टा स्मरणं गतापि सततं या कीर्त्तिता संस्तुता
या स्पृष्टा प्रणता श्रुता प्रकुरुते नृणां परं मङ्गलम् ॥४॥
भूमिष्ठापि न यात्र भूस्त्रिदिवतोऽप्युच्चैरधस्थापि या
या बद्धा भुवि मुक्तिदा स्युरमृतं यस्यां मृता जन्तवः ।
या नित्यं त्रिजगत्पवित्रतटिनीतीरे सुरैः सेव्यते
सा काशी त्रिपुरारिराजनगरी पायादपायाज्जगत् ॥५॥

पूर्व्वजन्मशतकोटिसञ्चितं
पापराशिमतुलं विनाशयेत् ।
काशिका परपदप्रकाशिका
दर्शनश्रवणकीर्त्तनादिभिः ॥ ६ ॥

यः काशीं स्तौति मेधावी यः काशीं हृदि धारयेत् ।
तेन तप्तं तपस्तीव्रं तेनेष्टं क्रतुकोटिभिः ॥७॥
वाराणसीति काशीति महामन्त्रमिमं जपन् ।
यावज्जीवन् त्रिसंध्यं तु जन्तुर्जातु न जायते ॥८॥
यस्तु काशीति काशीति द्विस्त्रिर्जपति पुण्यवान् ।
अपि सर्वपवित्रेभ्यः स पवित्रतरो महान् ॥९॥
मुने न मे प्रियस्तादृङ्नीचितो मम पूजकः ।
यादृक् प्रियतरः सत्यङ्काशीस्तवनलालसः ॥१०॥

वरङ्काशीपुरीवासो मासोपवसनादिभिः।
विचित्रच्छत्रसुच्छायं राज्यं नान्यत्र कामये॥११॥

काशीवासी चेत्स्वपचः पुक्कसोऽपि
श्रेष्ठो राजन् मुक्तिकन्यावृतो यत्।
अन्यत्रस्थः सार्वभौमः स्वधर्मी-
न स्याच्छ्रेयान् गर्भवासैकयोग्यः॥१२॥

जड़ेषु सर्वेष्वपि मज्जमाने
ष्वियं चिदानन्दमयी न मज्जति।
स्वयं निमग्ना कथमुद्धरेत्परान्
लोके च वेदे च विचार्यमेतत्॥१३॥

सर्ववाङ्मनसातीतं भावाभावविवर्जितम्।
चिन्मात्रं यत्परं ब्रह्म पञ्चक्रोशात्मकं हि तत्॥१४॥
तदेतत्क्षेत्रमापूर्य्य स्थितं सर्वगमप्यहो।
अनुग्रहार्थं लोकानामिति वेदविदो विदुः॥१५॥
शम्भोः शक्तिरियं काशी तदभिन्ना परा चितिः।
शिवएव हि जानाति काशिकायाः परं सुखम्॥१६॥
शिवस्यापि परं सौख्यं काशिका वेत्ति तत्परा।
निर्विशेषा च शुद्धा च जड़ा सेति त्रिधा मता॥१७॥
चेत्ररूपा जड़ा काशी मोक्षयेत्सर्वदेहिनः
मूर्त्तिरूपा तु या काशी शुद्धा सा चिन्मयी सती॥१८॥
पूर्णरूपा स्वमाहात्म्यं स्वयमेव विचारयेत्।
निर्विशेषा तु मुक्तानां शिवस्य च परा गतिः॥१९॥

कोटिजन्मसहस्रेषु तपोध्यानसमाधिभिः ।
प्रसादितो शिवो येन स एवं वेत्ति काशिकाम् ॥२०॥

यस्याः प्रसादादहमेव शम्भुः
जानामि शम्भुं सकलात्मभूतम् ।
स्मरामि शम्भं प्रणवं शिवञ्च
शिवप्रियां तां प्रणमामि काशीम् ॥२१॥

प्रकाशयेत् याशु परात्मतत्त्वं
प्रकाशतेऽस्यामिति वाथ काशी ।
चिन्मात्ररूपापि च गीयते या
तां ब्रह्मविद्यां प्रणमामि काशीम् ॥२२॥

यस्यां वसन् जन्तुरुपैति धर्मं
भुक्तिं च विश्वं स्मरमार्थसङ्गम् ।
गङ्गां सुविद्यां परमाङ्गतिं च
सा काशिका मेऽस्तु, गतिर्मुमुक्षोः ॥२३॥

सर्वाणि तीर्थानि वसन्ति यस्यां
वेदाः सदेवाः मुनयश्च मुक्तौ ।
विभूषिता या परया द्यनद्या
सा काशिका मेऽस्तु, गतिर्मुमुक्षोः ॥२४॥

शवः शिवः स्यादशिवोऽपि यस्याम्
अभद्रमुक्तं मरणञ्च भद्रम् ।
दरिद्रयपि श्रीपतितुल्य आस्ते
तां काशिकां को न भजेत्सुबुद्धिः ॥२५॥

विरक्तियोगादिभवा हि विद्या
सुदुर्लभा नास्ति कलौ विमुक्तिः।
यस्यां मृतस्तां समुपैति जन्तुः
शिवप्रसादादिति निश्चितं हि ॥२६॥
अतः सदा सैव निषेवितव्या
मुमुक्षुभिः शङ्कर राजधानी।
स्वधर्मनिष्ठैः कलिकाल एका
ध्येया च वन्द्या परिकीर्तनीया ॥२७॥
ये पुण्यशीलाः परिकीर्त्तयन्ति
काशीं सदैव प्रणमन्ति भक्त्या।
तेषामहम्पादरजो बिभर्मि
शोचामि नित्यं दयया तदन्यान् ॥२८॥
वसन्ति पापा नहि काशिकायां
वसन्ति चेदत्र मृतिर्न जायते।
मृतिर्भवेच्चेन्नहि यातनाचयः
तथापि चान्ते परिमुच्यतेऽसौ ॥२९॥
आदौ काश्यां धर्ममार्गेण वासः
पापत्यागः काशिमाहात्म्यदृष्टिः।
देहस्नेहं पुत्रमित्रादि यस्य
सर्वं तुच्छं सोऽधिकारी महात्मा ॥३०॥
वासः काश्यां सज्जनानां प्रसङ्गो
गङ्गास्नानं पापकर्मोज्झितिश्च।

पुण्ये प्रीतिः स्वेच्छया लाभसौख्यं
दानं श्रद्धया न प्रतिग्राह्यमन्नम् ॥२१॥
अष्टावेते यस्य सन्त्येव योगा
योगाभ्यासैस्तस्य किङ्काशिकायाम् ।
एवं ज्ञात्वा यो वसेत् काशिकायां
सद्यो मुक्तोऽसौ भवेन्नैव चान्यः ॥२२

काश्यां कृतातिपापस्य दारुणा रुद्रयातना ।
अहो रुद्रपिशाचत्वं नरकेभ्योऽपि दुःसहम् ॥२३॥
तस्मात्पापं न कर्त्तव्यं मनागपि विभोः पुरे ।
जातं यत्तत्प्रमादेन प्रायश्चित्तेन नश्यति ॥२४॥
स्थापनं शिवलिङ्गादेः पञ्चक्रोशप्रदक्षिणा ।
स्नानं दानं दया खेदः प्रायश्चित्तं महत्स्मृतम् ॥२५॥
पापमेवहि कर्तव्यं मतिरस्ति यदीदृशी ।
सुखेनान्यत्र कर्तव्यं महीह्यस्ति महीयसी ॥२६॥
यथा कामातुरो जन्तुरेकां रक्षति मातरम् ।
तथा पापकृता काशी रक्षितव्या मुमुक्षुणा ॥२७॥
काश्यां मृतानां मुक्तिः स्यान्नवेति विवदन्ति ये ।
नरकं यान्ति ते पापाः काका गृध्रा भवन्त्यथ ॥२८॥
तस्मात्सर्वं परित्यज्य श्रोतव्याः काशिसत्कथाः ।
न विना श्रवणात्पुण्यं पापं वा वेत्ति कोऽपि हि ॥२९।
काश्यां वासः सतां सङ्गो गङ्गाम्भः शिवपूजनम् ।
ध्यानं नारायणस्यैतत्सारात्सारं विदुर्बुधाः ॥४०॥

कलौ विश्वेश्वरो देवः कलौ वाराणसी पुरी।
कलौ भागीरथी गङ्गा दानङ्कलियुगे महत् ॥४१॥
गङ्गा विश्वेश्वरः काशी जागर्ति त्रितयं यतः।
तत्र नैश्रेयसी लक्ष्मीर्लभ्यते चित्रमत्र किम् ॥४२॥
न विश्वेशसमं लिङ्गं न काशी सदृशी पुरी।
मणिकर्णिसमं तीर्थं नास्ति ब्रह्माण्डगोलके ॥४३॥
काश्यां लिङ्गान्यनेकानि काश्यां तीर्थान्यनेकशः।
तथापि सेव्यो विश्वेशः स्नातव्या मणिकर्णिका ॥४४॥
यथाभूमितले विप्रपूय: सन्ति सहस्रशः।
तथा काशी न मन्तव्या कापि लोकोत्तरात्त्वियम् ॥४५॥
अन्यानि मुक्तिक्षेत्राणि काशीप्राप्तिकराणि हि।
काशीं प्राप्य विमच्येत नान्यथातीर्थकोटिभिः ४६॥
तीर्थार्थं न वहिर्गच्छेद्देवार्थं वा कदाचन।
सर्वतीर्थानि देवाश्च वसन्त्यत्राविमुक्तके ॥४७॥
शशकैर्मशकैः काश्यां यत्पदं हेलयाप्यते।
तत्पदं नाप्यतेऽन्यत्र योगयुक्तरापि योगिभिः ॥४८॥
मध्यमेश्वरमारभ्य यावद्देहलिविघ्नपम्।
सूत्रं संस्थाप्य तद्दिक्षु भ्रामयेन्मण्डलाकृति ॥४९॥
तत्र या जायते रेखा तन्मध्ये क्षेत्रमुत्तमम्।
काशीति यद्विदुर्वेदास्तत्र मुक्तिः प्रतिष्ठिता ॥५०॥
पूर्वतो जाह्नवी पश्चात्पाशपाणिर्गणेश्वरः।
असीवरणयोर्मध्ये शुभा वाराणसी मता ॥५१॥

विश्वेश्वराच्चतुर्दिक्षु धनुःशतयुगोन्मितम् ।
अविमुक्तमिति प्रोक्तमन्तर्गृहमथो शृणु ॥५२॥
गोकर्णेशः पश्चिमे पूर्वतश्च
गङ्गामध्यश्चोत्तरे भूरिभूतः ।
ब्रह्मेशानो दक्षिणे संप्रदिष्टः
तत्तु प्रोक्तं भवनं विश्वभर्त्तुः ॥ ५३ ॥
इत्थं चतुर्विधं चैतं प्रशस्तश्चोत्तरोत्तरम् ।
पञ्चकोशात्मकं लिङ्गं यो वेद स परः शिवः ॥५४॥
य इदं काशिकास्तोत्रं भक्त्या सङ्कीर्त्तयेत्सदा ।
स सर्व्वपापनिर्मुक्तः सद्योमोक्षमवाप्नुयात् ॥५५॥
गुणानामेकदेशोऽयं काशिकायाः प्रकीर्त्तितः ।
तेन प्रीणातु भगवान् विश्वेशः काशिकाप्रियः ॥५६॥

इति श्रीपरमहंसपरिव्राजकाचार्य्य-श्रीरामकृष्णतीर्थपाद-
किङ्करशिष्य-श्रीसत्यज्ञानानन्दतीर्थयति-
विरचितं काशीस्तोत्रं
सम्पूर्णम् ।

---

## आत्मबोधः ।

तपोभिः क्षीणपापानां शान्तानां वीतरागिणाम् ।
मुमुक्षूणामपेक्ष्योऽयमात्मबोधो विधीयते ॥१॥

बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनम् ।
पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सिध्यति ॥२॥
अविरोधितया कर्म नाविद्यां विनिवर्तयेत् ।
विद्याविद्यां निहन्त्येव तेजस्तिमिरसङ्घवत् ॥३॥
परिच्छिन्न इवाज्ञानात्तन्नाशे सति केवलः ।
स्वयं प्रकाशते ह्यात्मा मेघापायेंऽशुमानिव ॥४॥
अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्विनिर्मलम् ।
कृत्वा ज्ञानं स्वयं नश्येज्जलं कतकरेणुवत् ॥५॥
संसारः स्वप्नतुल्यो हि रागद्वेषादिसङ्कुलः ।
स्वप्नकाले सत्यवद्भाति प्रबोधेऽसत्यवद्भवेत् ॥६॥
तावत्सत्यं जगद्भाति शुक्तिकारजतं यथा ।
यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयम् ॥७॥
सच्चिदात्मन्यनुस्यूते नित्ये विष्णौ प्रकल्पितः ।
व्यक्तयो विविधाः सर्वा हाटके कटकादिवत् ॥८॥
यथाकाशो हृषीकेशो नानोपाधिगतो विभुः ।
तद्भेदाद्भिन्नवद्भाति तन्नाशादेकवद्भवेत् ॥९॥
नानोपाधिवशादेवं जातिनामाश्रयादयः ।
आत्मन्यारोपितास्तोये रसवर्णादिभेदवत् ॥१०॥
पञ्चीकृतमहाभूतसम्भवं कर्मसञ्चितम् ।
शरीरं सुखदुःखानां भोगायतनमुच्यते ॥११॥
पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥१२॥

अनाद्यविद्या निर्वाच्या कारणोपाधिरुच्यते ।
उपाधित्रितयादन्यमात्मानमवधारयेत् ॥ १३ ॥
पञ्चकोशादियोगेन तत्तन्मयइव स्थितः ।
शुद्धात्मा नीलवस्त्रादियोगेन स्फटिको यथा ॥ १४ ॥
वपुस्तुषादिभिः कोशैर्युक्तं युक्त्यावघातनः ।
आत्मानमान्तरं शुद्धं विविच्यात्तण्डुलं यथा ॥ १५ ॥
सदा सर्वगतोऽप्यात्मा न सर्वत्रावभासते ।
बुद्धावेवावभासेत स्वच्छेषु प्रतिविम्बवत् ॥ १६ ॥
देहेन्द्रियमनोबुद्धिप्रकृतिभ्यो विलक्षणम् ।
तद्वृत्तिसाक्षिणं विद्यादात्मानं राजवत्सदा ॥ १७ ॥
व्यावृत्तेष्विन्द्रियेष्वात्मा व्यापारी वाविवेकिनाम् ।
दृश्यतेऽभ्रेष धावत्सु धावन्निव यथा शशी ॥ १८ ॥
आत्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः ।
स्वकीयार्थेषु वर्तन्ते सूर्यालोकं यथा जनाः ॥ १९ ॥
देहेन्द्रियगुणान् कर्माण्यमले सच्चिदात्मनि ।
अध्यस्यतेऽविवेकेन गगने नीलतादिवत् ॥ २० ॥
अज्ञानान्मानसोपाधेः कर्तृत्वादीनि चात्मनि ।
कल्प्यन्तेऽम्बुगते चन्द्रे चलनादिर्यथाम्भसः ॥ २१ ॥
रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्तते ।
सुषुप्तौ नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मनः ॥ २२ ॥
प्रकाशोऽर्कस्य तोयस्य शैत्यमग्नेर्यथोष्णता ।
स्वभावः सच्चिदानन्दनित्यनिर्मलतात्मनः ॥ २३ ॥

आत्मनः सच्चिदंशश्च बुद्धेर्वृत्तिरिति द्वयम्।
संयोज्य वा विवेकेन जानामीति प्रवर्तते ॥२४॥
आत्मनो विक्रिया नास्ति बुद्धेर्बोधो न जात्विति।
जीवः सर्वमलं ज्ञात्वा ज्ञाता द्रष्टेति मुह्यति ॥ २५॥
रज्जुसर्पवदात्मानं जोवो ज्ञात्वा भयं वहेत्।
नाहञ्जीवः परात्मेतिज्ञानश्चेन्निर्भयो भवेत् ॥२६॥
आत्मावभासयत्येको बद्ध्यादीनीन्द्रियाणि हि।
दीपो घटादिवत्स्वात्मा जडैस्तैर्नावभास्यते ॥२७॥
स्वबोधे नान्यबोधेच्छा बोधरूपतयात्मनः।
न दीपस्यान्यदीपेच्छा यथा स्वात्मप्रकाशने ॥ २८॥
निषिध्य निखिलोपाधीन्नेति नेतीति वाक्यतः।
विद्यादैक्यं महावाक्यैः जीवात्मपरमात्मनोः ॥२९॥
आविद्यकं शरीरादि दृश्यं बुद्बुदवत् क्षरम्।
एतद्विलक्षणं विद्यादहं ब्रह्मेति निर्मलम् ॥३०॥
देहान्यत्वान्न मे जन्मजराकार्श्यलयादयः।
शब्दादिविषयैः सङ्गो निरिन्द्रियतया न च ॥३१॥
अमनस्त्वान्नमे दुःखरागद्वेषभयादयः।
अप्राणोह्यमनाः शुभ्रइत्यादि श्रुतिशासनात् ॥३२॥
निर्गुणो निष्क्रियो नित्यो निर्विकल्पो निरञ्जनः।
निर्विकारो निराकारो नित्यमुक्तोऽस्मि निर्मलः ॥३३॥
अहमाकाशवत्सर्वं बहिरन्तर्गतोऽच्युतः।
सदा सर्वसमः शुद्धो निःसङ्गो निर्मलोऽचलः ॥३४॥

नित्यशुद्धविमुक्तैकमखण्डानन्दमद्वयम् ।
सत्यं ज्ञानमनन्तं यत्परं ब्रह्माहमेव तत् ॥ ३५ ॥
एवं निरन्तरं कृत्वा ब्रह्मैवास्मीति वासना ।
हरत्यविद्याविक्षेपान् रोगानिव रसायनम् ॥ ३६ ॥
विविक्तदेशे आसीनो विरागो विजितेन्द्रियः ।
भावयेदेतमात्मानं तमनन्तमनन्यधीः ॥ ३७ ॥
आत्मन्येवाखिलं दृश्यं प्रविलाप्य धिया सुधीः ।
भावयेदेकमात्मानं निर्मलाकाशवत्सदा ॥ ३८ ॥
रूपवर्णादिकं सर्वं विहाय परमार्थवित् ।
परिपूर्णचिदानन्दस्वरूपेणावतिष्ठति ॥ ३९ ॥
ज्ञातृज्ञानज्ञेयभेदः परात्मनि न विद्यते ।
चिदानन्दैकरूपत्वाद्दीप्यते स्वयमेव हि ॥ ४० ॥
एवमात्मारणौ ध्यानमथने सततं कृते ।
उदितावगतिर्ज्वाला सर्वाज्ञानेन्धनं दहेत् ॥ ४१ ॥
अरुणेनैव बोधेन पूर्वं सतमसे हृते ।
तत आविर्भवेदात्मा स्वयमेवांशुमानिव ॥ ४२ ॥
आत्मा तु सततं प्राप्तोऽप्यप्राप्तवदविद्यया ।
तन्नाशे प्राप्तवद्भाति स्वकण्ठाभरणं यथा ॥ ४३ ॥
स्थाणौ पुरुषवद्भ्रान्त्या कृता ब्रह्मणि जीवता ।
जीवस्य तात्त्विके रूपे तस्मिन् दृष्टे निवर्त्तते ॥ ४४ ॥
तत्त्वस्वरूपानुभवादुत्पन्नं ज्ञानमञ्जसा ।
अहं ममेति चाज्ञानं वाधते दिग्भ्रमादिवत् ॥ ४५ ॥

सम्यग्विज्ञानवान्योगी स्वात्मन्येवाखिलञ्जगत् ।
एकं च सर्वमात्मानमीक्षते ज्ञानचक्षुषा ॥ ४६ ॥
आत्मैवेदं जगत् सर्वमात्मनोऽन्यन् न किञ्चन ।
मृदो यद्वत् घटादीनि स्वात्मानं सर्वमीक्षते ॥ ४७ ॥
जीवन्मुक्तिस्तु तद्विद्वान् पूर्वोपाधिगुणांस्त्यजेत् ।
सच्चिदानन्दरूपत्वाद्भजेद्भ्रमरकीटवत् ॥ ४८ ॥
तीर्त्वा मोहार्णवं हत्वा रागद्वेषादिराक्षसान् ।
योगी सर्वसमायुक्त आत्मारामो विराजते ॥ ४९ ॥
बाह्यानित्यसुखासक्तिं हित्वात्मसुखनिर्वृतः ।
घटस्थदीपवत् स्वच्छमन्तरेव प्रकाशते ॥ ५० ॥
उपाधिस्थोऽपि तद्धर्मैर्निर्लिप्तो व्योमवन्मुनिः ।
सर्वविन्मूढवत्तिष्ठेदसक्तो वायुवच्चरेत् ॥ ५१ ॥
उपाधिविलयाद्विष्णौ निर्विशेषं विशेन्मुनिः ।
जले जलं वियद्व्योम्नि तेजस्तेजसि वा यथा ॥ ५२ ॥
यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम् ।
यज्ज्ञानान्नापरं ज्ञानं तद्ब्रह्मेत्यवधारयेत् ॥ ५३ ॥
यद्दृष्ट्वा नापरं दृश्यं यद्भूत्वा न पुनर्भवः ।
तज्ज्ञात्वा नापरं ज्ञेयं तद्ब्रह्मेत्यवधारयेत् ॥ ५४ ॥
तिर्यगूर्ध्वमधःपूर्णं सच्चिदानन्दमद्वयम् ।
अनन्तं नित्यमेकं यत् तत् ब्रह्मेत्यवधारयेत् ॥ ५५ ॥
अतद्व्यावृत्तिरूपेण वेदान्तैर्लक्ष्यतेऽद्वयम् ।
अखण्डानन्दमेकं यत् तद्ब्रह्मेत्यवधारयेत् ॥ ५६ ॥

अखण्डानन्दरूपस्य तस्यानन्दलवाश्रिताः ।
ब्रह्माद्यास्तारतम्येन भवन्त्यानन्दिनो लवाः ॥५७॥
तद्युक्तमखिलं वस्तु व्यवहारस्तदन्वितः ।
तस्मात् सर्वगतं ब्रह्म क्षीरे सर्पिरिवाखिले ॥५८॥
अनण्वस्थूलमह्रस्वमदीर्घमजमव्ययम् ।
अरूपगुणवर्णाख्यं तत् ब्रह्मेत्यवधारयेत् ॥५९॥
यद्भासा भास्यतेऽर्कादिः भास्यैर्यत्तु न भास्यते ।
येन सर्वमिदं भाति तद्ब्रह्मेत्यवधारयेत् ॥६०॥
स्वयमन्तर्बहिर्व्याप्य भासयेन्निखिलं जगत् ।
ब्रह्म प्रकाशते वह्निप्रतप्तायसपिण्डवत् ॥६१॥
जगद्विलक्षणं ब्रह्म ब्रह्मणोऽन्यन् न किञ्चन ।
ब्रह्मान्यद्भासते मिथ्या यथा मरुमरीचिका ॥६२॥
दृश्यते श्रूयते यद्यद्ब्रह्मणोऽन्यन्न विद्यते ।
तत्त्वज्ञानाच्च तद्ब्रह्म सच्चिदानन्दमद्वयम् ॥६३॥
सर्व्वगं सच्चिदात्मानं ज्ञानचक्षुर्निरीक्ष्यते ।
अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत् ॥६४॥
श्रवणादिभिरुद्दीप्तो ज्ञानाग्निपरितापितः ।
जीवः सर्व्वमलान् मुक्तः स्वर्णवद्द्योतते स्वयम् ॥६५॥
हृदाकाशोदितो ह्यात्मा बोधभानुस्तमोपहृत् ।
सर्व्वव्यापी सर्व्वधारी भाति सर्व्वं प्रकाशते ॥६६॥

दिग्देशकालाद्यनपेक्ष्य सर्व्वगं
शीतादिहृन्नित्यसुखं निरञ्जनम् ।

यः स्वात्मतीर्थं भजते विनिष्क्रियः
स सर्ववित्सर्वगतोऽमृतो भवेत् ॥६८॥

इति श्रीमत् परमहंसपरिव्राजकाचार्य्य श्रीमत्
शङ्कराचार्य्यविरचितमात्मबोधप्रकरणं
सम्पूर्णम्।

---

## भक्तचामरस्तोत्रम्।

कपर्दगौरजाङ्कवीतरङ्गफेणचन्द्रिका
सरत्नभोगिकुण्डलोल्लसत्कपोलमण्डली।
सपातुखण्डितारितुण्डमण्डिताजिमण्डलः
सुरासुरेन्द्रवृन्दभाललोलमालभारिपात् ॥१॥
समस्तभावभावनाफलप्रदोवृषध्वजः
करीन्द्रचर्मचेलभृत् सदष्टभूतिमूर्तिमान्।
सपातुचित्रभोगिमुण्डमाल्यनीलकण्ठवान्
दिगम्बरोगिरीन्द्रजातपःफलप्रदोहरः ॥२॥
मुकुन्दशङ्खभासिदन्तमन्दिरारविन्दहा
सनन्दितामरेन्द्रवृन्दवन्दितोमहेश्वरः।
सपातु सेवके कृपां करोतु पार्वतीपतिः
वृषेन्द्रवाहनोविनीतमेघवाहनः प्रभुः ॥३॥
सदासनन्दनादिभिर्विभाव्यमानधामवान्
प्रदोषताण्डवेनटन्मृदङ्गमङ्गलं ध्वनन्।

सपातु भक्तपालकः प्रभाकरोविभाकरः
प्रतिक्षणं विभावरीदिवासुखप्रदोहरः ॥४॥
स्वभक्तभीभयङ्करः कुतश्चिदप्रमेयतः
शिवेतिमन्त्रमन्त्रणात् सतां विनिर्गतं भयम् ।
सपातुलोचनत्रयोविभासितो हरो विभुः ।
सपातुभक्तचामरैः सुवीजितश्चचामरैः ॥५॥
समुद्रिताग्निलोचनस्त्रिलोचनप्रवृद्धये
वनाय वामरार्चितोगिरीन्द्रकन्यकासजूः ।
सपातुभोगिकङ्कणः सरीसृपाङ्गदः शिवो
विमुक्तकञ्चुकाहिसूत्रसत्कृतोपवीतवान् ॥६॥
कपोलम्लापितप्रियो नमःशिवाय जल्पतेऽ-
प्यनल्पकामदायकोऽप्यकिञ्चनो निरञ्जनः ।
सपातुभुक्तिमुक्तिदोजगद्विलक्षकीर्तनो
वसद्गिरीन्द्रकन्यया परार्थसाधने रतः ॥७॥
गणेशकार्त्तिकेयसूनुपार्वतीप्रियस्वदो
गृहाश्रमं विडम्बयन्दिनेदिने सुयोगिराट् ।
सपातुशम्भुरार्ययावसद्विनीतभार्यया
निवेद्यमानमर्चनं क्षणं क्षणं नवं नवम् ॥८॥
कृपांकुरात्रबालहृक्कटाक्षमार्गभासतो
विभर्तिभारतीश्वरः श्रियामपीश्वरः परः ।
सपातु पार्वतीपतिर्हिरूढ़िरिष्यते बुधै-
र्द्विधाहरिर्हरः सदाप्रतीतिमात्रभेदतः ॥९॥

मुनीन्द्रनारदादिवृन्दगीयमानकीर्तिमान्
गिरीन्द्रजापुरस्सरोऽप्सरोभिरीडितः शिवः ।
सपातु भूतभव्यकालिकालकालनापरः
परारिरूढनामवान्पुनाति त्वै पुनःपुनः ॥१०॥
स्फुरत्प्रवप्रदामुखेविमुग्धचन्द्रतारके
मणिप्रदीपमन्दिरे नटन्मनोगतं नयन् ।
सपातुपालनापरोमहेश्वरश्चकीर्त्यते
विशेषतश्च निस्पृहः परार्थभूतिमूर्तिमान् ॥११॥
कृपालुतादिदिस्थिताविभाविताचसूरिभि-
र्यदर्चिकोणकेकरोरसाम्बरेऽरुणप्रभाम् ।
सपातुवैबिभर्तियः प्रमोदतां महेश्वरः
कुटुम्बिनीञ्च पार्वतींगणेशनन्दनानुगाम् ॥१२॥
यदङ्घ्रिसम्मरेणुनाविधेस्तविस्त्रटक्कथा
चतुर्मुखाच्चतुर्भुजाच्चिआर्चनं व्यभावयन् ।
सपातुपञ्चवक्त्रवान् सहस्रनेत्रपूजितः
पिपर्त्तियो जगत्त्रयं गुणत्रयातिगो हरः ॥१३॥
सचन्दनाम्बुसीकरप्रकीर्णभक्तचामरैः
सुवीजितोच्चताम्बुमाल्यबिल्वपत्रकाञ्चनैः ।
सपातु योऽर्चितो हरो हरत्यनल्पसंज्वर
यदर्चनाम्बुलोचने निषिक्तमध्यतामपि ॥१४॥
असद्गुहाश्रवीक्षितुं नयक्कुर्वन्ति किम्पनः
बिभेति वै परेतराड्यदङ्गभस्मधारणात् ।

सपातु पार्वतीपितुः पितॄन् पिपर्ति नप्तृदः
सुपात्रपौत्रसम्पदाजगद्दिभर्ति यश्च सः ॥१५॥
बभुक्षते पिपासते च लुब्धकाय बिल्वको
परिद्युपावसज्जनाय वै मृगेन्द्रभीतितः ।
सपातु शम्भरंघ्रिशात्नटत् सुविल्वपत्रतो-
ऽर्चनान्निजास्पदं ददौ निशासु मूत्रसेचनात् ॥१६॥
मुनिःस्वनमृदङ्गमेघसंभ्रमित्ववाहने
निरूढनन्दनं निरीक्ष्य मोदमुस्मितानानाम् ।
सपातु पार्वतीहरोगजास्यपुष्करं सुज-
नखेन्दुसम्पदाकरेणपातिनन्दनेक्षणाम् ॥२७॥
सुरासुरैर्धरामरैर्धराधिपैःसुपार्श्वगैः
ध्वनन् मृदङ्गडिण्डिमादिधण्टयानिवेद्यते ।
सपातु पार्वतीश्वरोतिदीनमीनकाकुवाक्
प्रपन्नमश्चतिप्रभुः शृणोतिसत्वरं वसः ॥१८॥
सितेन्दुविम्बिताकृतिं निजांनिरीक्ष्य पार्वतीं
विशङ्कमानभामिनीं परस्त्रियं चकासतीम् ।
सपातु मञ्जुवाक्शतप्रयाससहासवीक्षितैः
शुचिस्मिताचकारयोविशुद्धबोधदानतः ॥१९॥
शिवस्य निन्दकोऽपि सन् शिवोभवन् पुरःसरन्
करे गृहीतुमुद्यतस्तपोवने च पार्वतीम् ।
स पातु रुक्षया गिरा तिरस्कृतोऽप्यधोमुखीं
ह्रिया नकिञ्चनोत्तरां प्रमोदपूरितान्तराम् ॥२०॥

सद्योनमःशिवाययोजपेत्त्रिवर्गसम्पदा
स युज्यते च भुज्यते भयैर्वियुज्यते पुनः।
स पातु सप्रमोदमन्नमूर्तिरीश्वरो हरः
ददातिसद्यशोम्बरं सुगन्धिभोजनं किमु॥२१॥
सुधांशुबिम्बनामकैकपालमण्डलेजलैः
चयेनलाञ्छनाख्यबिम्बमञ्जयन्त्यमत्यकम्।
सपातुभातकौतुकीकरोति सत्यमेत्यवृ-
गुणैर्निजैश्चकीर्त्तितैर्यथाकथञ्चिदर्चितः॥२२॥
सुपार्वतीतपःफलेनयस्यनामभूयते
प्रपद्यतेचपार्वतीनिजं तपोमहत् फलम्।
स पातु लोकमातरं जगत्पितापुरातनीं
पुरातनो बिभर्त्ति वै कृपावतीं कृपाकरः॥२३॥
नवोदयारुणेन्दुविम्बवद्विभासिताननां
प्रभाकरप्रभातभापरिस्फुटाङ्गनाङ्गिनीम्।
सपातु पार्वतीं वहन्विवाहमण्डपे भ्रमन्
प्रदक्षिणेनसर्वतोहरो गिरीन्द्रसद्मनि॥२४॥
सुमृत्युजित्पतिव्रतासुपुत्रिणी सुमङ्गली
भवेतिसत्प्रयाच्यमानहर्षगर्वाग्भिरादृताम्।
सपातु केकसद्मनिस्तुतोगिरीन्द्रजामुदा
हसेनकोर्वशीतिलोत्तमासखीजनैश्चताम्॥२५॥
अकर्मकोपिकर्मभिः सयोज्यते सखीजनैः
प्रहेलिकापरैरलं विलम्बितोत्तरैः चरैः।

सपातुकौतुकेगृहेप्यजयंसङ्गतेपुभिः
शुचिस्मितैः शुचिस्मितः शुचिस्मितेश्वरीश्वरः ॥२६॥
विघट्टनं सरावकस्यकोमलैकमुष्टिना
प्यकारिपार्वतीपतिः सखीजनैः कुतूहलात् ।
सपातुकौतुकेगृहेगृहीतवामभागवान्
सुमेनकाद्रिराट्प्रभूतभूतिभूषितास्त्रिया ॥२७॥
सदात्मनोपिनिन्दयो कृतत्वलोप्यपर्णया
विभावितो विभावरीशशेखरस्तपोव्रतैः ।
सपातुयोनिरञ्जनोनवर्त्ततेनहीयते
प्रवर्ततेचसर्वतः समः समस्तदः शिवः ॥२८॥
प्रियांप्रियः प्रियांप्रियो विभावितोविभावितो
विभाविताद्यदम्पतीस्वभावकौतुकीभवः ।
सपातुकाश्यपीम्टतामपत्यकन्यशावृतः
प्रभोः प्रभूततारकारिभाविपुत्रलिप्सया ॥२९॥
गजास्यपुष्करामृतं पिबंश्च पञ्चभिर्मुखै-
रतुष्टिमाशुदन्हरः शुचिस्मितास्यवीचयः ।
सपातुभूषणेन्दुगाकृतिं प्रमातुमीप्सया
विलोलवक्रपुष्करं गजाननं जहासयः ॥३०॥
सहस्रशारिशासिनीहविभुजांचमध्यगां
शुचौप्रवर्षदम्बरांवभारभूमिभृत्सुताम् ।
सपातुभाविभव्यभूतभूतिसत्यताद्यधा
समस्तिरम्बरीश्वरोविहारकौतुकीभवः ॥३१॥

सुरासुरातितापिभिःप्रमथ्यमन्दराद्रिणा
हतेधनेम्बुधेःप्रकोपकालकूटजाद्भयात्।
सपातुगोपयांचकार नीलकण्ठभूषणः
सुरासुराद्रिमुद्धृतानिपीयकालकूटकम् ॥२२॥
विचित्रभोगिरत्नबद्धजटाविलम्बिजाह्नवी-
तरङ्गमौलिवेष्टनोपरीन्दुसुन्दराकृतिः।
सपातुभूधरात्मजाहृतार्द्धवामभागवान्
सदुक्षकैःककुद्वृषेन्द्रवाहनोदयानिधिः ॥२३॥
सखङ्गशोणपन्नगद्विलोललोचनप्रभा
वलिप्रपाण्डुरोल्लसत्कपोललोलकुण्डली।
सपातुपार्वतीपतिर्महोत्सवे प्रमोदको
गजाननस्य जन्मनिप्रकामपूरकोहरः ॥२४॥
भवायतेभवायतेऽगुणाय सद्गुणायते
सकर्मणेप्यकर्मणे परोक्षवीक्षणायते।
नमोस्तुशम्भवे शिवप्रकामपूरणायते
प्रसीदतामहेश्वरी तपोवशीभवन्भवः ॥२५॥
समक्षमैकपंक्तिकोक्ष्यप्रकल्पकद्रुमे
फलप्रसूनगन्धवाहचुम्बिमञ्जरीवृते।
नमो वनेविहारिणे हरायहर्म्यवासिने
मरुत्वदादिदेववृन्दगीतकीर्त्तये नमः ॥२६॥
मदुत्तमोनपातकी त्वदुत्तमो नपापहा
भुवःस्थलज्जनस्यवै त्वमेवसम्यगाश्रयः।

विधीयतां निजोचितं महेश्वरोसिसर्वदो
दयानिधे क्षमस्व मेऽपराधमान्तरं बहिः ॥२७॥
निषेव्यभक्तचामरैर्नियम्यकीर्तयन्ति ये
हृदाभिवाञ्छितप्रवन्दनीयपादपल्लवम् ।
गणेशकार्त्तिकेयमातृसत्तमं तु मानवीं
व्यथां न जातु जानते नमस्तुतेऽस्तु शम्भवे ॥२८॥
स्वकीयविम्बिताकृतिं स्वकीयभालभूषणं
विलोक्यविभ्रमद्भुवौ विशङ्कितौ शुचिस्मितौ ।
प्रसीदतां शुचिस्मिताश्चवीक्षणौ महेश्वरौ
नटाविवातिसुन्दरौ सुपर्वणां मनोहरौ ॥२९॥
सुखप्रकाशतो मयानुमीयतेन मत्कृतौ
नदीश्वरौ नमस्कृतां गतौ नमस्करोमि तौ ।
अभिन्नचित्तरूपिणोर्वपुर्भवेन कर्हिचित्
न मेघकक्षमस्त्वमेपराधमीशभाविनम् ॥४०॥
अविघ्नतादिकारणैकदन्तविष्णुमूर्त्तिना
सुतेन तारकारिणाविनीतभार्यया यया ।
गृहाश्रमीवयोगतारतम्यमत्युजित्तमो
नुकम्पतो प्रसीदतान्नमोऽस्तु शङ्कराय ते ॥४१॥
क्षमासुमूर्त्तिरीशते भवच्चेदिवौकसो
नहिस्थिरत्वमाप्नुयुस्तदेतरस्य का कथा ।
मरीचिमञ्जरीहृताय चन्द्रमूर्त्तये नमः
प्रभाकराय ते नमो निशादिवातमोनुदे ॥४२॥

तवैवतोयमूर्त्तितो जगत्त्रयस्य जीवनं
तवैववायुमूर्त्तितो जगत्त्रयस्य चालनम्।
तवैववह्निमूर्त्तितो जगत्त्रयस्य जाड्यता
विलीयते गिरीश ते नमो नमो नमोऽस्तु ते॥४३॥
त्वयैवयस्त्वकारिणाम्बुदोऽपि जीवनप्रदः
सजन्यतेभिवर्षतिच्चमांतुषारविन्दुभिः।
ततो हि जीवजातयः समुद्भवन्ति चान्नभृत्
चकासतेभरस्नमोऽस्तुशम्भवे दयालवे॥४४॥
वियत्तु मूर्तिरीशतेचवर्ण्यते न केनचित्
चराचरं जगच्च यत्र कल्प्यते स्वयम्भुवा।
समुल्लसन्ति यद्गुणा मुखेमुखे शरीरिणां
श्रुतिप्रमाणतो मया विकल्प्यतेनकल्पना॥४५॥
प्रभासते क्वचिच्च यः क्वचिच्च न प्रभासते
सुचक्षुषामपि प्रभाति कस्यचिद्विशेषतः।
महीश्वरश्चराचरे जगत्यजस्रमेकधा-
प्यनेकधान्तरंवहिःप्रमोदतां हृदम्बुजे॥४६॥
किमीहसेकिमीहसेनुजल्पतीवशङ्करो
दरिद्रताभियां भयं समीहसे समीहसे।
कृपालुताद्रूपार्वतीवशम्बदोनुगम्यते
पराधिभिः पराधिभिः प्रसीदतान्नमोऽस्तु ते॥४७॥

इति श्रीशाकद्वीपीय-नियमधरमिश्रविरचितं
भक्तचामरस्तोत्रं सम्पूर्णम्।

# रावणकृतशिवताण्डवस्तवः ।

जटाकटाहसंभ्रमभ्रमन्निलिम्पनिर्झरी
विलोलवीचिवल्लरीविराजमानमूर्द्धनि ।
धगद्धगद्धगज्ज्वलल्ललाटपट्टपावके
किशोरचन्द्रशेखरे रतिः प्रतिक्षणं मम ॥१॥
धराधरेन्द्रनन्दिनीविलासबन्धुबन्धुर-
स्फुरद्दिगन्तसन्ततिप्रमोदमानमानसे ।
कृपाकटाक्षधोरणीनिरुद्धदुर्द्धरापदि
क्वचिद्दिगम्बरे मनो विनोदमस्तु वस्तुनि ॥२॥
जटाभुजङ्गपिङ्गलस्फुरत्फणामणिप्रभा
कदम्बकुङ्कुमद्रवप्रलिप्तदिग्वधूमुखे ।
मदान्धसिन्धुरासुरत्वगुत्तरीयमेदुरे
मनोविनोदमद्भुतं बिभर्तु भूतभर्तरि ॥३॥
ललाटचत्वरज्वलद्धनञ्जयस्फुलिङ्गया
निपीतपञ्चसायकं नमन्निलिम्पनायकम् ।
सुधामयूखरेखयाविराजमानशेखरं
महःकपालिसम्पदे सरिज्जटालमस्तु नः ॥४॥
सहस्रलोचनप्रभृत्यशेषलेखशेखर
प्रसूनधूलिधोरणी विधूसराङ्घ्रिपीठभूः ।
भुजङ्गराजमालयानिबद्धजाटजूटकः
श्रियैचिरायजायतां चकोरबन्धुशेखरः ॥५॥

करालभालपट्टिकाधगद्धगद्धगज्ज्वल
द्धनञ्जयाहुतीकृतप्रचण्डपञ्चसायके ।
धराधरेन्द्रनन्दिनीकुचाग्रचित्रपत्रक
प्रकल्पनैकशिल्पिनि त्रिलोचने रतिर्मम ॥६॥
नवीनमेघमण्डलीनिरुद्धदुर्धरस्फुरत्
कुहूनिशीथिनीतमप्रबद्धबन्धकन्धरः ।
निलिम्पनिर्झरीधरस्तनोतु कृत्तिसुन्दरः
कलानिधानबन्धुरः श्रियं जगद्धुरन्धरः ॥७॥
प्रफुल्लनीलपङ्कजप्रपञ्चकालिमप्रभा
विलम्बिकण्ठकन्दलीरुचिप्रबद्धकन्धरम् ।
स्मरच्छिदं पुरच्छिदं भवच्छिदं मखच्छिदं
गजच्छिदान्धकच्छिदं तमन्तकच्छिदं भजे ॥८॥
अखर्वसर्वमङ्गलाकलाकदम्बमञ्जरी
सरत्प्रवाहमाधरीविजृम्भणामधुव्रतम् ।
स्मरान्तकं पुरान्तकं भवान्तकं मखान्तकं
गजान्तकान्धकान्तकं तमन्तकान्तकं भजे ॥९॥
जयत्यदभ्रविभ्रमद्भुजङ्गमश्वसद्विनि-
र्गमत्क्रमस्फुरत्करालभालहव्यवाट् ज्वलन् ।
धिमिं धिमिं धिमिं ध्वनन्मृदङ्गतुङ्गमङ्गल-
ध्वनिक्रमप्रवर्त्तितप्रचण्डताण्डवः शिवः ॥१०॥
दृषद्विचित्रतल्पयोर्भुजङ्गमौक्तिकस्रजो-
र्गरिष्ठरत्नलोष्ठयोः सुहृद्विपक्षपक्षयोः ।
तृणारविन्दचक्षुषोः प्रजामहीमहेन्द्रयोः

समप्रवृत्तिकः कदासदाशिवं भजाम्यहम् ॥११॥
कदानिलिम्पनिर्झरीनिकुञ्जकोटरेवसन्
विमुक्तदुर्मतिः सदाशिरस्थमञ्जलिं वहन् ।
विलोललोललोचनाललामभाललग्नकं
शिवेतिमन्त्रमुच्चरन्सदासुखीभवाम्यहम् ॥१२॥
निलिम्पनाथनागरीकदम्बमौलिमल्लिका
निगुम्फनिर्भरक्षरन्मधूष्णिकामनोहरम् ।
तनोतुनोमनोमुदंविनोदनीमहर्निशं
परश्रियः परंपदन्तदङ्गजत्विषांचयः ॥१३॥
प्रचण्डवाडवानलप्रभाशुभप्रचारणी
महाष्टसिद्धिकामिनीजनावहूतजल्पना ।
विभक्तवामलोचनाविवाहकालिकध्वनिः
शिवेतिमन्त्रभूषणाजगज्जयायजायताम् ॥१४॥
नमामि पार्वतीपतिं नमामि जाह्नवीपतिं
नमामि भक्तवत्सलं नमामि रक्तलोचनम् ।
नमामि चन्द्रशेखरं नमामि दुःखमोचनं
त्वदीयपादपङ्कजं स्मराम्यहं महेश्वरम् ॥१५॥
रावणेन कृतं स्तोत्रं यः पठेत् शिवसन्निधौ ।
पुत्रपौत्रादिकं सौख्यं लभते मोक्षमेवच ॥१६॥

इति दशवदनकृतः शिवताण्डवः
सम्पूर्णः ।

---

# कृष्णताण्डवस्तोत्रम्।

भजे व्रजैकमण्डनं समस्तपापखण्डनं
स्वभक्तचित्तरञ्जनं सदैव नन्दनन्दनम्।
सुपिच्छगुच्छमस्तकं सुनादवेणुहस्तकं
अनङ्गरङ्गसागरं नमामि कृष्णनागरम्॥१॥
मनोजगर्वमोचनं विशालभाललोचनं
विधूतगोपशोचनं नमामि पद्मलोचनम्।
करारविन्दभूधरं स्मितावलोकसुन्दरं
महेन्द्रमानदारणं नमामि कृष्णवारणम्॥२॥
कदम्बसूनकुण्डलं सुचारुगण्डमण्डलं
व्रजाङ्गनैकवल्लभं नमामि कृष्णदुर्लभम्।
यशोदया समोदया सकोपया दयानिधिः
उलूखले सुदुःसहं नमामि नन्दशम्बरम्॥३॥
नवीनगोपनागरं नवीनकेलिमन्दिरं
नवीनमेघसुन्दरं भजे व्रजैकमन्दिरम्।
सदैव पादपङ्कजं मदीयमानसे निजे
दधाति नन्दबालकः समस्तभक्तपालकः॥४॥
समस्तगोपनागरीहृदं व्रजैकमोहनं
नमामि कुञ्जमध्यगं प्रसूनभालशोभिनम्।

दृगन्तकान्तिभङ्गिनं सदासबालसङ्गिनं
दिने दिने नवं नवं नमामि नन्दसम्भवम् ॥५॥
गुणाकरं सुखाकरं कृपाकरं कृपानरं
त्वरासुखैकदायकं नमामि गोपनायकम् ।
समस्तदोषशोषणं समस्तलोकतोषणं
समस्तदासमानसं नमामि कृष्णलालसम् ॥६॥
समस्तगोपनागरीनिकामकामदायकं
दृगन्तचारुसायकं नमामि वेणुनायकम् ।
भवोभवावतारकं भवाब्धिकर्णधारकं
यशोमतेः किशोरकं नमामि दुग्धचोरकम् ॥७॥
विदग्धमुग्धगोपिकामनोमनोजदायकं
नमामि कुञ्जकानने प्रवृद्धवह्निपायिनम् ।
यदा तदा यथा तथा तथैव कृष्णसत्कथा
मया सदैव गीयतां तथा कृपा विधीयताम् ॥८॥

इति श्रीकृष्णताण्डवस्तोत्रं सम्पूर्णम् ।

---

## राक्षसकाव्यम् ।

कश्चिद्वनं बकुवनं विचरन् वयस्थो
वश्यां वनात्मवदनां वनितां वनाद्रीम् ।
तवैर्यरि प्रदमुदीच्य समुत्थितं खे
नागामिमां मदकलः सकलां बभाषे ॥१॥

पश्चाजहग् गिरितटेष कुमाह्वसाङ्कान्
भूदेवराजरिपुमत्नुसमावधूतान्।
वैश्वानरारिजरिपुप्रश्वराभिभूतैः
हृक्श्रीत्वशत्रभिदपाश्रितपुष्पशोभान् ॥२॥
पश्चाद्रिसारसहशीभिरमूभिरद्रि-
राशावयत्यमरगुप्धरिणीं महिम्नः।
अब्दः सिताभिरसितः सबलः खगाभि
र्वीजैः सितैरिव विभाति वनं प्रबुद्धैः ॥३॥
गोष्ठं घृतं सुघृतवाङ्भिरमूभिरन्य
गोभिः समुद्धरति यद्दक्षधाहिमप्रः।
तद्भव्यमम्बरगतं शिखिजात्मसंस्थं
निस्पन्दमानमभिकद्वयतीहगोजान् ॥४॥
अब्रुट्पलाशनिभहग्घनजात्मवक्रात्वा
वार्जस्तरेभनिभगागजदोः स्मोरुः।
सौरिध्वजप्रसवतुल्यशिराङ्कदासौ
श्यामं गताप्रमुदिताप्रसमीक्ष्य वार्दम् ॥५॥
गोमध्यमध्ये मृगगीधरेहे सहस्रगोभूषणकिङ्कराणाम्।
नादेन गोभृत्शिखरे प्रमत्ता नृत्यन्ति गोकर्णशरीरभक्षाः ॥६॥
हृष्टांशुनामपतिरुन्नतहप्रगामी
वागनामभिः परिहृतो विषनामदाभिः।
उष्णां वरप्रमुदितः प्रतिनानदीति
गर्जन्तमीचयहितोश्वयतुल्यरूपम् ॥७॥

एनं पयोदपतिबद्धमिनः पयोदं
स्वस्थं महीतलगतप्रतिमज्जतीव ।
भित्त्वावनीं वनवराहशिरोवराभ्यां
संप्रस्थितोम्बुधरैरभिषिच्यमानः ॥८॥

स्रोतोजविद्रुतजभूधरधातुरूपाः
स्वस्थाः पयोजलदकङ्कविषङ्गमाङ्के ।
मासोर्न भस्य नभसो रतिसंचरन्तः
तीव्रं विषं विषधराः परिनिर्वपन्ति ॥९॥

स्वयोनिभवध्वजसम्भवानां श्रुत्वा निनादं गिरिगह्वरस्थः ।
तमोरिबिम्बप्रतिबिम्बधारी विरौति कान्ते पवनाशनाशः ॥१०॥

गोष्ठस्थ कुङ्कुमवपुः प्रतिराजतेऽसौ
सप्ताद्रिदैत्यभुजगोत्तमयवगोपः ।
उर्वीधराभमचिरोत्थितमध्वरं खे
दृष्ट्वाहिहाप्रमुदितोऽपि महाक्रयानः ॥११॥

कृष्णाम्बुधरः क्षरति तोयमथावजस्र-
मत्याविभौ रणगताविव चेभराजौ ।
अन्ये तु ते द्विरदवृन्दनिभाः चरन्तः
प्रच्छादयन्त्यमरवृन्दविमानमार्गम् ॥१२॥

वार्दीः खगाः क्षितिधरागमनप्रकाशा
नेमीभराश्रभतुरङ्गमतुल्यघोषाः ।
वायूरिताः समवत्य वनं चरन्तो
वार्भिः क्षितिं घृतधराः परिनिर्वपन्ति ॥१३॥

एवंविधपाप्य न रिपुप्रसुतादिशाङ्क
मारुह्य तिष्ठति सुगात्रि भुजङ्गमारिः।
यस्य स्वरैः प्रमुदितस्य ममाद्य बाले
तालध्वजावरजसन्तुमुखराः पतन्ति ॥१४॥
उष्णा विषं स्थलगतोऽस्तितथैव वार्थौ
वार्जौ द्विजो हरिद्वगेष दशार्ङ्गगूढः।
वाताशनः श्वसयनः स्मरति स्थलस्य
चक्षुःश्रवा वनभयात् सुरमन्तुनामा ॥१५॥
पश्यश्वमेधतुरगप्रतिमोऽष्टवर्णौ
वार्द्दनवर्षतिसमाह्वयतेद्यच्छिन्नः।
अंकस्तथैव पवनाशनवेद्यनाणिः
शब्दं करोत्यपि भयं विषराशिमग्नः ॥१६॥
नाविश्किरावणमुपेत्य कुमारसाङ्ग-
माक्रीड़ते मधुकलोङ्गनया समेतः।
अन्यस्त्वयं मणिवराभमुपेत्य गोजं
नारामया महपयःपतिजां वृणोते ॥१७॥
स्थूलं महत् जतजवर्णनिभं नरोऽसौ
बिभ्रत्यमूनि च भिनत्ति सरोरुहाणि।
तज्जेन चापि रजसा वनितां वयस्थो
अभ्य हरत्यवकिरत्यभिषिच्यमानः ॥१८॥
पङ्के निमग्नमिभवृन्दमदः सवारि
गर्जन्तिमिश्रयदवृन्दमिवावभाति।

वार्ष्णेयात्मनामघ्नतचिन्तनतुः सुपर्णो
योऽपिहृतः समदनः प्रतिरौरवीति ॥१९॥
विस्तारिताम्बुजरवेण दिरंसुरेष
संतापितोऽहरिरनोकहनिष्कुटस्थः ।
संलीयते तदितमप्यभिवीक्ष्य क्षिप्रः
स्वात् संमहत्तरमसौ स्वमनुप्रविष्टः ॥२०॥
एतावदुक्तमवचः सुमनाः स उक्ता
रम्यादिनं सह तया प्रियया ह्यदीनः ।
युक्तं चतुर्भिरनडुद्भिरदीनवाङ्भि-
राहृत्ययानमथनाप्रययौ स्वगेहम् ॥२१॥

इति राक्षसकाव्यं सम्पूर्णम् ।

---

## सप्तश्लोकी भागवतम् ।

ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् ।
सरहस्यं तदङ्गं च गृहाण गदितं मया ॥१॥
यावानहं यथाभावो यद्रूपगुणकर्मकः ।
तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात् ॥२॥
अहमेवासमेवाग्रे नान्यद्यत् सदसत्परम् ।
पश्चादहं तदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥३॥
ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि ।

तद्विद्यादात्मनो मायां यथाभासो यथातमः ॥४॥
यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु ।
प्रविष्टान्यप्रविष्टानि तथातेषु नतेष्वहम् ॥५॥
एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मनः ।
अन्वयव्यतिरेकाभ्यां यत् स्यात्सर्वत्र सर्वदा ॥६॥
एतन्मतं समातिष्ठ परमेण समाधिना ।
भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचित् ॥७॥

इति श्रीश्लोकसप्तकं श्रीभागवतं समाप्तम् ।

---

## एकश्लोकी भागवतम् ।

आदौ देवकिदेवगर्भजननं गोपीगृहे वर्द्धनं
मायापूतनजीवितापहरणं गोवर्द्धनोद्धारणम् ।
कंसच्छेदनकौरवादिहननं कुन्तीसुतापालनं
एतद्भागवतं पुराणकथितं श्रीकृष्णलीलामृतम् ।

इति एकश्लोकी भागवतम् ।

---

## एकश्लोकी रामायणम् ।

आदौ रामतपोवनादिगमनं हत्वा मृगं काञ्चनं
वैदेहीहरणं जटायुमरणं सुग्रीवसम्भाषणम् ।

वालीनिग्रहणं समुद्रतरणं लङ्कापुरीदाहनं
पश्चाद्रावणकुम्भकर्णहननम् एतद्धि रामायणम् ॥

इति एकश्लोकी रामायणम् ।

---

## एकश्लोकी भारतम् ।

आदौ पाण्डवधार्तराष्ट्रजननं लाक्षागृहे दाहनं
द्यूतश्रीहरणं वने व्यतरणं मत्स्यालयेवर्द्धनम् ।
लीलागोग्रहणं रणे व्यतरणं संध्यक्रियावर्द्धनं
पश्चाद्भीष्मककौरवादिहननञ्चैतन्महाभारतम् ॥

इति एकश्लोकी भारतम् ।

---

## विष्णुस्तवः ।

श्रीकृष्ण विष्णो मधुकैटभारे भक्तानुकम्पिन् भगवन्मुरारे ।
त्रायस्व मां केशव लोकनाथ गोविन्द दामोदर माधवेति ॥१॥
संसारकूपे पतितो ह्यगाधे मोहान्धपूर्णे विषयातितप्ते ।
करावलम्बं मम देहि विष्णो गोविन्द दामोदर माधवेति ॥२॥
जिह्वे सदैवं भज सुन्दराणि नामानि कृष्णस्य मनोहराणि ।
समस्तभक्तार्तिविनाशनानि गोविन्द दामोदर माधवेति ॥३॥

इति श्रीकृष्णानन्दव्यासदेवरागसागरोद्भव-
स्तोत्रादि परमार्थस्तोत्रादि
संग्रहस्तं समाप्तम् ।

# रसमञ्जरी।

आत्मीयं चरणं दधाति पुरतो निम्नोन्नतायां भुवि
स्वीयेनैव करेण कर्षति तरोः पुष्पं श्रमाशङ्कया।
तल्पे किञ्च करित्वचा विरचिते निद्रातिभागैर्निजै-
रन्तःप्रेमभरालसां प्रियतमामङ्के दधानो हरः ॥१॥

विद्वज्जनमनोभृङ्ग-रसव्यासङ्गहेतवे।
एषा प्रकाश्यते श्रीमद्भानुना रसमञ्जरी ॥२॥

तत्र रसेषु शृङ्गारस्याभ्यर्हितत्वेन तदालम्बनविभावत्वेन नायिका तावन्निरूप्यते। सा च त्रिधा स्वीया परकीया सामान्यवनिता चेति। तत्र स्वामिन्येवानुरक्ता स्वीया न च परिणीतायां परगामिन्यामतिव्याप्तिस्तत्र पतिव्रताया एव लक्ष्यत्वात्। तस्याः परगामितया परकीयात्वमपि सम्भवति। अस्याश्चेष्टा भर्तुः शुश्रूषा शीलसंरक्षणम् आर्जवं क्षमा च। यथा

गतागतकुतूहलं नयनयोरपाङ्गावधि
स्मितं कुलनतभ्रुवामधर एव विश्राम्यति।
वचः प्रियतमश्रुतेरतिथिरेव कोपक्रमः
कदाचिदपि चेत्तदा मनसि केवलं मज्जति ॥३॥

स्वीया त्रिविधा मुग्धा मध्यमा प्रगल्भा च। तत्राङ्कुरितयौवना मुग्धा। सा चाज्ञातयौवना ज्ञातयौवना च। सैव क्रमशो लज्जाभयपराधीनरतिर्नवोढा। सैव क्रमशः

सप्रश्रया विश्रब्धनवोढ़ा। तस्याश्चेष्टा क्रिया मनोहरा कोपे मार्द्दवं नवभूषणे समीहा चेति।

मुग्धा यथा।

आप्तं किल कामदेवधरणीपालेन काले शुभे
वस्तुं वास्तुविधिं विधास्यति तनौ तारुण्यमेणीदृशः।
दृष्ट्या खञ्जनचातुरी मुखरुचा सौधाकरी माधुरी
वाचा किञ्च सुधासमुद्रलहरीलावण्यमामन्त्र्यते ॥४॥

उरो भवि न तुङ्गिमा न च गतागते भङ्गिमा
नवा वचसि रङ्गिमा कुटिलता न तावद्भ्रुवोः।
तथापि हरिणीदृशां वपुषि कापि कान्तिच्छटा
पटावृतमहामणिद्युतिरिवान्तरा लक्ष्यते ॥

बाल्ययौवनयोर्मध्ये द्वैराज्ये कुसुमायुधः।
वारं वारं धनुर्धत्ते वारं वारं विमुञ्चति।

चलदचलदपाङ्गं स्मेरमस्मेरमास्यं
गतिरहह किमस्या मन्थरामन्थरा च।
इति मनसि नितान्तं चिन्तयन् पञ्चबाणः
करविनिहितबाणः संभ्रमाद्बभ्रमीति ॥

अज्ञातयौवना यथा।

नीरात्तीरमुपागता श्रवणयोः सीम्नि स्फुरन्नेत्रयोः
श्रोत्रे लग्नमिदं किमुत्पलमिति ज्ञातुं करं न्यस्यति।
शैवालाङ्कुरशङ्कया शशिमुखी रोमावलीं प्रोञ्छति
श्रान्तास्मीति मुहुः सखीमविदितश्रोणीभरा पृच्छति ॥५

ज्ञातयौवना यथा ।

स्वयम्भूः शम्भुरम्भोजलोचने त्वत्पयोधरः ।
नखेन कस्य धन्यस्य चन्द्रचूड़ो भविष्यति ॥६॥

तन्वी बाला मृदुतनुरियं त्यज्यतामत्र शङ्का
काचिद्दृष्टा भ्रमरभरतो मञ्जरी भिद्यमाना ।
तस्मादेषा रहसि भवता निर्दयं पीड़नीया
मन्दाक्रान्ता वितरति रसं नेक्षुयष्टिः समग्रम् ॥९॥

नवोढ़ा यथा ।

हस्ते धृतापि शयने विनिवेशितापि
क्रोड़े कृतापि यतते वहिरेव गन्तुम् ।
जानीमहे नववधूरथ तस्य वश्या
यः पारदं स्थिरयितुं क्षमते करेण ॥७॥

बलान्नीता पार्श्वं सुखमभिमुखं नैव कुरुते
धुनानामूर्द्धानं रहसि बहुशश्चुम्बनविधौ ।
हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना
नवोढ़ा वोढ़ारं रमयति च सन्तापयति च ॥८॥

विश्रब्धनवोढ़ा यथा ।

दरमुकुलितनेत्रपालिनी सा नियमित बाहुकृतोरुयुग्मबन्धम् ।
करकलितपयोधरं नवोढ़ा स्वपिति समीपमुपेत्य कस्य यूनः ॥६

समानलज्जामदनामध्या ॥

एषैव चातिप्रश्रयादतिविश्रब्धनवोढ़ा ।

अतिविश्रब्धनवोढ़ा यथा ।

प्रेङ्खणप्रेक्षणालापान् कुर्वन्त्यः सस्मितत्रपम् ।
नवीनायाः प्रवीणायाः स्वञ्जनं स्मररञ्जनम् ॥१०॥

अस्याश्चेष्टा मागपि प्रेयसि धैर्य्ये वक्रोक्तिः; अधैर्य्ये परुषवाक् । यथा

स्वापे प्रियाननविलोकनहानिरेव
स्वापच्युतौ प्रियकरग्रहणप्रसङ्गः ।
इत्थं सरोरुहमुखी परिचिन्तयन्ती
स्वापं विधातुमपि हातुमपि प्रपेदे ॥११॥

पतिमात्रविषयकेलिकलापकोविदा प्रगल्भा ।
वेश्यायाश्च पतिमात्रविषयकत्वाभावान्नातिव्याप्तिः ॥
अस्याश्चेष्टा रतिप्रीतिः आनन्दात् सम्मोहः ।

प्रथमं यथा ।

संस्पृश्य स्तनमाकलय्य वदनं संश्लिष्य कण्ठस्थलं
निष्पीड्याधरविम्बमम्बरमपाकृष्य व्युदस्यालकम् ।
देवस्याम्बुजिनीपतेः समुदयं जिज्ञासमाने प्रिये
वामाक्षीवसनाञ्चलैः श्रवणयोर्नीलोत्पलं निह्नुते ॥१२॥

द्वितीयं यथा ।

नखक्षतमुरस्थलेऽधरदले रदस्य क्षतं
च्युता वकुलमालिका विगलिता च मुक्तावली ।
रतान्तसमये मया सकलमेतदालोकितं
स्मृतिः क्व च रतिः क्व च क्व तवालि मिथ्याविधिः ॥१३

मध्याप्रगल्भे मानावस्थायां प्रत्येकं त्रिविधे धीरा अधीरा धीराधीरा च।

व्यङ्गकोपप्रकाशिका धीरा। अव्यङ्गकोपप्रकाशिका अधीरा। व्यङ्गाव्यङ्गकोपप्रकाशिका धीराधीरा। इयन्त विशेषः।

मध्याधीरायाः कोपस्य गोव्यञ्जिका। अधीरायाः परुषवाक्। धीराधीरायास्तु वचनरुदिते कोपप्रकाशके।

प्रौढ़ाधीरायास्तु रत्यौदास्यम्। अधीरायास्तु तर्जनताड़नादिः। धीराधीरायास्तु रत्यौदास्यं तर्जनताड़नादि च कोपस्य प्रकाशकमिति।

यत्तु धीराभेदः स्वीयायामेव न तु परकीयायामिति प्राचीनलिखनम् तदाज्ञामात्रं धीरत्वमधीरत्वं तदुभयं वा माननियतं, परकीयाया अपि मानश्चेत्तासामप्यावश्यकत्वम्। मानश्च स्वीयायामेव न तु परकीयाया इति वक्तुं न शक्यते।

मध्याधीरा यथा।

लीलालिपुञ्जव्रजतोनिकुञ्जे
स्फारा बभूवुः श्रमवारिधाराः।
देहे समीहे भवतो विधातुं
धीरं समीरं नलिनीदलेन ॥ १४ ॥

मध्यमा अधीरा यथा।

आतस्ते निशिजागरो मम पुनर्नेत्राम्बुजे शोणिमा

निर्व्यीतं भवता मधु प्रवितं व्याघूर्णितं मे मनः ।
भ्राम्यद्भृङ्गगणे निकुञ्जभवने लब्धं त्वया श्रीफलं
पश्चेषुः पुनरेव मां क्षतवहक्रूरैः शरैः हन्ति ॥१५॥

मध्याधीराधीरा यथा ॥

कान्तानुरागचतुरोऽसि मनोहरोऽसि
नाथोऽसि किञ्च नवयौवनभूषितोऽसि ।
इत्थं निगद्य सुदृशा वदने प्रियस्य
निश्वस्य बाष्पकलिता निहिता दृगन्ताः ॥१६॥

प्रगल्भाधीरा यथा ॥

नो तल्पं भजसे न जल्पसि सुधाधारानुकारा गिरो
दृक्पातं कुरुषे न वा परिजनक्रोधप्रकाशच्छलात् ।
इत्थं केतकगर्भगौरि दयिते कोपस्य सङ्गोपनं
ते स्यादेव न चेत् पुनः सहचरी कुर्व्वीत साचिस्मितम् ॥१७

प्रगल्भाधीरा यथा ।

प्रतिफलमवलोक्य स्वीयमिन्दोः कलायां
हरशिरसि परस्या वासमाशङ्कमाना ।
गिरिशमचलकन्या तर्जयामास कम्प-
प्रचलवलयवल्गत्कान्तिभाजा करेण ॥१८॥

प्रगल्भाधीराधीरा यथा ।

तल्पोपान्तमुपेयुषि प्रियतमे वक्रीकृतग्रीवया
काकुव्याकुलवाचि साचिहसितस्फूर्जत्कपोलश्रिया ।

हस्तन्यस्तकरे पुनर्मृगदृशा लाक्षारसक्षालित-
श्रोणीपृष्ठमयूखमांसलरुचो विस्फारिता दृष्टयः ॥१९॥

धीरादि त्रय एते द्विधा । ज्येष्ठा कनिष्ठा च । अधीरा ज्येष्ठा कनिष्ठा च । धीराधीरा ज्येष्ठा कनिष्ठा च । परिणीतात्वे सति भर्त्तुरधिकस्नेहा ज्येष्ठा । परिणीतात्वे सति भर्त्तुर्न्यूनस्नेहा कनिष्ठा । अधिकस्नेहासु न्यूनस्नेहासु सामान्यवनितासु नातिव्याप्तिः । परिणीतपदेन व्यावर्त्तनात् नापि परकीयायां भर्तृपदव्यावृत्तेः ।

धीरा ज्येष्ठाकनिष्ठा यथा ।

एकस्मिन् शयने सरोरुहदृशोर्विज्ञाय निद्रास्तंयी-
रेकां पल्लवितावगुण्ठनवतीमुत्कन्धरो दृष्टवान् ।
अन्यस्याः सविधं समेत्य निभृतं व्यालोलहस्ताङ्गुलि-
व्यापारैर्वसनाञ्चलं चपलयन् स्वापच्युतिं कृतवान् ॥२०॥

अधीरा ज्येष्ठाकनिष्ठा यथा ।

अन्तःकोपकषायिते प्रियतमे पश्यन् घने कानने
पुष्पस्यावचयाय नववदनामेकां समायोजयन् ।
अर्द्धोन्मीलितलोचनाञ्चलचमत्काराभिरामाननां
स्मेराभाधरपल्लवां नववधूमन्यां समालिङ्गति ॥२१॥

धीराधीरा ज्येष्ठाकनिष्ठा यथा ।

धैर्याधैर्यपरिग्रहग्रहिलयोरेणीदृशः प्रीतये
रत्नद्वन्द्वमनल्पकान्तिरुचिरं मुष्टिद्वये न्यस्तवान् ।

एकस्याः कलयन् करे प्रथमतो रत्नं परस्याः प्रियो
हस्ताहस्तिमिषात् स्पृशन् कुचतटीमानन्दमाविन्दति ॥२२

अप्रकटितपरपुरुषानुरागा परकीया। सा च द्विविधा परोढ़ा कन्यका चेति। कन्यायाः पित्राद्यधीनत्वात् परकीया अस्या गुप्ता एव सर्व्वा चेष्टा।

परोढ़ा यथा।

अयं रेवाकुञ्जः कुसुमशरसेवासमुचितः
समीरोऽयं वेलादरविदलदेलापरिमलः।
इयं प्रावृट् धन्या नवजलदविन्यासरुचिरा
पराधीनं चेतः सखि किमपि कर्त्तुं मृगयते ॥२३॥

गुप्ताविदग्धालक्षिताकुलटानुशयानामुदिताप्रभृतीनां परकीयायामेवान्तर्भावः।

गुप्ता त्रिविधा वृत्तसुरतगोपना वर्त्तिष्यमाणसुरतगोपना वर्त्तमानसुरतगोपना चेति।

त्रितयमपि यथा।

श्वश्रूः क्रुध्यतु निर्दिशन्तु सुहृदो निन्दन्तु वा यातर-
स्तस्मिन्नद्य न मन्दिरे सखि पुनः स्वापो विधेयो मया।
आखोराक्रमणाय कोणकुहरादुत्फालमातन्वती
मार्जारीनखरैः खरैः क्षतवती कां कां न मे दुर्दशाम् ॥२४॥

वाग्विदग्धा यथा।

निविड़तमतमालमल्लिवल्ली-
विचकिलराजिविराजितोपकण्ठे।

पथिक समुचितवासवतीमे
सवितरि तत्र परिस्फुटे निवासः ॥२४॥

विदग्धा द्विविधा । वाग्विदग्धा, क्रियाविदग्धा ।

क्रियाविदग्धा यथा ।

दासाय भवननाथे बदरीमपनेतुमादिशति ।
हेमन्ते हरिणाक्षी पयसि कुठारं विनिःक्षिपति ॥२५॥

लक्षिता यथा ।

यदभूतं तदभूतं यदभूयात्तदपि वा भूयात् ।
यद्भवति तद्भवतु वा विफलस्तव कोपगोपनोपायः ॥२६॥

कुलटा यथा ।

एते वारिकणान् किरन्ति पुरुषान् वर्षन्ति नाम्भोधराः
शैलाः शाद्वलमुद्वहन्ति न पुनर्ब्यन्तोऽते पुनर्नायकान् ।
त्रैलोक्ये तरवः फलानि सुवते नैवारभन्ते जनान्
धातः कातरमालपामि कुलटाहेतोस्त्वया किं कृतम् ॥२७

अद्यैव सर्व्वमितरं न हि वस्तु किञ्चित्
जारे यथा गृहपतौ च रुचिस्तथा मे ।
तस्मादहो न हि परापरभेदबुद्धिः
मूढाः किमर्थमसतीति कदर्थयन्ति ॥

श्वश्रो तावत्त्रिकोणा विपुलनदनदीग्रावरुद्धं तदङ्गं
तत्राप्यर्द्धं युवत्यः श्रिश्रुगतवयसो रोगिणो योगिनश्च ।
त्यज्यास्तत्रापि मान्याः श्वशुरपितृमुखाः सन्ति शेषाः कियन्तो
मिथ्यावादो ममायं मुखरमुखरवः पुंश्चली पुंश्चलीति ॥

ग्रन्थान्तरे अनुशयाना यथा । वृत्तस्थानविघटनेन भाविस्थानाभावशङ्कया स्वानधिष्ठितसङ्केतस्थाने भर्तुर्गमनानुमानेन चानुशयाना भवति । प्रत्येकमुदाहरणानि । प्रथमं यथा ।—

समुपागतवति चैत्रे निपतति पत्रे लवङ्गलतिकायाः ।
सुदृशः कपोलपाली शिव शिव तालीद्युतिं धत्ते ॥२८॥

निद्रालुकेकिमिथुनानि कपोतपीत-
व्याधूतनूतनमधीरुहपल्लवानि ।
तत्रापि तन्वि न वनानि कियन्ति सन्ति
खेदं त्वनप्रियतमस्य गृहं प्रयाति ॥२९॥

कर्णकल्पितरसालमञ्जरी पिञ्जरीकृतकपोलमण्डलः ।
निष्पतन्नयनवारिधारया राधया मधुरिपुर्निरीक्ष्यते ॥

मुदिता यथा ।

गोष्ठेषु तिष्ठति पतिर्बधिरो न नन्दो
नेत्रद्वयस्य न च पाटवमस्ति यातुः ।
इत्थं निगद्य तरुणी कुचकुम्भसीम्नि
रोमाञ्चकञ्चुकमुदञ्चितमाततान ॥७०॥

कन्यका यथा ।

किञ्चित् कुञ्चितहारयष्टिसरलभ्रूवल्लिसाचिस्मितं
प्रान्तभ्रान्तविलोचनद्युति-भुजा पर्यन्तकर्णोत्पलम् ।
अङ्गुल्याङ्कुरदङ्गुलीयककचांगण्डस्य कण्डूयनं
कुर्वाणा नृपकन्यका सुकृतिनं सव्याजमालोकते ॥३१॥

वित्तमात्रोपाधिकसकलपुरुषाभिनया सामान्यवनितेति। नन्वग्निमित्रे क्षितिपतावनुरक्तायामैरावत्यामप्राप्तिः। तत्र वित्तमात्रोपाधेरभावादिति चेत् मैवम्। सापि काश्मीरक्षीरकादिदातरि महाराजेऽनुरक्ता न तु महाहर्षितेनावगम्यते। तत्र वित्तमात्रोपाधिरिति सामान्यवनिता यथा।

दृष्ट्वा प्राङ्गणसन्निधौ बहुधनं दातारमभ्यागतं
वक्षोजौ तनुतः परस्परमिवाश्लेषं कुरङ्गीदृशः।
आनन्दाश्रुपयांसि मुञ्चति मुहुर्मालामिषात् कुन्तलो
दृष्टिः किञ्च धनागमं कथयितुं कर्णान्तिकं गच्छति ॥२२

अन्यसम्भोगदुःखिता यथा।

त्वं दूति निरगाः कुञ्जं न तु पापीयसो गृहम्।
किंशुकाभरणो देहो दृश्यते कथमन्यथा ॥२३॥

वक्रोक्तिगर्विता द्विविधा। प्रेमगर्विता सौन्दर्य्यगर्विता चेति।

प्रेमगर्विता यथा।

वपुषि तव तनोति रत्नभूषां
प्रभुरिति धन्यतमासि ब्रवीमि।
सखि तनुनयनान्तरालभीरुः
कलयति मे न भूषणानि कान्तः ॥७४॥

सौन्दर्य्यगर्विता यथा।

कलयति कमलोपमान मक्ष्णो
प्रथयति वाचि सुधारसस्य साम्यम्।

सखि कथय किमाचरामि कान्ते
समजनि तव सहिष्णुतैव दोषः॥२५॥

मानवती यथा। प्रियापराधसूचको मानः। स च लघुर्मध्यमो गुरुः। अल्पापनेयो लघुः। कष्टतयापनेयो मध्यमः, कष्टतरापनेयो गुरुः॥ असाध्यस्तु रसाभासः। अन्यस्त्रीदर्शनादिजन्मा लघुः। गोत्रस्खलनादिजन्मा मध्यमः। अपरस्त्रीसम्भोगादिजन्मा गुरुः। अन्यथा सिद्धकुतूहलाद्यपनेयो लघुः। अन्यथावादशपथाद्यपनेयो मध्यमः अन्यस्त्रीदर्शनादिजन्मा। चरणपातभूषणदानाद्यपनेयो गुरुः।

परस्त्रीदर्शनादिजन्मा यथा।

स्वेदाम्बुभिः क्व च न पिच्छलमङ्गभूमौ
शातोदरि क्व च न कण्टकितं विभाति।
अन्यां विलोकयति भावयति प्रियेऽपि
मानः क्व दास्यति पदं तव तन्न विद्मः॥२६॥

गोत्रस्खलादिजन्मा यथा।

यद्गोत्रस्खलनं तव भ्रमो यदि न मन्यसे।
रोमालिव्यालसंस्पर्शं शपथं तन्वि कारय॥

अपराङ्गनासङ्गादिजन्मा यथा।

दयितस्य निरीक्ष्य भालदेशं
चरणालक्तकपिञ्जरं सपत्न्याः।
सुदृशो नयनस्य कोणभासः
श्रुतिमुक्ताशिखरोपमा बभूवुः॥ २७॥

एताः षोड़शापि अष्टाभिरवस्थाभिः प्रत्येकमष्टविधाः। प्रोषितभर्तृका खण्डिता कलहान्तरिता विप्रलब्धा उत्कण्ठिता वासकसज्जा स्वाधीनपतिका अभिसारिका चेति गणनया अष्टाविंशत्यधिकशतं भेदा भवन्ति ॥१२८॥ तासामप्युत्तमाधममध्यमागणनया चतुरशीतियुतं शतत्रयं भेदा भवन्ति ॥ ३८४॥ यत्तु तासां दिव्या अदिव्या दिव्यादिव्यादित्रयगणनया द्विपञ्चाशदधिकशतयुतसहस्रभेदा भवन्ति ॥११५२॥ तत्र दिव्या शच्यादयः। अदिव्या मालत्यादयः। दिव्यादिव्या द्रौपद्यादयः इति। तन्न अवस्थायां भेदेनैव नायिकानामपि भेदात्। जातिभेदेन भेदस्वीकारे नायकानामप्येवमानन्त्यं स्यात्।

तथाहि दिव्यादिभेदाः नायकानामपि सन्ति यथा। दिव्या इन्द्रादयः, अदिव्या माधवादयः, दिव्यादिव्या अर्जुनादयः। यद्यपि मुग्धायां यथा धीरादिभेदाभावस्तथाविधप्रज्ञासामग्र्यभावात् तथा अष्टविधत्वाभावो भवितुमर्हति। तथापि प्राचीनलिखनानुरोधेन नवोढामप्यवलम्ब्य ते भेदा अवगन्तव्याः। देशान्तरगते प्रेयसि सन्तापव्याकुला प्रोषितभर्तृका। उत्कण्ठिता कलहान्तरिता विप्रलब्धासां पतिर्देशान्तरगतो न भवतीति तत्रातिव्याप्तिः। अस्यास्चेष्टा दशावस्था।

मुग्धा प्रोषितभर्तृका यथा।

दुःखं दीर्घतमं वहन्त्यपि सखी वर्गाय नो भाषते
शैवालैः शयनं सृजन्त्यपि पुनः शेते न वा लज्जया।

कण्ठे गद्गदवाचमस्यति दृशा धत्ते न बाष्पोदकं
सन्तापं सहते यदम्बुजमुखी तद्वेद चेतोभवः ॥३८॥

मध्या प्रोषितभर्तृका यथा ।

वासस्तदेव वपुषो वलयस्तदेव
हारस्य सैव जघनस्य च रत्नकाञ्ची ।
वाचालभृङ्गसुभगे सुरभौ समस्त-
मभ्याधिकं भवति तत् सखि किं निदानम् ॥३९॥

प्रौढ़प्रोषितभर्तृका यथा ।

माला बालाम्बुजदलमयी मौक्तिकी हारयष्टिः
काञ्ची किञ्च त्वयि यदुपते प्रस्थिते प्रस्थितैव ।
अन्यद्ब्रूमः किमिह धमनी वर्त्तते वा नवेति
ज्ञातुं बाहोरहह वलयं पाणिमूलं प्रयाति ॥४०॥

परकीया प्रोषितभर्तृका यथा ।

श्वश्रूः पद्मदलं ददाति तदपि भ्रूसंज्ञया गृह्यते
सद्योमर्मरशङ्कया न च तया संस्पृश्यते पाणिना ।
यातुर्वाचि सुहृद्गणस्य वचसि प्रत्युत्तरं दीयते
श्वासः किन्तु न मुच्यते हतवहक्रूरः कुरङ्गीदृशा ॥४१॥

सामान्यवनिता प्रोषितभर्तृका यथा ।

विरहविदितमन्तः प्रेम विज्ञाय कान्तः
पुनरपि वसु तस्मादेत्य मे दास्यतीति ।
मरिचनिचयमक्ष्णोर्न्यस्य बाष्पोदविन्दून्
विसृजति पुरयोषिद्द्वारदेशोपविष्टा ॥

अन्योपभोगचिह्नितः प्रातरागच्छति पतिर्यस्याः सा खण्डिता । प्रातरित्युपलक्षणम्, अस्याश्चेष्टा, अस्फुटालाप-चित्त-सन्ताप-निश्वास-तुष्णीम्भावाश्रुपातादयः ।

मुग्धा खण्डिता यथा ।

वक्षः किमु कलसाङ्कितमिति किमपि द्रष्टुमिच्छन्त्याः ।
नयनं नवोढसुदृशः प्राणेशः पाणिना पिधत्ते ॥

मध्या खण्डिता यथा ।

वक्षोजचिह्नितमुरो दयितस्य वीक्ष्य
दीर्घं न निःश्वसिति जल्पति नैव किञ्चित् ।
प्रातर्जलेन वदनं परिमार्जयन्ती
बाला विलोचनजलानि तिरोदधाति ॥४२॥

प्रौढ़ा खण्डिता यथा ।

कान्तं वीक्ष्य विपक्षपक्ष्मलदृशः पादाम्बुजालक्तके-
रालिप्ताननमानतीकृतमुखी चित्रार्पितेवाभवत् ।
व्यक्तं नोक्तवती न वा कृतवती निश्वासकोष्णा दृशः
प्रातर्मङ्गलमङ्गनाकरतलादादर्शमादर्शयत् ॥४७॥

नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गसंशी विसर्पन्
नवपरिमलगन्धः केन शक्यो वरीतुम् ॥

सखे दशनक्षतमधरं किमिति गोपयसे प्रयत्नेन ।

संप्रति रजनिरहस्यं नयनालस्यं निवेदयति ॥

ग्रन्थान्तरम्।

परकीया खण्डिता यथा।

कान्तं निरीक्ष्य वलयाङ्कितकण्ठदेशम्
उक्ता तथा परभिया परुषा न वाचः।
दूतीमुखे मृगदृशा स्खलदश्रुपूरा
दूरात् परं निदधिरे नयनान्तपाताः ॥४४॥

सामान्यवनिता खण्डिता यथा।

उरस्तव पयोधराङ्कितमिदं कुतो मे क्षमा
ततो मयि निधीयतां वसु पुरा यदङ्गीकृतम्।
इति प्रचलचेतसः प्रियतमस्य वारस्त्रिया
क्वणत्कणककङ्कणं करतलात् समाकृष्यते ॥४५॥

अग्रे अवमत्य पतिं पश्चात् परितप्ता कलहान्तरिता॥
अस्याश्चेष्टा भ्रान्तिसंमोहसन्तापसन्ततिश्वासज्वरप्रलापादयः।

मुग्धा कलहान्तरिता यथा।

अनुनयति पतिं न लज्जमाना
कथयति नापि सखीजनाय किञ्चित्।
प्रसरति मलयानिलेन वोढा
वहति परन्तु चिराय शुभ्यमन्तः ॥

मध्या कलहान्तरिता यथा।

विरमति कथनं विना न खेदः
सति कथने समपैति कापि लज्जा।

इति कलहमधोमुखी सखीभ्यो
लपितु मनालपितुं समाचचक्षे ॥४६॥

प्रौढाकलहान्तरिता यथा ।

अकरोः किं नु नेत्रशोणिमानं
किमकार्षीः करपल्लवावरोधम् ।
कलहं किमधाः क्रुधा रसज्ञे
हितमर्थं न विदन्ति दैवदष्टाः ॥४७॥

परकीया कलहान्तरिता यथा ।

भर्त्तुर्यस्य कृते गुरुर्लघुरभूद् गोष्ठी कनिष्ठीकृता
धैर्य्यं कोषधनं गतं सहचरी नीतिः कृता दूरतः ।
निर्मुक्ता तृणवत् त्रपा परिचिता स्रोतस्वती विन्दुवत्
स क्रोधादवधीरितो हतधिया मातर्बलीयान् विधिः ॥४८

सामान्यवनिता कलहान्तरिता यथा ।

यत्पङ्केरुहलत्त्यपाणिकमले भाग्यालये यद्गुरु
न्यस्तं काममयं ललाटफलके भाग्याक्षरं वेधसा ।
तत् सर्व्वं सखि यो यथार्थमकरोत् तस्मिन् प्रकोपः कृतो
धिङ् मां धिङ् मम जीवितं धिगतनुं धिक्चेष्टितं दिग्वयः॥४९

सङ्केतनिकेतने प्रियतममनवलोक्य समाकुलहृदया विप्रलब्धा ।

अस्याश्चेष्टा निर्वेदनिःश्वाससखीजनोपालम्भ-
सन्तापालापभयचिन्ताश्रुपातमूर्च्छादयः ॥५०॥

मुग्धा विप्रलब्धा यथा ।

आलीभिः सपथैरनेककपटैः कुञ्जोदरं नीतया
शून्यं तच्च निरीक्ष्य विजृम्भितया न प्रस्थितं न स्थितम् ।
न्यस्ता किन्तु नवोढ़नीरजदृशा कुञ्जोपकण्ठे रुषा
भ्राम्यद्भृङ्गकदम्बडम्बरचमत्कारस्पृशो दृष्टयः ॥५१॥
किमुत्तीर्णः पन्थाः कुपितभुजगीभोगविषमो
विषोढ़ा भूयस्यः किमपि कुलपालीकटुगिरः ।
इति स्मारं स्मारं दरदलितशीतद्युतिरुचौ
सरोजाक्षी शोणं दिशि नयनकोणं विकिरति ॥५२॥

मध्यमा विप्रलब्धा यथा ।

सङ्केतकेलिगृहमेत्य निरीक्ष्य शून्यम्
एनीदृशो निभृतनिःश्वसिताधरायाः ।
अर्द्धोच्चरं वचनमत्र विकाशमेतं
ताम्बूलमर्द्धकवलीकृतमेव तस्थौ ॥५३॥

प्रौढ़ा विप्रलब्धा यथा ।

शून्यं केलिगृहं निरीक्ष्य कुटिलं विज्ञाय चेतोभवं
दूती नापि निवेदिता सहचरी दृष्टापि नो वा तया ।
शम्भो ! शङ्कर ! चन्द्रशेखर ! हर ! श्रीकण्ठ ! शूलिन् ! शिव !
त्रायस्वेति परन्तु पङ्कजदृशा भर्गस्य चक्रे स्तुतिः ॥५४॥

परकीया विप्रलब्धा यथा ।

दत्त्वा धैर्यभुजङ्गमूर्ध्नि चरणावुल्लङ्घ्य लज्जानदी-
मुल्लङ्घ्यत्य घनान्धकारपटलं तस्या न दृष्टः प्रियः ।

सन्तापाकुलया तया च परितः पाथोधरे गर्जति
क्रोधक्रान्तसताम्रमत्तमहिषभ्रान्त्या दृशौ योजिते ॥५५॥

सामान्यवनिता विप्रलब्धा यथा।

कपटवचनभाजा केनचिद्वारयोषा
सकलरसिकगोष्ठीरञ्जिका वञ्चितासौ।
इति विहसति रिङ्गद्भृङ्गविच्छिन्नवल्ली-
विकचकुसुमकान्तिच्छद्मना केलिकुञ्जः ॥५६॥

सङ्केतस्थलं प्रति भर्त्तुरनागमनकारणं या चिन्तयति सा उत्कण्ठिता। अवधिदिवसानागतप्रेयसि प्रोषितपतिकायां नातिव्याप्तिः। तस्या भर्त्तुरवधिदिवसे भवनागमनानियम इति सङ्केतपदेन व्यावर्त्तनात्।

अस्याश्चेष्टा।

अरतिसन्ताप-जृम्भनाङ्गास्फोटकम्पलरुदितस्वावस्थाकथनादयः।

मुग्धा उत्कण्ठिता यथा।

यन्नाद्यापि समागतः पतिरिति प्रायः प्रपेदे पराम्
दुःखं चेतसि चिन्तयन्त्यपि सखीं न व्रीड़िता पृच्छति।
दीर्घं न श्वसितं दधाति चकितं न प्रेक्षते केवलं
किञ्चित्पक्वपलाण्डु पाण्डुरुचिं धत्ते कपोलस्थलीम् ॥५५

मध्या उत्कण्ठिता यथा।

आमेतुं नगता किमु प्रियसखी भीता भुजङ्गात् किमु

क्षोभो वा प्रतिषेधसाचि किमसौ प्राणेश्वरो सज्जते।
इत्थं कर्णसुवर्णकेतकरजःपातोपघातच्छलात्
अक्ष्णोः कापि नवोढ़नीरजमुखी बाष्पोदकं मुञ्चति॥५६॥

प्रौढ़ा उत्कण्ठिता यथा।

भ्रातर्निकुञ्ज सखि यूथि रसाल बन्धो
मातस्तमस्विनि पितस्तिमिर प्रसीद।
पृच्छामि किञ्चिदिह नीरधराभिरामो
दामोदरः कथय किन्न समाजगाम॥५७॥

परकीया उत्कण्ठिता यथा।

स्नातं वारिदवारिभिर्विरचितो वासो घने कानने
शीतैश्चन्दनवारिभिर्मनसिजो देवः समाराधितः।
नीता जागरसव्रतेन रजनी व्रीड़ा हृता दूरितो
तप्तं किन्न तपस्तथापि स कथं नाद्यापि नेत्रातिथिः॥५८॥

सामान्यवनिता उत्कण्ठिता यथा।

कथं न कान्तः समुपैति कुञ्जम्
इत्थं चिरं चेतसि चिन्तयन्ती।
अचालयन्निष्पतिताश्रुधारां
वाराङ्गना कापि धनाभिलाषात्॥५९॥

अद्य मे प्रियवासक इति अभिप्रेत्य या सुरतसामग्रीं सज्जीकरोति, सा वासकसज्जा। वासको वासरः।

अस्याश्चेष्टा मनोरथसखीपरीहासदूतीप्रश्नसामग्रीसम्पादनमार्गविलोकनादयः।

मुग्धा वासकसज्जा यथा।

हारं गुम्फति तारकास्तबकितं बध्नाति काञ्चीलतां
दीपं न्यस्यति किन्तु तल्पकमलं नेहं न धत्ते पुनः।
आलीनामिति वासकस्य रजनौ कामानुरूपां क्रियां
साचिस्मेर नवोढ़नीरजमुखी दूरात् समुद्वीक्षते ॥६०॥

मध्या वासकसज्जा यथा।

शिल्पं दर्शयितुं करोति कुतुकात् कह्लारहारस्रजं
चित्रप्रेक्षणकैतवेन किमपि द्वारं समुद्घाट्यते।
गृह्णात्याभरणं नवं सहचरीभूषाजिगीषामिषा-
दित्थं पद्मदृशः प्रतीक्ष्य चरितं स्मेराननोऽभूत् स्मरः ॥६१॥

प्रगल्भा वासकसज्जा यथा।

कृतं वपुषि भूषणं चिकुरधोरणी धूपिता
कृतायतनसन्निधौ क्रमुकवीटिकासम्भृतिः।
अकारि हरिणीदृशा भवनमेत्य देहश्रिया
स्फुरत्कनककेतकीकुसुमकान्तिभिर्दुर्दिनम् ॥६२॥

मनोरथो यथा।

आवयोरङ्गयोर्द्वित्वे भूयो विरहविक्लवः।
अद्वैते च स्मितं स्फीतं तस्मादन्योन्यवीक्षणम् ॥६३॥

परकीया वासकसज्जा यथा ।

श्वश्रूं स्वापयति च्छलेन च तिरोधत्ते प्रदीपाङ्कुरान्
धत्ते सौधकपोतपोतनिनदैः साङ्केतिकं चेष्टितम् ।
शश्वत्पार्श्वविवर्त्तिताङ्गलतिकं लोलत्कपोतद्युति
क्वापि क्वापि कराम्बुजं प्रियधिया तल्पान्तिके न्यस्यति ॥६४

सामान्यवनिता वासकसज्जा यथा ।

चोलं नीविनिचोलकर्षणविधौ चूडामणिं चुम्बने
याचिष्ये कुचयोः करार्पणविधौ काञ्चीं पुनः काञ्चनीम् ।
इत्थं चन्दनचर्चितैर्मृगमदैरङ्गानि संस्कुर्वती
तत् किं यन्न मनोरथं वितनुते वारेषु वाराङ्गना ॥६५॥

सदा कृताज्ञापरा प्रियतमा स्वाधीनपतिका । अस्याश्चेष्टा वनविहारादिमदनमहोत्सवमदाहङ्कारमनोरथाव्याप्तिप्रभृतयः ।

मुग्धा स्वाधीनपतिका यथा ।

मध्ये नो कृशिमा स्तने न गरिमा देहे न वा कान्तिमा
श्रोणौ न प्रथिमा गतौ न जड़िमा नेत्रे न वारक्रिया ।
लास्ये न द्रढ़िमा न वाचि पटिमा हास्ये न वा स्फीतिमा ।
प्राणेशस्य तथापि मज्जति मनो मय्येव किं कारणम् ॥६६॥

मध्या स्वाधीनपतिका यथा ।

यदपि रतिमहोत्सवे नकारो
यदपि करेण च नीविधारणानि ।
प्रियसखि ! पतिरेष पार्श्वदेशं
तदपि न मुञ्चति चेत् किमाचरामि ॥६७ ॥

प्रौढ़ा स्वाधीनपतिका यथा।

रक्तस्याधरपल्लवस्य वचसो हास्यस्य लास्यस्य वा
धन्यानामरविन्दसुन्दरदृशां कान्तस्तनोति स्तुतिम्।
स्वप्नेनापि न गच्छति स्मृतिपथं चेतः कथं दृक्पथं
काप्यन्या दयितस्य मे सखि! कथं तस्यास्तु भेदग्रहः॥६८

परकीया स्वाधीनपतिका यथा।

स्वीयाः सन्ति गृहे सरोरुहदृशो, यासां विलासक्वणत्-
काञ्चीकुण्डलहेमकङ्कणझणत्कारो न विश्राम्यति।
को हेतुः सखि! कानने पुरपथे सौधे सखीसन्निधौ
भ्राम्यन्तीमपि वल्लभस्य परितो दृष्टिर्न मां मुञ्चति॥६९॥

सामान्यवनिता स्वाधीनपतिका यथा।

सन्त्येवं प्रतिमन्दिरं मृगदृशो यासां सुधासागर-
स्रोतःसूतसरोजसुन्दरचमत्कारा दृशो विभ्रमाः।
चित्रं किन्तु विचित्रमन्मथकलाकौशल्यहेतोः पुन-
र्वित्तं चित्तहरं प्रयच्छतियुवा मय्येव किं कारणम्॥७०॥

स्वयमभिसरति प्रियमभिसारयति साभिसारिका। अस्या-
श्चेष्टा समयानुरूपमितभूषणाङ्गाप्रच्छानैपुण्यकपटहासादयः।
इति परकीयायाः, स्वीयायास्तु प्रकृतएव विभ्रमः।

मुग्धाभिसारिका यथा।

दूती विद्युदुपागता सहचरी रात्रिश्चिरस्थायिनी
दैवज्ञो जलदः स्वनेन दिशति प्रस्थानवेलां शुभाम्।

वाचं माङ्गलिकीं तनोति तिमिरस्तोमोऽपि भिल्लीकरै-
र्भीतोऽयं दयिताभिसारसमयो मुग्धे! विमुञ्च त्रपाम् ॥७१

मध्याभिसारिका यथा ।

भीतासि नैव भुजगात् पथि सञ्चुजस्य
सङ्गात् पुनः किमपि भीतिमुरीकरोषि ।
अम्भोधरध्वनिभिरुज्झितासि तन्वि !
सद्याचि साचिवदनासि किमाचरामि ॥७२॥

प्रौढाभिसारिका यथा ।

स्फुरदुरसिजभारभङ्गुराङ्गी
किशलयकोमलकान्तिना पदेन ।
अथ कथय कथं सहेत गन्तुं
यदि न निशासु मनोरथो रथः स्यात् ॥७३॥

परकीयाभिसारिका यथा ।

रभसादभिसर्त्तुमुद्यतानां
वनितानां सखि वारिदो विवस्वान् ।
रजनी दिवसोऽन्धकारमर्चिः
विपिनं वेश्म त्रिमार्ग एव मार्गः ॥७४॥

कृष्णाभिसारिका यथा ।

नाम्बुजे न कुमुदैरुपमेयं स्वैरिणीजनविलोचनयुग्मम् ।
नोदये दिनकरस्य न चेन्दोः केवले तमसि यस्य विकासः ॥७५

ज्योत्स्नाभिसारिका यथा।

चन्द्रोदये चन्दनमङ्गकेषु विन्यस्य विन्यस्य विनिर्गतायाः।
मनोनिहन्तुं मदनोऽपि बाणान् करेण कोपाद्विभराम्बभूव ॥७६

दिवसाभिसारिका यथा।

पल्लीनामधिपस्य पङ्कजदृशां पर्वोत्सवामन्त्रणे
जाते सद्मजना मिथःकृतमहोत्साहं पुरः प्रस्थिताः।
सव्याजं स्थितयोर्विहस्य गतयोः शून्यान्तमन्तान्तरे
यूनोः स्विन्नकपोलयोर्विजयते कोऽप्येष कण्ठग्रहः ॥७७॥

सामान्यवनिताभिसारिका यथा।

लोलल्लोलचमत्कृति प्रविचलत्काञ्चीलता झङ्कृति
न्यञ्चत्कञ्चुकबन्धबन्धुरचलद्वक्षोजकुम्भोन्नति।
स्फूर्ज्जद्दीधितिविस्फुरत्कृतिचलत् चामीकरालङ्कृति
क्रीड़ाकुञ्जगृहं प्रयाति कृतिनः कस्यापि वाराङ्गना ॥७८

मुग्धाया लज्जाप्राधान्येन, मध्याया लज्जामदनप्राधान्येन, प्रगल्भायाः कोपप्रकाशप्राधान्येन, धीराया धैर्य्यप्राधान्येन, अधीराया अधैर्य्यप्राधान्येन, नवोढ़ायाः संगुप्तिप्राधान्येन, मुग्धाया इव कन्यायाः। सामान्य वनिताया धनप्राप्तिप्राधान्येन, अष्टविधनायिकावर्णनमिति शेषः।

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित! प्रियसुहृत्सार्थं किमु त्यज्यताम् ॥७९

इत्यादि प्राचीनग्रन्थकारलिखनात् ।

अग्रिमक्षणे देशान्तरनिश्चितगमने प्रेयसि प्रोष्यपति-
कापि नवमी नायिका भवितुमर्हति । तथाहि

एतस्याः प्रोषितपतिकाविप्रलब्धोत्कण्ठितासु नान्तर्भावः,
भर्त्तुः सन्निधिवर्त्तित्वात् । नापि कलहान्तरितामेवान्तर्भावः,
कलहाभावात् अनवमानितपतित्वाच्च । नापि खण्डितायामन्त-
र्भावः प्रियस्यान्योपभोगचिह्नितस्यागमनाभावात् प्रियायाः
कोपाभावात् । काकुवचनकातरप्रेक्षणादिसूचितान्तःपक्ष-
पातदर्शनाच्च । न वासकसज्जान्तर्भावः । वासकसज्जाया
वासरनियमाभावात् । सुरतसामग्री सज्जीकरणाद्यभावत्
निर्वेददर्शनाच्च । न स्वाधीनपतिकान्तर्भावः अग्रिमक्षण-
एव सङ्गस्य विच्छेददर्शनात् । नहि स्वाधीनपतिकाया
कदाचिदपि सङ्गस्य विच्छेद इति सम्प्रदायकाः । व्रजन्नपि
पतिः स्वाधीनपतिकया निरुध्यते । अन्यथा भर्त्तरि स्वाधीन-
त्वमेव न स्यात्, नेह तथा सर्वथा अग्रिमक्षणे विच्छेद-
दर्शनात् । किञ्च निर्वेदाश्रुपातनिश्वासवनविहारादिमदन-
महोत्सवाभावदर्शनाच्च । नाप्यभिसारिकान्तर्भावः अभिसारो-
त्सवाभावात् अन्तस्तापदर्शनाच्चेति युक्तमुपपश्यामः लक्षणन्तु
यस्याः पतिरग्रिमक्षणे देशान्तरं यास्यति एव सा प्रोष्यत्प-
तिका । अस्याश्चेष्टा । काकुवचनकातरप्रेक्षणगमनविघ्नोप-
दर्शननिर्वेदसन्तापसम्मोहनिश्वास बाष्पादयः । मुग्धाप्रोष्य-
त्पतिका यथा ।

प्राणेश्वरे किमपि जल्पति निर्गमाय
क्षामोदरी वदनमानमयाञ्चकार।
आली पुनर्निभृतमेत्य लतानिकुञ्ज-
मुन्मत्तकोकिलकलध्वनिमाततान ॥८०॥

मध्या प्रोष्यत्पतिका यथा।

गन्तुं प्रिये वदति निश्वसितं न दीर्घ-
मासीन्न वा नयनयोर्जलमाविरासीत्।
आयुर्लिपिं पठितुमेनदृशः परन्तु
भालस्थलीं किमु करः समुपाजगाम ॥८१॥

प्रौढ़ा प्रोष्यत्पतिका यथा।

नायं मुञ्चति सुभ्रु वामपि तनुत्यागे वियोगज्वरः
तेनाहं विहिताञ्जलिर्यदुपते! पृच्छामि सत्यं वद।
ताम्बूलं कुसुमं पटीरमुदकं यद्बन्धुभिर्दीयते
स्यादत्रैव परत्र तत्किमु विषज्वालावलीदुःसहम् ॥८२॥

परकीया प्रोष्यत्पतिका यथा।

न्यस्तं पन्नगमूर्ध्नि पादयुगलं भक्तिर्विमुक्ता गुरौ
त्यक्ता नीतिरकारि किं न भवतो हेतोर्मया दुष्कृतम्।
अङ्गानां शतयातना नयनयोः कोपक्रमो रौरवः
कुम्भीपाकपराभवश्च मनसोमुक्तं त्वयि प्रस्थिते ॥८३॥

सामान्यवनिता प्रोषितपतिका यथा।

मुद्रां प्रदेहि वलयाय भवद्वियोगम्
आसाद्य यास्यति वहिःसहसा यदेतत्।

इत्थं निगद्य विगलन्नयनाम्बुधारा
वाराङ्गना प्रियतमं करयोर्बभार ॥८४॥

अहितकारिण्यपि प्रिये हितकारिणी या सा उत्तमा। अस्या उत्तमैव चेष्टा। यथा

पतिः शयनमागतः कुचविचिन्वितोरस्थलः
प्रसन्नवचनामृतैरयमतर्पि वामभ्रुवा।
अचर्चि सुभगस्मितद्युतिपटीरपङ्कद्रवै-
रपूजि विलसद्विलोचनचमत्कृतैरम्बुजैः ॥८४॥

हिताहितकारिणि प्रिये हिताहितकारिणी या सा मध्यमा। व्यवहारानुसारिणी चेष्टा। यथा

कान्ते सागसि कञ्चुकस्पृशितया साचीकृतग्रीवया
मुक्ताः कोपकषायमन्मथशरक्रूराः कटाक्षाङ्कुराः।
साकूते दरहासपेशलवचोमाध्वीकधारालसा-
प्रीतिः कल्पलता च का चन महादानीकृत सुभ्रुवा ॥८५

हिताहितकारिण्यपि प्रियतमे अहितकारिणी या सा अधमा। एषैव निर्निमित्तकोपना चण्डीत्युच्यते। अस्या निर्निमित्तकोपत्वादधमैव चेष्टा। यथा

प्रस्थाने तव यः करोति कमलच्छायां मुखाम्भोरुहं
श्रीखण्डद्रवधारया शिशिरया मार्गं पुरः सिञ्चति।
तस्मिन् प्रेयसि विद्रुमद्रवनदीरिङ्गत्तरङ्गभ्रमि-
भ्रान्ताक्रान्तसरोजपत्रसदृशा भ्रूयोदृशा क्रुध्यति ॥८६॥

विस्तरभिया प्रत्येकमेतासामुत्तममध्यमाधमभेदा नोदाहृता इति। विश्वासविश्रामकारिणी पार्श्वचारिणी सखी। तस्या मण्डनोपालम्भशिक्षापरिहासप्रभृतीनि कर्म्माणि। मण्डनं यथा।

स्तनकलशकमहीधरोपकण्ठे
प्रियकरपल्लवमुल्लसत्प्रमोदम्।
रहसि मकरिकामिषाल्लिखन्तीं
कमलमुखी कमलैः सखीं जघान ॥८७॥

उपालम्भो यथा।

अभ्रध्वानैर्मुखरितदिशः श्रेणयस्तोयदानां
धारासारैर्धरणिवलयं सर्व्वतः प्लावयन्ति।
तेन स्नेहं वहति विपुलं मत्सखी युक्तमेतत्
त्वं निःस्नेहो यदसि तदिदं नाथ मे विस्मयाय ॥८८॥

शिक्षा यथा।

सानन्दमालि वनमालिविलोकनाय
निर्गच्छ कुञ्जमिति किन्तु विचारयेथाः।
झङ्कारिणो मधुलिहो दिवसे भ्रमन्ति
रात्रौ पुनश्चपलचञ्चुपुटाश्चकोराः ॥८९॥

परिहासो यथा।

आगारभित्तिलिखितासु निवेदयस्व
कः सप्तमी दशसु मूर्त्तिषु लोकभर्त्तुः।

इत्थं सखीजनवचः प्रतिपद्य सद्यः
सीता स्मितद्युतिभिरुत्तरयाञ्चकार ॥९०॥

सख्याः परिहास इव प्रियस्य परिहासः। यथा

भ्रूभङ्गया दृश्यसि तन्वि! सखीं न वाग्भि-
रित्थं विहस्य मुरवैरिणि भाषमाणे।
राधा विराय दशनव्रणदूयमान-
बिम्बाधरावदनमाननमयाञ्चकार ॥९१॥

प्रियस्य परिहासवत्प्रियाया अपि परिहासः, यथा।

दिव्यं वारि कथं यतः सुरधुनी मौलौ कथं पावको
दिव्यं तद्धि विलोचनं कथमहो दिव्यं सचाङ्गे तव।
तस्माद्द्यूतविधौ त्वयाद्य मुषितो हारः परित्यज्यता-
मित्थं शैलजया विहस्य लपितः शम्भुः शिवायास्तु वः ॥९२

दूतव्यापारज्ञता दूती। तस्याः सङ्घट्टनविरहनिवेदनादीनि कर्म्माणि। सङ्घट्टनं यथा।

अस्तति रजनिरुदस्यति तिमिरमिदं प्रादुर्भवति मनोभूः।
उक्तं न त्यज युक्तं विरचय रक्तं मनस्तस्मिन् ॥९३॥

विरहनिवेदनं यथा।

चक्रे चन्द्रमुखी प्रदीपकलिका धाता धरामण्डले
तस्या दैववशाद्दशापि चरमा प्रायः समुन्मीलति।
तद्ब्रूमः सहसा न तेन शिरसा श्रीकृष्ण निक्षिप्यतां
स्वे हस्तत्र तथा यथा न भवति त्रैलोक्यमन्धन्तमः ॥९४॥

इति नायिकाप्रकरणम्।

अथ शृङ्गारस्य उभयसाधनत्वान्नायकोऽपि निरूप्यते। स च त्रिविधः। पतिरुपपतिर्वैशिकश्चेति।

विधिवत्पाणिग्राहकः पतिर्यथा।

त्वं पीयूषमयूख! मुञ्चसि शिलाक्लिन्धान् सुधाशीकरान्
त्वं भोगीन्द्र! विलम्बसे किमु फणाभोगैः शनैर्वीजय।
त्वं स्वर्वाहिणि! किञ्च सिञ्च सलिलैरङ्गं शिरीषोपमैः
सेयं शैलसुता कठोरमहसः कान्त्या पथिक्लाम्यति ॥९५॥

अनुकूलदक्षिणधृष्टशठभेदात् पतिश्चतुर्विधः। सार्वकालिकपराङ्गनापराङ्मुखत्वे सति सर्वकालमनुरक्तोऽनुकूलः यथा।

पृथ्वि! त्वं भव कोमला दिनमणे! त्वं शैत्यमङ्गीकुरु
त्वं वर्त्मन्! लघुतां प्रयाहि पवन! त्वं स्वेदमुत्सारय।
सान्निध्यं कुरु दण्डकाननगिरे! निर्गच्छ मार्गाद्बहिः
सीतासौ विपिनं मया सह यतो गन्तुं समुत्कण्ठते ॥९६॥

सकलनायिकाविषय सहजानुरागो दक्षिणः यथा।

अन्तःपुरे स्फुरति पद्मदृशां सहस्र-
मक्षिद्वयं कथय कुत्र निवेशयामि।
इत्याकलय्य नयनाम्बुरुहे निमील्य
रोमाञ्चितेन वपुषा स्थितमच्युतेन ॥९७॥

भूयोनिःशङ्कक्षतदोषोऽपि भूयोनिवारितोऽपि भूयः-प्रश्रयपरायणो धृष्टः। स यथा।

बद्धो हारैः करकमलयोर्वारितो वारितोऽपि
खापं बुद्धा पुनरुपगतो दूरतो दत्तदृष्टिः ।
तस्योपान्ते कनकवलयं मुक्तमन्वेषयन्त्या
दृष्टो धृष्टः पुनरपि मया पार्श्व एव प्रसुप्तः ॥९८॥

कामिनीविषयककपटपटुः शठः । स यथा ।

मौलौ दाम विधाय भालफलके व्यालिख्य पत्रावलीं
केयूरं भुजयोर्विधाय कुचयोर्विन्यस्य मुक्तास्रजम् ।
विश्वासं समुपार्जयन् मृगदृशः काञ्चीं निवेशच्छलात्
नीविग्रन्थिमपाकरोति मृदुना हस्तेन कामभुजः ॥९९॥

आचारहानिहेतुः पतिरूपपतिः । स यथा ।

मुक्तास्फुटङ्खलितेन यत्र नयनप्रान्तेन न प्रेक्ष्यते
केयूरध्वनिभिर्बिभेति चकितं नो यत्र वाञ्छिष्यते ।
नो वा यत्र शनैरलग्नदशनं बिम्बाधरः पीयते
नो वा यत्र विधीयते चमकितं तत् किं रतं कामिनोः ॥१००॥

उपपतिरपि चतुर्धा । परन्तु तत्र शठत्वं नियतम् अनि-
यतमित्यपरे । बहुलवेश्योपभोगरसिको वैशिकः । यथा

काञ्चीकणत्कणितकोमलनाभिकान्तिं
पारावतध्वनिविचित्रितकण्ठपालिम् ।
उद्भ्रान्तलोचनचकोरमनङ्गरङ्ग-
माशास्महे किमपि वारविलासवत्याः ॥१०१॥

वैशिकस्तु उत्तमाधममध्यमभेदात्त्रिविधः । दूषितायाः
भूयः प्रकोपेऽपि उपचारपरायणः उत्तमः । यथा ।

चक्षुःप्रान्तमुदीक्ष्य पक्ष्मलदृशः शोणारविन्दश्रियं
नोद्वेजयति न स्मितं वितनुते गृह्णाति भीटिं न वा।
तस्योपान्तमुपेत्य किन्तु पुलकभ्राजत्कपोलद्युतिः
कान्तः केवलमानतेन शिरसा मल्लस्रजं गुम्फति॥१०२॥

प्रियायाः प्रकोपे यः प्रकोपमनुरागं वा न प्रकटयति चेष्टया मनोभावं गृह्णाति स मध्यमः। यथा।

आस्यं यद्यपि हास्यवर्जितमदं लास्येन हीनं वचो
नेत्रे शोणसरोजकान्तिरुचिरे क्वापि क्षणं स्थीयताम्।
मालायाः करणोद्यमो मकरिकारम्भः कुचाम्भोधरो
धूपः कुन्तलधोरणीषु सुतनोः सायन्तनो दृश्यते॥१०३॥

भयक्षपालज्जाशून्यः कामक्रीड़ायां अक्षतकृत्याविचारोऽधमः। स यथा।

उदयति हृदि नैव यस्य लज्जा
न च करुणा न च कोऽपि भीतिलेशः।
वकुलमुकुलकोषकोमलां मां
पुनरपि तस्य करे न पातयेथाः॥१०४॥

मानी यथा।

वाह्याकूतपरायणं तव वचो वज्रोपमेयं मनः
श्रुत्वा वाचमिमामपास्य विनयं व्यावृत्य हि प्रस्थिते।
प्रातर्वीतविलोकने परिहृतालापे विवृत्तानने
प्राणेशे निपतन्ति हन्त कृपणा वामभ्रुवो दृष्टयः॥१०५॥

वाक्चेष्टाव्यङ्गसमागमश्चतुरः। चेष्टाव्यङ्गसमागमो यथा।

कान्ते कनकअम्बीरं करे किमपि कुर्वति ।
आमारलिखिते भानौ विन्दुमिन्दुमुखी ददौ ॥१०६॥

वचनव्यङ्ग्यसमागमो यथा ।

तमोजटाले हरिदन्तराले
काले निशायां तव निर्गतायाः ।
तटे नदीनां निकटे वनानां
घटेत शातोदरि कः सहायः ॥१०७॥

प्रोषितपतिरूपपतिः वैशिकश्च भवति । क्रमेणोदाहरणानि यथा ।

ऊरू रम्भा दृगपि कमलं शैवलं केशपाशो
वक्त्रं चन्द्रो लपितममृतं मध्यदेशो मृणालम् ।
नाभिः कूपो वलिरपि सरित् पल्लवः किञ्च पाणि-
र्यस्याः सा चेद्दरसि न कथं हन्त ! तापस्य शान्तिः ॥१०८॥
यान्त्याः सरः सलिलकेलिकुतूहलाय
व्याजादुपेत्य मयि वर्त्मनि वर्त्तमाने ।
अन्तःस्मितद्युतिचमत्कृतदृक्तरङ्गै-
रङ्गीकृतं किमपि वामदृशः स्मरामि ॥१०९॥

अहृतपरिपतन्निचोलबन्धं
मुषितनकारमवक्रदृष्टिपातम् ।
प्रकटितहसितमुन्नतास्यपद्मं
पुरसुदृशः स्मरचेष्टितं स्मरामि ॥११०॥

अनभिज्ञनायको नायिकाभाषो यथा ।

शून्ये सद्मनि योजिता बहुविधा भङ्गी वने निर्जने
पुष्पव्याजमुपेत्य निर्गतमथ स्मारीकृता दृष्टयः।
ताम्बूलाहरणच्छलेन विहितौ व्यक्तौ च वक्रोक्त्या-
वेतेनापि न वेत्ति दूति कियता यत्नेन संज्ञास्यति॥१११

न च नायिकाया इव नायकस्यापि ते ते भेदाः सन्तीति न वाच्यं अस्या अवस्थाभेदेन भेदाः। अस्य च स्वभावभेदेन भेदा इति विशेषात्। अनुकूलत्वं, दक्षिणत्वं धृष्टत्वं शठत्वमिति चत्वार एव नायकानां स्वभावाः। अन्यच्च अवस्थाभेदेन यदि नायकानां भेदः स्यात् तदा उक्तविप्रलब्धखण्डितादयोऽपि नायकाः स्वीकर्त्तव्याः। तथाच सङ्केतव्यवस्थायां स्त्रीणामनागमने अन्यसम्भोगाशङ्काविषयत्वे अन्यसम्भोगचिह्नितत्वं वा नायकानामपि स्यात् नतु नायिकानां, ताः प्रति तदुद्भावे रसाभासतापत्तिरिति। तेषाञ्च पीठमर्दविटचेटकविदूषक-भेदाच्चतुर्विधाः। कुपितस्त्रीप्रसादकः पीठमर्दकः। स यथा

कोऽयं कोपविधिः प्रयच्छ करुणागर्भैर्वचो जायतां
पीयूषद्रवदीर्घिकापरिमलैरामोदिता मेदिनी।
आस्तां वा रुषहयालु लोचनमिदं व्यावर्त्तयन्ती मुहु-
र्यस्मै कुप्यसि तस्य चैव सुतपोवृन्दानि वन्दामहे॥११२॥

नर्मसचिवोऽप्ययमेव। कामतन्त्रकलाकोविदो विटः। स यथा

आयातः कुसुमेश्वरोऽपि जयते सर्वेश्वरो मारुतो
भृङ्गः स्फूर्जति भैरवो न निकटं प्राणेश्वरो मुञ्चति।
एते सिद्धरसाः प्रसूनविशिखो वैद्योऽद्य वैद्योत्सवो
मानव्याधिरसौ कृशोदरि! कथं त्वच्चेतसि स्थास्यति॥११३

सन्धानचतुरश्चेटकः यथा ।

सा चन्द्रसुन्दरमुखी सच नन्दसुनु-
र्दैवात् निकुञ्जभवनं समुपाजगाम ।
तत्रान्तरे सहचरस्तरणौ कठोरे
पानीयपानकपटेन सरः प्रतस्थे ॥११४॥

अङ्गादिवैकृत्यैर्हास्यपरो विदूषकः यथा

आनीय नीरजमुखीं शयनोपकण्ठ-
मुत्कण्ठितोऽस्मि कुचकञ्चुकमोचनाय ।
तत्रान्तरे मुखरकारि विदूषकेण
प्रातः स्तनस्तरुणकुक्कुटकूटनादः ॥११५॥

स्वेदस्तम्भोऽथ रोमाञ्चो स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलयावित्यष्टौ सात्त्विका गुणाः । यथा ।

भेदो वाचि दृशोर्जलं कुचतटे स्वेदप्रकम्पोऽधरे
पाण्डु गण्डतटी वपुः पुलकितं लीनं मनस्तिष्ठति ।
आलस्यं नयनाश्रयं चरणयोः स्तम्भः समुज्जृम्भते
तत् किं राजपथे कृशोदरि दृशोर्जातोऽतिथिः केशवः ॥११६

रतिस्थायिभावः शृङ्गारः, स च द्विविधः, सम्भोगो विप्रलम्भश्च । सम्भोगो यथा ।

वियति विलोलितजलदः स्फुरति कूजति कपोतः ।
निपतति तारकास्र समान्दोलयति वीचिरमरवाहिन्याः ॥११७

विप्रलम्भो यथा ॥

प्रादुर्भूते नवजलधरे तत्पथं द्रष्टुकामाः

प्राणाः पङ्केरुहदलदृशः कण्ठदेशं प्रयान्ति।
अन्यद्‌ब्रूमस्तव मुखविधुं द्रष्टुमुड्डीय गन्तुं
वक्षःपत्रं सृजति विधिना पल्लवस्य च्छलेन॥११८॥

अभिलाषस्तथा चिन्ता स्मृतिश्च गुणकीर्त्तनम्।
उद्वेगश्च विलापश्च उन्मादो व्याधिरेव च।
जड़तानि धनाद्येता दशावस्थाः प्रकीर्त्तिताः॥

सङ्गमेच्छाभिलाषो यथा।

तस्यां सुतनुसरस्यां चेतो नयनञ्च निष्पतितम्।
चेतो गुरु निमग्नं लघु नयनं सर्वतो भ्रमति॥

दर्शनसम्भोगयोः प्रकारभावना चिन्ता। यथा

मया विधेयो मुकुरश्च तस्मिन् कुञ्जोपकण्ठे कलकण्ठनादः।
राधा मधौ विभ्रममावहन्ती कुर्वीत नेत्रोत्पलतोरणानि॥११९

प्रियायाः चेष्टाद्युद्बोधसंस्कारजन्यं ज्ञानं स्मृतिः। यथा

रामो लक्ष्मणदीर्घदुःखचकितो नाविष्करोति व्यथां
श्वासं नोष्णतरं जहाति सलिलं धत्ते न वा चक्षुषि।
वातावर्त्तविवर्त्तमानदहनक्रूरैरनङ्गज्वरैः
श्यामः किन्तु विदेहराजतनयां भूयः स्मरन् वर्त्तते॥१२०॥

विरहकालीनकान्ताविषयकप्रशंसाप्रतिपादनं गुणकीर्त्तनम्। यथा

संस्पर्शः स्तनसंस्पर्शो वीक्षणं रत्नवीक्षणम्।
तस्याः केलिकलालापसमयः समयः सखे!॥

विषयजन्यदुःखकामक्लेशजनितसकलविषयकद्वेषताज्ञानम् उद्वेगः। यथा

गरलद्रुमकन्दमिन्दुबिम्बं क्रीडावारिजवारणो वसन्तः ।
रजनी स्मरभूपतेः कृपाणी करणीयं किमतःपरं विधातः ॥१२१

प्रियाश्रितकाल्पनिकव्यवहारः प्रलापः । यथा । कल्पनायाः कारणमन्तःकरणविक्षेपः । तस्य च निदानमुत्कण्ठा ।

अर्द्धमुद्रीक्षणं चक्षुरर्द्धसम्मीलनं मनः ।
अर्द्धसंस्पर्शनं पाणिरद्य मे किं भविष्यति ॥

औत्सुक्यसन्तापादिकारितमनोविपर्य्यासे समुत्थितप्रियाश्रितवृथाव्यापार उन्मादः । व्यापारः कायिको वाचिकश्चेति ।

कायिको यथा ।

प्रतिफलममृतांशोः प्रेक्ष्य कान्तो कराभ्यां
मुखमिति परिरम्भं कर्त्तुमभ्युद्यतोऽभूत् ।
अथ शिथिलितबाहुर्मानमाशङ्क्य तस्याः
स्पृशति पुलकभाजा पाणिपद्मेन चैव ॥१२२॥

वाचिको यथा ।

किं रे विधो मृगदृशो मुखमद्वितीयं
कन्दर्पदर्पसिद्धगम्बुजमम्बुदेव ।
झङ्कारमावहसि भृङ्गतनू न तादृक्
किं कर्म किञ्च पुनरीदृशमीक्षणीयम् ॥१२३॥

मदनवेदनासमुत्थसन्तापकार्श्यादिदोषो व्याधिर्यथा ।

कोदण्डं विशिखो मनो निविशते कामस्य तस्या अपि
भ्रूवल्लीनयनाञ्चलं मनसिजो वासः समुन्मीलति ।

इत्थं साम्यविधौ तयोः प्रभृति स्वामी तथा चिन्ततां
तन्मानस्तनुतां क्रमात्तनुतां नैषा यथा गच्छति ॥१२४॥

विरहव्यथा निष्कारणमत्ते बन्धजीवनावस्था जड़ता।
पाणिर्नीरवकङ्कणस्तनतटी निष्कम्पमानांशुकी
दृष्टिर्निश्चलतारका समभवद्ध्वस्तांशुकं कुण्डलम्।
कश्चित्तापितया मम न्यगदयोर्भेदो वदनो यदि
त्वन्नामस्मरणेन कोऽपि पुलकारम्भः समुज्जृम्भते ॥१२५॥

स्वप्नचित्रसाक्षाद्भेदात् दर्शनं त्रिधा। स्वप्नदर्शनं यथा—

मुक्ताहारं न च कुचगिरेः कङ्कणं नैव हस्तात्
कर्णात् स्वर्णाभरणमपि वा नीतवानेव भागात्।
आहो स्वप्ने वकुलकुसुमं भूषणं सन्दधानः
कोऽयं चौरो हृदयमहरत् तन्वि तन्न प्रतीमः ॥१२६॥

चित्रदर्शनं यथा।

नीवी हरेदुरसिजं विलिखेन्न केन
दन्तच्छदश्च दशनेन दशेदकस्मात्।
इत्थं पटे विलिखितं प्रविलोक्य कान्तं
बाला पुरे वनजहारविहारशङ्काम् ॥१२७॥

साक्षाद्दर्शनं यथा।

चेतस्त्वं चलतां त्यज प्रियसखि व्रीड़े न मां पीड़य
भ्रातर्मुञ्च दृशो निमेष भगवन् काम क्षणं क्षम्यताम्।
बर्हं मूर्ध्नि च कर्णयोः कुवलयं धेनुं दधानः करे
सोऽयं लोचनगोचरो भवतु मे दामोदरः सुन्दरः॥१२८॥१६

माध्वीकस्यन्दसन्दोहसुन्दरीं रसमञ्जरीम्।
कुर्वन्तु कवयः कर्णभूषणं कृपया मम॥
तातो यस्य जनेश्वरः कविकुलालङ्कारचूडामणि-
र्देशो यस्य विदेहभूः सुरसरित्कल्लोलकिर्म्मीरिता।
पद्येनात्मकृतेन तेन कविना श्रीभानुना योजिता
वाग्देवी श्रुतिपारिजातकुसुमस्पर्द्धाकरी मञ्जरी॥१२९॥
इति श्रीमहामहोपाध्यायभानुदत्तमिश्रविरचिता

रसमञ्जरी समाप्ता॥

---

## राजप्रशस्तिः।

स्वस्ति श्रीमन्महाराजाधिराजेषु निवेदनम्।
तारानाथद्विजस्येदमाशीराशिपुरस्सरम्॥
कमला कमलालयालये लसतात्तेऽचपला निरन्तरम्।
वदने वचनाधिपालिका समरे तेऽग्रसरास्तु कालिका॥
चित्तसद्मनि तवास्तु सन्ततं वासुदेवपदवाच्यधाम तत्।
येन सर्व्वमिदमाततं ततं पालितं तदनु संहृतं क्रमात्॥
योगमार्गनिहितेन चेतसा विश्वरूपमनघं विभावय।
तेन लब्धपुरुषार्थसार्थकं सार्थकं जननमस्तु भूप! ते॥
सवीजा हृद्वृत्तिः क्रममनुगता वीजरहिता
परे तत्त्वे सम्यग् लयमुपगता जन्मशमनी।

त्रयाणां तापानामतिशयशमूलक्षयकरी
प्रगाढं ते भूयात् प्रकृतिपुरुषव्यक्तिजननी ॥
संप्रज्ञातसमाधिधूतनिरये चित्ते क्रमादुद्गताऽ-
संप्रज्ञातसमाधिना नरपते ! भूयात् विवेकोदयः ।
अत्यन्तः पुरुषार्थलाभ इह ते भूयाच्च भूमीपते !
येनाश्रान्तभवेन तेन न भवे भूयात् पुनः सम्भवः ॥

चित्तप्रसादनकरी परिकर्म्मरूपा
ज्योतिष्मती मधुमती च तथा विशोका ।
आनन्दया च सहिता सततं चकास्तु
भूपालवर्य्य ! सततं तव चित्तवृत्तिः ॥

मैत्री साधुषु दुःखितेषु करुणोपेक्षा च पापात्मसु
वृत्तिः सा हृदयस्य भूप ! मुदिता सौख्यान्वितेष्वस्तु ते ।
एतासां परिशुद्धभाववशतः स्थैर्य्यान्वितं मानसं
सर्व्वानर्थनिवर्हणाय नृप ! ते शान्तिं परामृच्छतु ॥

योगोक्तलक्षणयमादिभिरष्टसंख्यै-
र्योगानुशीलनमनुक्षणमातनु त्वम् ।
तुष्टीः सदा नवविधा नृपते ! लभस्व
लसन्तु योगजनितास्तव सिद्धयोऽष्टौ ॥

क्लेशजन्मपरिहीण ईश्वरो
वासनारहित एष भूपते ! ।
कर्म्मपाकपरिमुक्त आदिम-
श्चेतसि प्रणिहितः सदास्तु ते ॥

साङ्ख्यं विषयेषु सन्ततमनुस्यूतं विज्ञायान्तरं
योगं वृत्तिनिरोधलक्षणमथो चित्तस्य भूपाश्रुहि।
येन स्यात् परनिर्वृतिर्न च पुनर्जन्मादिकं भूपते!
आयेनापि भवार्णवे न च गतिः संसारमृत्युभयात्॥

शान्तो दान्तेन्द्रियः सदुपरतिसहितो दुःखसौख्ये सहिष्णु-
र्विश्वासी शास्त्रवाक्ये गुरुवचसि तथा, श्रद्धया संयतश्च।
आत्मन्येवात्मनीचानियतनिरतिमत् सर्व्वयोगाङ्गयुक्तो
भूया भूपाल! भूयो भवभवनसमुच्छेदबोधोदयार्थम्।

आपाततो ज्ञातवेदवेदाङ्गार्थोऽपकल्मषः।
नित्यनैमित्तिकप्रायश्चित्तोपास्तिपरोऽसि यत्॥

नित्यानित्यविवेकिता तव सदा मोक्षे च तीव्रस्पृहा
वैराग्यं विषये तवास्ति सततं शान्त्यादि षट्कं तथा।
तेन ब्रह्मविचारणे नरपते! मन्येऽधिकारी भवान्
तस्मात् सद्गुरुसेवनेन सततं तत्रैव यत्नं क्रियाः॥ युग्मम्

वेदार्थानुभवेन यज्ञविधिना दानैस्तपश्चर्य्यया
प्रायश्चित्तविधानतो विविदिषा जातेति मन्ये तव।
यस्या ब्रह्मविचारणाय यतसे वित्तादिमुक्तैषणः!
भयात् ते नृप! वेदवाक्यजनिता ब्रह्मात्मसाक्षात्कृतिः॥

यया मत्या सम्यक् प्रसृतमपि चैतन्यममलं
गुहास्थं सद्रत्नं तिमिरनिकरेणावृतमिव।
जहि त्वं विक्षेपाद्वयपरमशक्त्या पुनरमुं
ततस्ते चैतन्यं हृदयसदने संस्फुरतु तत्॥

दोषानशेषानपहाय सम्यगबोधेन जीवन्नपि मुक्त एव।
प्रारब्धकर्मक्षयतः परस्ताद्विदेहकैवल्यमवाप्नुहि त्वम्॥

याथार्थ्यबोधेन निवृत्तमिथ्याज्ञानस्य दोषादिविवर्जितस्य।
[illegible] क्रमशोऽप्रवृत्तेरात्यन्तिकी दुःखनिवृत्तिरास्ताम्॥

शान्ते स्वान्ते नितान्ते तव वसतुतरां सर्वलोकैकसाक्षी
भूयोभूयोऽभिभूया रिपुकुलनिवहं सर्वधामैकधामन्!।
प्रत्यूहव्यूहराशिस्तव विलयमितो युष्मयावास्तु भूयात्
भूपेभूपेऽनुरूपे भवतु च नितरां तेऽनुकम्पा सदैव॥

सर्वप्रत्ययसङ्गता निगदिता सत्साधनैरन्विता
लिङ्गालिङ्गयुता विभक्तिवचनैर्नित्यं समुल्लासिनी।
स्फोटात्मा प्रकृतिस्त्वदीयसदने नित्यं जरीजृम्भताम्
नित्या ब्रह्ममयी विवर्त्तजगतामर्थात्मनामाश्रयः॥

प्रजाः प्रजापाल! पितेव पाया घोरादपायात् जगदेकमान्य।
समस्तविज्ञानविवर्द्धनार्थं लोकानशेषानिह शिक्षय त्वम्॥

धर्मेषु चित्तं रमतां निरन्तरं कुकर्मवृत्तेश्च निवर्त्ततां तव।
प्रजासु कल्याणकरी हृदन्तरे वृत्तिस्त्वदीया सततं विराजताम्॥

माधुर्यादिगुणैर्जुषां सुवचसां रीत्यादिसंशोभिनां
सर्वालङ्कृतिशालिनां कलयसे सम्यक् रसास्वादनम्।
सत्काव्यार्थविभावनैकनिपुणः प्राज्ञोऽसि तेनास्म्यहम्
कीर्त्तिस्यूतगुणादिवर्णनविधौ जातस्तवोत्कण्ठितः॥

यावद्यस्य मतिर्विधावति परं तावद्धि तेनोद्यते
निःसीमे भवतीगुणार्णव इह प्रान्तं कथं प्राप्नुयाम्।

यावन्तस्तु गुणा मम श्रुतिगतास्तावन्त एवोदिताः
क्षन्तव्यं क्षितिपाल! चापलमिदं सोढुः क्षमैवोचिता ॥
अहो विधातुः करुणा प्रजासु ययाक्षराणीह समुत्ससर्ज ।
येभ्योऽक्षरेभ्यो हृदयस्य भावः प्रकाशतेऽन्यस्य विबोधनार्थम् ॥

भावं स्वात्मगुहाशयं न परथा वेद्यं परैर्व्यञ्जयन्
वर्णस्तोममहानिधिर्विधिकृतो लोकोपकाराय यत् ।
तेनैव व्यवहारिणो वयमहो वर्णेषु सर्व्वे वशा
वर्णाद्यस्त्वमतश्च वर्णतुलया राजन् पुरो वर्ण्यसे ॥

वर्ण्यन्ते विषया यैस्ते लोके वर्णा इतीरिताः ।
ज्ञातेषु तेषु वर्णेषु सार्व्वज्ञ्यात् लब्धवर्णता ॥

आरात्यकं दुःखमितीह लोके विष्णुर्यथाकारपदाभिधेयः ।
नाशाय दुःखग्रहणात्तथैव राजंस्त्वमाकारपदेन वाच्यः ॥
कं सुखं हि कुरुते प्रजापतिस्तेन तस्य विदिता ककारता ।
सर्व्वलोकसुखकारता यतस्त्वय्यतस्तव ककारता मता ॥
अतोऽसि वर्णादिरनाद्यवर्णो वर्गोत्तमस्त्वादिमवर्गरूपः ।
ततोहि लोके मनुजेन्द्र! चित्रं सर्व्वे विरोधास्त्वयि नाशमाप्ताः ॥
प्रणयसे येन समस्तलोकैस्तेनैव लोके प्रणवोऽसि राजन्! ।
धर्मार्थकामत्रयतत्परत्वात् त्रयीव मूर्त्तिर्भवतस्त्वकास्ति ॥

शासनात् सर्व्वलोकानां शास्त्ररूपोऽसि भूपते! ।
सर्व्वस्थितेर्धारणाच्च धर्म्म इत्यभिधीयसे ॥
सर्व्वलोके राजमानः प्रकृतीश्चापि रञ्जयन् ।
संगतार्थं राजशब्दं बिभ्रत् लोकेषु विश्रुतः ॥

यशः स्तोमे सोमे तव समुदिते भूमिवलये
तमोवृन्दं स्कन्नं क्वचिदपि यदा नाप्य नृपते! ।
तदा भ्रामं भ्रामं वियति समलब्ध्वं गतमद-
स्तमोरूपेणैव स्थितमिति मुधा ज्योतिषकथा ॥
सत्कीर्त्तिपूर्त्तिनिवहेन धरातले ते
वर्णान्तरापहरणात् धवलीकृतेऽस्मिन् ।
वर्णेषु भेदरहिता इह सर्व्वलोकाः
चित्रं त्वदीयविषये नृप! वर्णभेदः ॥
त्वदीयकीर्त्त्या सितया नृपाल! सर्व्वेषु वर्णेषु निवारितेषु ।
चित्रं त्वदीये विषये समन्तात् सर्व्वेऽपि लोकाः किल लब्धवर्णाः ॥
कुन्देन्दुसुन्दररुचा तव कीर्त्तिपूर्त्त्या
ध्वस्तं गुहास्थमपि यत् तम एतदेत्य ।
सोमापि तद्भयवशात् किल कीर्त्तिबन्धुं
चन्द्रं समाश्रितमदो न विधौ कलङ्कः ॥
भूमण्डलादपहृता यशसेन्दुना या
तस्यापकारकरणाय कृतोद्यमा ते ।
तद्बन्धुचन्द्रमनघं ग्रसतीव रोषात्
राहुच्छलेन किल भूप! तमस्ततिः सा ॥
विश्वरूपपरिचिन्तयानिशं विश्वरूपधरतामुपेयिवान् ।
यो हि यत्र मन आददे चिरं तेन तस्य किल रूपमाप्यते ॥
विश्वात्मकोऽपि यतसे कमलोदयार्थं
लोकेषु धर्म्मजननात् तमसो निरासात् ।

तेजःसहस्रनिलयो जगतां पतिश्च
भास्वांश्च नो खरकरः प्रथितः पृथिव्याम् ॥

कलयन् सकलाः कलाः सदा रचयन् कौमुदमुद्विजृम्भणम् ।
द्विजराजोऽपि कलङ्कभागितां न च दोषाकरताञ्च नाश्रितः ॥

भूमिनन्दनतां बिभ्रत् रक्ताङ्गत्वञ्च धारयन् ।
मङ्गलोऽपि महीपाल ! वक्रत्वं न समाश्रितः ॥

द्विजवरगणराजं नन्दयन् सौम्यमूर्त्तिः
प्रथितबुधसमाख्यो रोहिणीनन्दनश्च ।
नरपतितिलकस्त्वं राजपुत्रत्वमाप्तः
खरतरकरयोगं नाश्रितस्त्वं कदाचित् ॥

गिरांपतिर्जिष्णुमतः कचान्वितस्तारापतिश्चित्रशिखण्डिभूषितः ।
गुरुर्नियन्ताश्रमवृत्तिशिक्षणात् परं न चार्व्वाकमतप्रवर्त्तकः ॥

कविश्च काव्यप्रणयात् सदा त्वं नीत्यादिशास्त्रेषु च पारदृश्वा
सदोदयस्ते भुवि तीग्मतेजःसम्पर्कता नास्ति मनाक् कदाचित् ॥

प्राणिहिंसाभयेनेव पद्भ्यां मन्दं चरन् भुवि ।
शनैश्चरोऽपि मित्रस्य नन्दनात् क्रूरता न ते ॥

छायया भूमिमाश्रित्य चन्द्राकौ तेजसा ग्रसन् ।
राहुत्वं प्राप्तवान् राजन् न चागुत्वमवाप्तवान् ॥

वैरिव्यूहविनाशनाय जगतामुत्पातकेतुर्भवान्
क्रान्तौ खेचरगास्त्वदीयवशगास्ते नापि पातो मतः ।
चित्रास्ते शतशः शिखाः समुदिता बुद्धेश्च वीर्य्यस्य च
जाने नासुरयोनिरद्भुतमिदं लोकेषु तद् विश्रुतम् ॥

विघ्नानां वारणाल्लोके गणराजत्वमागतः ।
तव नो रामवैरित्वं दाने न वारणास्यता ॥

भवान् शक्तिधरः साक्षात् सेनानीत्वमुपागतः ।
सुकुमारो महीपाल ! न च प्राप्तः कुमारताम् ॥

विभूतिभूषितो भूप ! तारानाथकृतेक्षणः ।
गामाश्रित्य शिवो भूत्वा न प्राप्तः कामवैरिताम् ॥

विद्वन्मानसहंसवासनिरतो वाण्या च कण्ठे श्रितो
हस्ते साक्षकमण्डलुर्नरपते ! सूत्रं च बिभ्रत् गले ।
वेदानध्ययनादिभिर्बहुलयन्नुच्चैश्चतुर्भिर्मुखैः
त्वं ब्रह्मत्वमुपागतोऽपि रजसा नाक्रान्त इत्यद्भुतम् ॥

नित्यं सत्वसमाश्रितो द्विजगतिर्लक्ष्मीपतिर्भूपते !
देवानां हितकृत्सतां गतिरहो वैकुण्ठधामाश्रितः ।
गोलोकैकविभूषणं च शरणं भक्तस्य कामप्रद-
र्विष्णुस्त्वं बलिदासतां न च गतो जानेऽतिचित्रं महत् ॥

धर्म्मेण राजसे यस्मात् ततस्ते धर्म्मराजता ।
प्रजासु दण्डधरता संमता न तु कालता ॥

श्रीदः पुण्यजनेश्वरश्च नृपते ! भूतेशबन्धुस्तथा
जातोऽपि प्रथितः कुवेरपदभाक् नैवासि चित्रं हि तत् ।
पाशाढ्यो नृप ! वाहिनीपतिरथो पश्चाद्दिगीशोऽपि यत्
तच्चित्रं न च वारुणीमधिगतो नो वा जडेशोऽभवान् ॥

जाने शुद्धमतङ्गजाधिपतितां जीवे च ते गौरवं
स्वर्गेवासिसलोकतां नरपते ! लोकाधिपत्यं तथा ।

शास्त्रेषु प्रथितं सहस्रनयनत्वमेति सम्यग्यथात्
पौरस्त्येषु समादरो न च तवेत्येतद्विचित्रं महत् ॥

मित्रोदयाय यतसे सततं पुरस्तात्
तत्रस्थलोकनिवहांस्त्वयि रागयुक्तान् ।
मुक्तान्यदेशनिकरेषु वसुप्रदोऽभूः
पौरस्त्यवासिषु कथं न वसुप्रसारः ॥

गिरीशसेवनात् मूर्ध्ना वर्णवर्यविभूषणात् ।
मङ्गलत्वमाश्रितो भूप ! नित्यमत्वं न चाश्रितः ॥

रामकृष्णासेवनेन गङ्गासङ्गमनेन च ।
शिवप्रियत्वात् यमुनाश्रयेऽपि तव शुद्धता ॥

सुधांशुर्न तु सर्वभक्षको द्विजराजो न कलङ्कभूषितः ।
धनदोऽपि कुबेरतां त्यजन् कमलेशोऽपि न वा जनार्दनः ।

कृशानुरतोऽपि त्वं कृशानुविवर्जितः
ज्ञानवारिसेचकोऽपि दानदारिविवर्जकः ॥

कलयसि कलिमलनाशं भजसि च जगदाशयम् ।
चलयसि किल्बिषत्रासं रचयसि नृप ! सुरवासम् ॥

नानातीर्थसमाश्रयो द्विजकुलेनाराधितो भूयसा
शश्वत् सौरभशालिनां सुमनसामुल्लासहेतुस्तथा ।
गम्भीरोऽतिदुरासदोऽश्रितजुषां पद्मैकसम्भूमिसंश्रयः
मन्ये कोऽपि जलाशयोऽसि महतां तापस्य संशान्तये ॥

शङ्खचक्रपरिचिह्नितः करे पादयोर्ध्वजमुखादिलाञ्छितः ।
मालया तनुजया च शोभितो वैष्णव! कुशलिनं समाश्रितः ॥

सर्व्वेषां तापनाशाय दक्षिणो मलयाचलः।
कथं न मयि दाक्षिण्यं कुर्य्यादाशंसनं मम॥

त्वं दानवारिपरिसेवनमात्रकर्मा
नित्यादिकर्म्मसु तथा कृतदानधर्म्मा।
लोकादिरक्षणविधौ कृतधर्मवर्म्मा
दानादिनाश्रितजने कृतदेवशर्मा॥

उज्जृम्भते हि सरसां कमलोदयार्थं
भास्वान् दिवेति विदितं नृप! लोकमध्ये।
त्वं सर्वदा तु जगतां किल सर्वदाना-
दुज्जृम्भसे नरपते! कमलोदयार्थम्॥

उदयेनैव सविता जगद्धर्मप्रवर्त्तकः।
अह्नैदयेऽसि नृपते! सर्व्वधर्मप्रवर्त्तकः॥

शश्वत् श्रुतोऽसि मनसा परिशीलितोऽसि
ध्यानेन मुद्रितदृशा च विलोकितोऽसि॥
तस्मात्तु ते परिचयो मयि वर्त्ततेऽद्य
त्वय्येव मे परिचयाय ममैष यत्नः।

तव गुणनिकरान्तं नैव गन्तुं समर्था
वयमिति विरताः स्म श्रान्तियोगाच्च राजन्!।
कलयसि गुणलेशं दोषजालं जहासि
गुणिगणगुणलेशादाशुतोषो भवान् यत्॥

गुणानामाधारे गुणिजनगुणग्राहकवरे
दयासारे पारेवचन मनुवर्यैकनिलये।

ममैषा त्रिश्लिष्टिं मंथनपदवीमेत्य सहसा
सदा सानन्दं तं विरचयतु नित्यं रमयतु ॥
प्रशस्तिपत्रिका यत्नात् श्रीतारानाथशर्मणा ।
द्विजेन रचिता तुभ्यं नृपस्थास्तु चिरं शिवम् ॥

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचि-
राजप्रशस्तिः समाप्ता ।

---

## वृन्दावनयमकं ।

वरदाय नमो हरये पतति जनो यं स्मरन्नपि न मोहरये ।
बकशत्रु दहता मनसि दितिर्येन दैत्यचक्रं दहता ॥१॥
स्वमिव भुजं गवि शेषं व्युपधाय स्वपिति यो भुजङ्गविशेषम् ।
नवपुष्करसमकरया श्रीयोर्मिपंक्त्या च सेवितः समकरया ॥२॥
येन च बलिरसुरोधः समवस्थापितः क्षितेरसुरोधः ।
पृथुकः सन्निभवदनः चिक्षेप च यः सरोजसन्निभवदनः ॥३॥

विशेषकम् ।

स्तौमि च लाङ्गलवन्तं देवं यः संयुगे च लाङ्गलवन्तम् ।
कपिमकरोदसुरक्षितं द्विविदं दृढमुष्टिताडनादसुरक्षितम् ॥४॥
आपानपरम्परया भेजे यं रेवती जितपरं परया ।
बिभ्रतमालानाभौ बाहू मग्नकुसुमास्त्र माला नाभौ ॥५॥
यो हृढमदारणया तस्मा प्रणतं प्रतिद्विषमदारणया ।
कर्षितदानवकुलया विभवौ गन्धद्विजितेभदानवकुलया ॥६॥

ग्रहपतिरिव हिमहीनः कान्त्याभूदुग्रसेन इति हि महीनः ।
प्रकृतिभिररिहेतीह स्वयं हृतः संहताभिररिहेतीहः ॥७॥
बलभिद्दरीभागानां जेताविन्ध्यर्क्षवदरीभागानाम् ।
शौक्रया दाशार्हस्य प्रभवो यशसः नमस्य दाशार्हस्य ॥८॥
यो मोक्तेव सुधायाः वर्ण्यकविः अर्थिता च वसुधायाः ।
यस्य परामुदधीनां तटेषु दत्तिं प्रचक्षते मुदधीनाम् ॥९॥
भरत इव विभावसवः सर्वेषां प्राणिनामथ विभावसवः ।
यस्मिन्वसुधामवति स्थिरा बभूवुः समाश्च वसुधामवति ॥१०॥
अनुकृत्य रघो राज्ञः प्रत्याख्यातात्मनः प्रभुरघो राज्ञः ।
योगिभिरित्यस्तमितः कथममाप्नोमि नाथमस्तमितः ॥११॥
तस्येयमकार्येभ्यः च्युतेन तनयेन रचितयमकार्येभ्यः ।
दत्ता वाक् स्वाकृतिना मानाङ्केन हरिसंज्ञया स्वाकृतिना ॥१२
अथ जग्मतुरुरुमत्तौ वयसा वृन्दावनान्तरमुरुमत्तौ ।
हरिराहितकुमुदसितःस्निग्धतराङ्गस्तथा हली कुमुदसितः १३
उदधिपयोनिर्घोषं तत्र निवेश्याच्युतोऽपयोनिर्घोषम् ।
अविचिन्तितकं सबलः चचार भेजे च यामुनकं सबलः ॥१४॥
प्रियसुहृद्दामोदरयोः ललतो रथरौहिणेयदामोदरयोः ।
कृतपशुवृन्दावनयोः घर्मः क्षयमापदर्पितवृन्दावनयोः ॥१५॥
क्षोभमगादभ्राणां स्तनितैर्विद्युल्लतामगादभ्राणाम् ।
मुनिरपि नीरागमनाः सरितश्चासंप्रवृत्तनीरागमनाः ॥१६॥
रोन्द्रं कन्दर्प्यस्य प्रथमो हेतुर्बभूव कन्दर्पस्य ।
स्त्रीहृदयान्यभिदनतः समरैः प्राप्य सुहृदो घनामभिदनतः ॥१७

विद्युद्गौरी हावान् अकृतेव घनेष्वभूच्च गौरीहावाम्।
सुलभबलाकायेषु स्वपितचिरप्रोषितबलाकायेषु ॥१८॥
जात्या सज्जालकया यूथिकया चाप्तयुवतिसज्जालकया।
कमलानि ससर्जाभ्यां भ्रमरः कृष्णो बलादिव ससर्जाभ्याम् ॥१९॥
व्याप्य दिशो दश निभृतः चरणमपि तस्थौ शासनादृशनिभृतः।
संशमितागबलस्य ध्वनत् घनौघसमप्रभोगबलस्य ॥२०॥
भ्रमर इव कदम्बरजः त्वमितीव वदन् स्वनादशकदम्बरजः।
हन्तुं विभ्रमरहितां नलिनीं पथिकाङ्गनाश्च विभ्रमरहिताम् ॥२१॥
ज्योत्स्ना जं घनमलिना न बभौ क्रियते स्म कुटजलग्नमलिना
बलवानवपूरोहन् ह्रदांश्च नदीतटांश्च नवपूरोऽहन् ॥२२॥

शिखिषु समुत्सु कमनसः
गतिहरमुच्चति च खे समुत्सुकमनसः।
व्यमुच्चन्नपवनजवना
वापीर्हंसाश्च न पवनजवनाः ॥२३॥

शब्दो नादेयानां कलुषतया नो शशाम नादेयानाम्।
फेनो वा नीराणां आकृष्टोभयतटान्तवानीराणाम् ॥२४॥
प्राप्य सखद्योतायां निशि विद्युज्जितमरुत्सखद्योतायाम्।
प्रियतमसदनं गेहा द्वला भयमुत्ससर्ज सदनक्लेहा ॥२५॥
पर्वतकटकेशानां नीपरजः कपिलकुम्भकटकेशानाम्।
कुञ्जनदीनगजानां हर्षो जज्ञे महाम्नदीनगजनाम् ॥२६॥
विविधोपलराशिखरं पिदधे गोवर्द्धनं तृणैराशिखरम्।
कालोऽगन्धारावान् अकरोत्कुजटशिखिनाश्च गन्धारावान् ॥२७

कणिकाभिरमां सुखरा वृन्दावनमारुता ववुरपांसुखराः ।
यमुना नवमुदकपटं भेजे व्रजलोकमाश्रिता मुदकपटम् ॥२८॥
अतपनवसुदे वसतौ व्रजस्य साम्बे ततोऽङ्कि वसुदेवसुतौ ।
अम्बुसमधुनीपवनं वृन्दावनमविशतां समधुनीपवनम् ॥२९॥
शिखिसर्वस्वधरस्य ह्न प्रियतां जग्मतुर्हरेः स्वधरस्य ।
भ्रमरकदम्बकरहा वेणुः प्रावृट् तथा कदम्बकरहा ॥३०॥
संपादामोदस्य स्थानमवभ्रंशि नीपदामोदस्य ।
श्रीलँलितमयो व्रजतः कापि बभूवास्य मुष्टिकमयो व्रजतः ॥३१॥

कृतकामधुरैः मधुरैः
घनरेण्यो मुदितवत्सवकुलैर्बकुलैः ।
व्रतकेशिशिराः शिशिराः
स्थलीर्युताः प्रायशोऽस्तसुरभीः सुरभीः ॥३२॥

ता कुसुमभराभरणा स्तेनयुताः स्वयमिवाञ्जनभसा नभसा ।
रेजुः सुतरां सुतरां यमुनामभितः सवञ्जुललता लसता ॥३३॥
श्रेष्ठपदारोहिण्याः सुतोऽथ तं व्यमहिमा पदारोहिण्याः ।
प्राप्य शरीरं तुङ्गं यतिस्स इवागतः शरीरं तुङ्गाम् ॥३४॥

निचुलवतीं ककुभानां
रम्यो मतिचान्तिकान्तिभिः ककुभानाम् ।
अंसेन स्वनवद्यां
अजं वहन्नपि वर्दालिकुलं स्वनवद्याम् ॥३५॥

दृश्योऽद्य ज्ञाषितया लिम्पन्निव दिङ्मुखानि धवलासितदा ।
ककुभा पवनेच्छायां प्रावृषि मेघानुयातपवनेच्छायाम् ॥३६॥

अथ स वलक्षोभायां पतिरिव कर्तारमरिवलक्षोभायाम्।
मुसलीदं तुरगहनं वीक्ष्य गिरिं प्राह कुटजदन्तुरगहनम् ॥३७
विदधच्छन्नः छन्नः कुटजैः चरति प्रगीतगोपी गोपः।
प्रस्नवदभ्रो दभ्रः स्टष्टिविशेषो यमतुलधातुः धातुः ॥३८॥
पश्य श्यामा श्यामा वनस्थली भाति वलवदुदृश्या दृश्या
प्रदरा धारा धारा धुन्वन्ति मेघाश्च शिरसि हन्ते हन्ते ॥३९॥
असमसु कन्दलदशनैः रहमति दरीमुखैश्च कन्दलदशनैः।
दीयतोच्युत हेममयः तव च रवीन्दोरिवाचलो हेममयः ॥४०॥
शकुनिपताकाशवलं घनरुन्दचक्षुषा पताकाशवलम्।
रूपं हारीतानां श्रियं वनानां च मत्तहारीतानाम् ॥४१॥
पूर्वं स्म हरे शेषे याञ्मेघान् वीक्ष्य भूश्रमहरे शेषे।
जनितरतिरसावसितैः आदाय तड़िद्गुणार्थं वरसावसितैः॥४२
कार्मुकवलयमनूनं दिशसि यत्तोषितोषि वलयमनूनम्।
दृत्याशामुखरतया घनराज्या हरिरिवोच्यते मुखरतया ॥४३॥
नतवोपरिवर्हेण ग्रथिताभरणस्य गोपपरिवर्हेण।
छायामसितापघनः सुरचापाङ्कः परैरकसितापघनः ॥४४॥
हृतगिरिधातुरसङ्गा वध्वा तव भुजसमोर्मिधातुरसङ्गा।
कुलानि खनद्यमुना वहति जलमसौ विसर्पति खनद्यमुना ४५
पवनैरजसा ध्वस्तं विधायां नीपमात्मरजसा ध्वस्तम्।
पश्य कान्ततरलतां स्थलीमितां वर्हियोगकान्तरलताम् ॥४६॥
वसने संस्तवन नवा जेतुमशममोघ संस्तवन नवा।
मधुकरविश्वसितानि स्मितमिह कुटजानि जनितविश्वसितानि॥४७

मारुतवेगादृगुणावनवशशिशिखण्डानां
शुक्लापाङ्गविडम्बितनवशशिशिखण्डानाम्।
संघाः शिखिनां शान्ताः शङ्के कायन्ते
स्थलघनमिति मन्वानाः शङ्के कायन्ते ॥४८॥

पश्य शिला. शैलेशिमशुभावचमानौ
यान्यधुमुखवर्हिणतामभावचमानौ।
अमना शमितरिपुस्तोऽस्तुंगारोहित्वं
याचितद्रवाम्बुनादैः शृङ्गारोहित्वम् ॥४९॥

नदति जलदैर्निदाघे सारङ्गोपास्ते
विभ्रति केतकमवनेःसारङ्गोपास्ते।
संप्रत्ययमकालो न वाहिनीपानां
स्वम्भुखसुरभीनां च श्रीर्नवा हि नीपानाम् ॥५०॥

इत्याह पीतवाससमायतनेत्रस्तं
कंसासुरात्पशुमतामायतनेत्रस्तम्।
हसितातां विमलतया स हली लाजानां
छायां विकिरन्दशनैः सह लीलाजानाम् ॥५१॥

इति श्रीवृन्दावनं नाम यमककाव्यं
मानाङ्ककृतं समाप्तम्।

# विद्यासुन्दरम् ।

कालिन्दीतटसन्निधावुपवने गोपाङ्गनालिङ्गन-
क्रीडाकर्षणचुम्बनादिरसितः संमूर्च्छितो वेणुना ।
स्थित्वा कल्पमहीरुहाश्रितलतावासे सुपुष्पान्विते
नानाभूषणभूषितो विहसितः कृष्णः प्रसन्नोऽस्तु ते ॥ १ ॥

राजात्मजे कामकलाकलापे संगीतविद्यारसिकेऽम्बुजाक्षि ।
हेमप्रभे पीननितम्बबिम्बे बिम्बोष्ठि रम्भोरु मयि प्रसीद ॥२॥

गिरौ समाकर्ण्य मयूरनादं जगाद विद्या वचसा कुमारम् ॥
पक्षेन कोऽयं वद रौति मेघे मधुस्वरं प्राणवरो यदि स्याः ॥३

गोमध्यमध्ये मृगगोधरे हे सहस्रगोभूषणकिङ्कराणाम् ।
नादेन गोमच्छिखरेषु मत्ता नदन्ति गोकर्णशरीरभक्षाः ॥४॥

स्वर्योनिभक्षध्वजसम्भवाना न् श्रुत्वा निनादं गिरिगह्वरस्थः ।
तमोऽरिविम्बप्रतिविम्बधारी रराव कान्ते पवनाशनाशः ॥५॥

बालेऽबलारत्नदयार्द्रचित्ते
प्राणेश्वरि श्रीमति सुप्रसन्ने ।
दासोऽस्मि ते सुन्दरि राजपुत्त्रि
प्राणानि रक्षस्व हि मे मृगाक्षि ॥ ६ ॥

हे पान्थ चिन्ताकुलितातिमूढः
संस्तौषि किं मामबलां कृशाङ्गीम् ।
अर्थं यदि प्रार्थयसे भजेथं
मोक्षञ्च लक्ष्मीपतिमम्बुजाक्षम् ॥७॥

धनं त्वमेवात्र सुवर्णवर्णे! स्त्रीरत्नभूते! मम रत्नभूषा।
सेवापि ते भूपतिजे! प्रसन्ने! सौख्यप्रदे! मोक्षदवासुदेवः॥८॥
प्रिये! सदा पूर्णतरं मनोहरं ते निष्कलङ्कं सुखचन्द्रमण्डलम्॥
विलोक्य सव्रीड़तया निशापतिर्गतः प्रतप्तोजलधेर्जलान्तरम्॥९॥

किं केतकीपरिमलोत्थितगन्धलुब्धो
गुञ्जन् भ्रमन् भ्रमर वाञ्छसि रन्तुमेताम्।
यत् कण्टकैः परिवृतामतुलामगम्यां
संरचितां व्रज निकुञ्जलतां सपुष्पाम्॥१०॥

यत् केतकीकुसुमसौरभगन्धलुब्धो
भृङ्गस्तदर्पितरसोदितचित्तवृत्तिः।
किं कण्टकैर्भवतु दुर्गम एव किंवा
जानाति सुभ्र! वरकुञ्जलतां न चैच्छत्॥११॥

त्वदर्त्तुल स्थलसुवर्णकान्ति रम्यस्तनश्रीफलयुग्ममेतत्।
दृष्ट्वा वने श्रीफलसङ्कुलं किं लज्जाभिरालम्बितमेव वृक्षे॥१२

हे कोकिलाखिललतासु फलानि सन्ति
संत्यज्य तानि ननु चूतलतां सपुष्पाम्।
किं काङ्क्षसीह रमितुं फलभोक्तुकामः
न श्लाघसे नृपतिसेवकभीषणीयाम्॥१३॥

यश्चातकोऽन्यानि जलानि हित्वा
धाराजले प्राप्तमतिं करोति।
तथा पिकश्चूतफलानि तानि
रम्याणि दृष्ट्वान्यफलं जहाति॥१४॥

विचक्षणे ! पद्मिनि ! पद्मगन्धे !
प्रमत्तमातङ्गमतेऽनुरक्ते ।
कृपात्मजे ! जीवय मा मनोज्ञे !
मनोजबाणव्रणखिन्नगात्रम् ॥ १५ ॥

मृदादिपात्रे सलिलं यथा स्यात्
तृष्णापहरं स्वादु सुशीतलञ्च ।
सुवर्णरत्नैरपि निर्म्मिते तु
गतं सुपात्रेऽम्बु तथा न किं स्यात् ॥ १६ ॥

सद्धेमरत्नचयनिर्म्मितवारिपात्रे
गाङ्गं सुनिर्म्मलहिमं परमं सुरम्यम् ।
कर्पूरवासितजलं सुखदं यथा स्यात्
कौपं पयः किमु भवेच्च तथाविधानम् ॥ १७ ॥

वलित्रयाबद्धसुसूक्ष्ममध्ये !
विशालवक्षोधरमन्दरूपे ! ।
मनोजबाणौघविशीर्णगात्र-
मनुग्रहं मां कुरु सम्प्रति त्वम् ॥ १८ ॥

कन्दर्पबाणावशचित्तवृत्ते !
किमर्थमेवं वदसि स्मरार्त्त ! ।
ज्ञातव्यमेवं यदि मे च पिता
कथं त्वया कामुक ! जीवितव्यम् ॥ १९ ॥

जघान बाणैर्दशभिर्दशास्य-शिरांसि सीताहरणे स रामः ।
त्वदङ्गसङ्गाय सदानुरक्तो प्रयातु मे मस्तकमेकमेव ॥ २० ॥

स्वरूपसन्दर्शनमेव देहि चक्षुर्द्वयं मे सफलीकुरुष्व ।
तपःकृतं येन नरोत्तमेन तेनाङ्गसङ्गः स्तव लभ्यते च ॥२१॥
प्रपूर्य्यते किं ननु दर्शनेन विनापि कुक्षिर्वरभोजनेन ।
सखण्डमारीचपयोभवेन रसान्वितस्वादुसुधोपमेन ॥ २२ ॥

भो देवि ! सुभ्रु, कृशशीतलकोमलाङ्गि !
नानाविभूषणविभूषितचारुगात्रि ।
आज्ञां विधेहि किमहं करवाणि हृद्ये
प्राणप्रदेऽद्य परिपूरय मेऽभिलाषम् ॥ २३ ॥

विद्याविनोदरसिके ! सुरतैकपात्रे !
सर्व्वाङ्गसुन्दरि ! धराधिपतिप्रसूते ।
यद्यस्ति मेऽद्य सदये न दया तवैव
त्वत्प्राप्तये सुरसरित्सु तनुं त्यजामि ॥ २४ ॥

सुरत्नकैरेष विनोदसौधः
सुदुर्गमोऽन्तःपुरचारिभिश्च ।
सखीजनैरिङ्गितहेत्वभिज्ञैः
कथं हि ते वाञ्छितसिद्धिरस्तु ॥ २५

प्रसन्नतायां त्वयि राजकन्ये !
भवेत् सुसिद्धिर्म्मम वाञ्छितस्य ।
अभीष्टदा कल्पलतेव भामि
सुकेशि ! चिन्तामणिरेव किं त्वम् ॥ २६ ॥

मृदुलकनककान्ति श्वाससौरभ्यरम्यं
वदनकमलमेतन्नत्वमत्तद्विरेफम् ।

तव किमु सुसमीक्ष्य व्रीड़या पद्मवृन्दम्
सरसि सलिलपूर्णे मर्त्तुकामं विवेश ॥ २७ ॥

ज्योत्स्ना दिवं गच्छति वाञ्छितस्य
सिद्धिर्भवेत् कर्म्मबलेन पुंसाम्।
पुनः पुनर्व्वाक्यमिदं सुलभ्यम्
बुभुक्षितः किं द्विकरेण भुङ्क्ते ॥ २८ ॥

प्राणाधिके ! प्रियतमे ! तव रूपरज्जु-
बद्धोऽस्मि संप्रति कथं भवने वसामि।
राजात्मजे ! त्वमसि सुन्दरि कर्म्मरूपा
त्वत्प्रीतिरम्यसुरतैर्म्मम कार्य्यसिद्धिः ॥ २९ ॥

चन्द्रानने ! श्रीफलपीनतुङ्ग-
रम्यस्तनि ! स्मेरसुधांशुवक्त्रे।
विद्याविनोदे ! सुविचक्षणा त्वं
स्त्रीरत्नभूते ! मयि भोः प्रसीद ॥ ३० ॥

कामाभिराम कामार्त्त प्रीतिविश्रम्भभाजनम्।
साकं सख्या समागच्छ त्यक्तमार्गोऽन्यरूपधृक् ॥ ३१ ॥

अद्यैव पुण्यदिवसो मम देवि ! बाले !
त्वत्पादपङ्कजयुगं ह्यवलोक्यते यत्।
रम्यातिपीनजघनस्तनि ! सेवकं मां
मुग्धे ! विधेहि ! सदयेऽधरसीधुलभ्यम् ॥ ३२ ॥

गुणान्तरस्यैव विधानमत्र
त्वं निर्म्मिता देवि ! तथा विधात्रा।

विधेस्तु जानामि सुकौशलत्वं
त्वद्रूपकल्पा यदि दृश्यतेऽन्या ॥२३॥
उक्तं त्वया मदनसुन्दर! पूर्वमस्मत्-
सन्दर्शनाय ननु साम्प्रतमेव दृष्टम्।
गच्छ स्वकीयभवनं त्वरितञ्च पश्य
प्राणेश्वरीं तव मनोरथसिद्धिरस्तु ॥२४॥
त्वमेव मे भूपतिजे! निवास-
स्त्वमेव जीवेश्वरि! नास्ति मेऽन्या।
प्रसन्नता ते सकलेष्टसिद्धि-
र्मनोजसम्मोहिनि! मामव त्वम् ॥२५॥
तव नयनकटाक्षक्षिप्तबाणव्रणार्त्तां
मम तनुमनुरक्ते! जीवय त्वौषधेन।
त्वदधरमधुपानं क्षेममेकं परन्तु
स्तनजघनविलग्नालिङ्गनं गात्रलेपः ॥२६॥
क्रीड़ार्थं मदनातुरा प्रियतमा सञ्जातलज्जादरा
कान्तं केलिनिकेतनं नृपसुता नीत्वात्मशय्योपरि।
संस्थाप्यागुरुचन्दनं सुकुसुमं कर्पूरपूगं पुरो-
दत्वा प्रीतिसखीजनैः प्रहर्षिता कान्तेन सम्मानिता ॥२७॥
सव्रीड़ां च्छि विनिर्गतां प्रियसखीं दृष्ट्वा स कामातुर-
स्तस्याः पीनघनस्तनोरुयुगलादाकृष्य चेलांशुकम्।
कृत्वालिङ्गनचुम्बनं नृपसुतां पीत्वाधरं ताड़नं
मन्दं दन्तनखक्षतानि कुरुते क्षोभञ्च नीव्यास्ततः ॥२८॥

दृष्टं तज्जघनस्थलं स्तनयुगं लज्जाभरव्याकुला
बाला सत्कबरीसुपुष्पविलसन्मालाहते दीपके।
चन्द्रस्तसुतेजसा समभवद्दीपोपमेन स्फुटं
दृष्ट्वाकान्तिगुणाधिकं स्मितमुखी सा त्यक्तलज्जाभवत् ॥३९॥
सत्पानं सुमनः स्रजश्च मधुरालापश्च पादद्वये
सौवर्णध्वनि नूपुरद्वयमिदं कर्पूरपर्णानि च।
कर्पूरागुरुचन्दनादिरचनासीत्कारनादाः कथा
एतान्याभरणानि किं निधुवने प्रोत्साहयन्ति स्मरम् ४०
स्फङ्गारमेतद्विपरीतमस्याः
समाचरन्त्या नृप राजपुत्र्याः।
कर्णे स्थिती कुण्डलकं प्रकम्पो
गण्डस्थलीं चुम्बति किं स कामी ॥४१॥
उत्तुङ्गस्तनयुग्मनिर्दयदृढाश्लेषेण ते.द्य प्रिये!
दन्ताघात नखक्षतैः सुमधुरालापैस्तथा चुम्बनैः।
नानाबन्धविनोदिताधिकरसेनैतत् क्षतं सार्थकं
गात्रं मे पुरुषायितेन शमिता कन्दर्पबाणव्यथा ॥४२॥
यद्वक्त्रं मुखरश्च कुण्डलयुगं लोलायमानं प्रिये!
निःशब्दं वहतीह नूपुरयुगं यद्यत्क्षतं भाविनि!।
निःशब्दा कटिमेखला घनरवं विस्मापयन्ती स्मरं
कुर्वन्ती जयडिण्डिमध्वनिमसौ स्फङ्गारसत्ताण्डवे ॥४३॥
त्वद्वक्त्रं रुचिरानने! त्वदधराद्दिव्यामृतं स्वादितं
याभ्यां ते नयने निचोलरहितं सर्वाङ्गमालोकितम्।

तौ हस्तौ जघनस्थलं स्तनयुगं ते सन्दधानौ च यौ
तज्जातं तयसाञ्जितं रतिसुखं प्राप्नाङ्गसङ्गस्व यत् ॥४४॥

त्वद्दिव्यपीनस्तनयुग्ममास्यं
त्वचारुरूपं जघनस्थलञ्च ।
त्वत्पीवरं रम्यनितम्बबिम्बं
मज्जीवनं जीवयतिस्म कान्ते ! ॥४५॥

निशावशेषे रमणाभिलाष-
चिह्निस्तवासीत् किमतःपरन्तु ।
यथा न जानाति जनोऽपि कश्चित्
तथा तथा याहि पुनस्त्वमेहि ॥४६॥

तवास्तु मेऽनुग्रह एष देवि !
त्वदङ्गसङ्गात् सफलं हि जन्म ।
न च प्रिये मां विजहासि नूनं
मनोव्यथाभैषजमत्र नास्ति ॥४७॥

न स्नानं नच भोजनं न पठनं नान्यत्र सौख्यं धृति-
र्नान्यस्त्रीजनसेवनं नच कथा निद्राविलासोद्यमः ।
किन्तु त्वां परिचिन्तयामि सततं ध्यानेन चेतःस्थितां
त्वद्भालोकनकामकेलिविधिना जीवामि कान्ते ! तव ॥४८

रात्रिः कालयुगोपमा मलयजो गन्धानिलः किं विषं
सोमः सूर्य्य इवाभवन्मलयजालेपः स्फुलिङ्गोपमः ।
तिक्तः सुस्वरगीतवाद्यपरभृत्यारावतादिध्वनि—
र्वज्रस्याहतिरेव कर्णयुगले विच्छेदतो मे तव ॥४९॥

चन्द्रो द्वादशभास्करः समभवद्वातिर्युगानां शतं
मिष्टं तिक्तरसं विलेपनमहो दीप्तानलो मे तव।
विच्छेदाम्मलयानिलः प्रियतमे! किं कालकूटः श्रुतौ
गीतादिध्वनिरेव वज्रसदृशोऽरण्यं विचित्रं गृहम्॥५०॥
मानं मानिनि! मुञ्च देवि! दयिते! मिथ्या वचः श्रूयते
किं कोपो निजसेवके यदि वचः सत्यं त्वया गृह्यते।
दोर्भ्यां बन्धनमाप्नुहि दन्तदलनं पीनस्तनास्फालनं
दोषश्चेन्मम ते कटाक्षविशिखैः शस्त्रैः प्रहारं कुरु॥५१॥

नानाकथा कौतुककेलिभिः सा सार्द्धं तु तेनैव रमेत नित्यम्।
हर्म्ये सुरम्ये रमणेन युक्ता वरासखीभिः परमप्रियाभिः॥५२॥

कामार्त्तो नवयौवनः कविवरो भूपालपुत्र्या समं
नानाबन्धविनोदनिर्भररतिक्रीड़ारसानन्दितः।
गत्वान्तःपुरतो बहिर्विलसितो राजाग्रतो नीयते
चौरो राजनियोजितैः सुपुरुषैश्चारैरुपायक्षमैः॥५३॥
राजा तानपि सेवकान् सुवसनालङ्कारभूषीकृतान्
कृत्वा प्राह विपक्षकं खरतरं खड्गं समानीय ते।
नीत्वा तं भवनाद्बहिर्विलसितं राजात्मजं साहसं
दृष्ट्वा संस्मर देवतामिति तदाप्यचुः स चौरोऽवदत्॥५४॥

इति विद्यासुन्दरं समाप्तम्।

---

सम्पूर्णम्।

# गीतगोविन्दे ।

सामोददामोदरः ।

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमै-
र्नक्तं भीरुरयं त्वमेव तदिमं राधे ! गृहं प्रापय ।
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुनाकूले रहः केलयः ॥१॥

वाग्देवताचरितचित्रितचित्तसद्मा
पद्मावतीचरणचारणचक्रवर्त्ती ।
श्रीवासुदेवरतिकेलिकथासमेतम्
एतं करोति जयदेवकविः प्रबन्धम् । २ ॥

यदि हरिस्मरणे सरसं मनो यदि विलासकलासु कुतूहलम् ।
मधुरकोमलकान्तपदावलीं शृणु तदा जयदेवसरस्वतीम् ॥३॥

वाचः पल्लवयत्युमापतिधरः सन्दर्भशुद्धिं गिरां
जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुते ।
शृङ्गारोत्तरसत्प्रमेयरचनैराचार्य्यगोवर्द्धनः
स्पर्द्धी कोऽपि न विश्रुतः श्रुतिधरो धोयी कविःक्ष्मापतिः ॥४॥

मालवगौड़रागेण रूपकतालेन गीयते ।

प्रलयपयोधिजले धृतवानसि वेदम् ।
विहितवहित्रचरित्रमखेदं
केशव ! धृतमीनशरीर जय 'जगदीश ! हरे' ध्रवम् ॥१॥

क्षितिरतिविपुलतरे तव तिष्ठति पृष्ठे
धरणिधरणकिणचक्रगरिष्ठे ।
केशव ! धृतकच्छपरूप ! 'जय जगदीश हरे' ॥२॥
वसति दशनशिखरे धरणी तव लग्ना
शशिनि कलङ्ककलेव निमग्ना ।
केशव ! धृतशूकररूप ! 'जय जगदीश हरे' ॥३॥
तव करकमलवरे नखमद्भुतशृङ्गं
दलितहिरण्यकशिपुतनुभृङ्गम् ।
केशव ! धृतनरहरिरूप 'जय जमदीश हरे' ॥४॥
छलयसि विक्रमणे बलिमद्भुतवामन-
पदनखनीरजनितजनपावन !
केशव ! धृतवामनरूप ! 'जय जगदीश हरे' ॥५॥
क्षत्रियरुधिरमये जगदपगतपापं
स्नपयसि पयसि शमितभवतापम् ।
केशव ! धृतभृगुपतिरूप ! 'जय जमदीश हरे' ॥६॥
वितरसि दिक्षु रणे दिक्पतिकमनीयं
दशमुखमौलिबलिं रमणीयम् ।
केशव ! धृतरामशरीर ! 'जय जगदीश हरे' ॥७॥
वहसि वपुषि विशदे वसनं जलदाभं
हलहतिभीतिमिलितयमुनाभम् ।
केशव ! धृतहलधररूप ! 'जय जगदीश हरे' ॥ ८ ॥
निन्दसि यज्ञविधेरहह ! श्रुतिजातं

सदयहृदयदर्शितपशुघातम् ।

केशव ! धृतबुद्धशरीर ! 'जय जगदीश हरे' ॥९॥

म्लेच्छनिवहनिधने कलयसि करवालं

धूमकेतुमिव किमपि करालम् ।

केशव ! धृतकल्किशरीर ! 'जय जगदीश हरे' ॥१०॥

श्रीजयदेवकवेरिदमुदितमुदारं, शृणु शुभदं सुखदं भवसारम् ।

केशव ! धृतदशविधरूप ! 'जय जगदीश हरे' ॥ ११ ॥

वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते

दैत्यान्दारयते बलिं छलयते क्षत्रक्षयं कुर्वते ।

पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते

म्लेच्छान्मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यन्नमः ॥१२॥

गुर्जरीरागनिःसारतालाभ्यां गीयते ।

श्रितकमलाकुचमण्डल ! धृतकुण्डल ए

कलितललितवनमाल ! 'जय जय देव ! हरे ध्रुवम्' ॥१॥

दिनमणिमण्डलमण्डन ! भवखण्डन ए

मुनिजनमानसहंस ! 'जय जय देव हरे' ॥ २ ॥

कालियविषधरगञ्जन ! जनरञ्जन ए

यदुकुलनलिनदिनेश ! 'जय जय देव हरे' ॥ ३ ॥

मधुमुरनरकविनाशन ! गरुड़ासन ए

सुरकुलकेलिनिदान ! 'जय जय देव हरे' ॥४॥

अमलकमलदललोचन ! भवमोचन ए

त्रिभुवनभवननिधान ! 'जय जय देव हरे' ॥५॥

जनकसुताकृतभूषण ! जितदूषण ए
समरशमितदशकण्ठ ! 'जय जय देव हरे' ॥ ६ ॥
अभिनवजलधरसुन्दर ! धृतमन्दर ए
श्रीमुखचन्द्रचकोर ! 'जय जय देव हरे' ॥ ७ ॥
तव चरणे प्रणता वयमिति भावय ए
कुरु कुशलं प्रणतेषु 'जय जय देव हरे' ॥८॥
श्रीजयदेवकवेरिदं कुरुते मुदम् ए
मङ्गलमुज्ज्वलगीति 'जय जय देव हरे' ॥ ९ ॥
पद्मापयोधरतटीपरिरम्भलग्न-
काश्मीरमुद्रितमुरो मधुसूदनस्य ।
व्यक्तानुरागमिव खेलदनङ्गखेद-
स्वेदाम्बुपूरमनुपूरयतु प्रियं वः ॥१०॥

वसन्तरागयतितालाभ्यां गीयते ।

वसन्ते वासन्तीकुसुमसुकुमारैरवयवै-
र्भ्रमन्तीं कान्तारे बहुविहितकृष्णानुसरणाम् ।
अमन्दं कन्दर्पज्वरजनितचिन्ताकुलतया
वलद्बाधां राधां सरसमिदमूचे सहचरी ॥ १ ॥
ललितलवङ्गलतापरिशीलनकोमलमलयसमीरे
मधुकरनिकरकरम्बितकोकिलकूजितकुञ्जकुटीरे ।
'विहरति हरिरिह सरसवसन्ते
नृत्यति युवतिजनेन समं सखि ! विरहिजनस्य दुरन्ते ध्रुवम्' ॥२॥

उन्मदमदनमनोरथपथिक-
वधूजनजनितविलापे।
अलिकुलसङ्कुलकुसुमसमूह-
निराकुलवकुलकलापे 'विहरति' ॥ ३ ॥
मृगमदसौरभरभसवशंवद-
नवदलमालतमाले।
युवजनहृदयविदारणमनसिज-
नखरुचिकिंशुकजाले 'विहरति' ॥ ४ ॥
मदनमहीपतिकनकदण्ड-
रुचिकेशरकुसुमविकासे।
मिलितशिलीमुखपाटलिपटल
कृतस्मरतूणविलासे 'विहरति' ॥५॥
विगलितलज्जितजगदवलोकन
तरुणकरुणकृतहासे।
विरहिनिकृन्तनकुन्तमुखाकृति-
केतकिदन्तुरिताशे 'विहरति' ॥ ६ ॥
माधविकापरिमलललिते नवमालतियातिसुगन्धौ।
मुनिमनसामपि मोहनकारिणि तरुणाकारणबन्धौ 'विहरति' ॥७
स्फुरदतिमुक्तलतापरिरम्भणमुकुलितपुलकितचूते।
वृन्दावनविपिने परिसरपरिगतयमुनाजलपूते 'विहरति' ॥८॥
श्रीजयदेवभणितमिदमुदयति हरिचरणस्मृतिसारं
सरसवसन्तसमयवनवर्णनमनुगतमदनविकारं 'विहरति' ॥९॥

दरविदलितमल्लीवल्लिचञ्चत्पराग-
प्रकटितपटवासैर्वासयन् काननानि ।
इह हि दहति चेतः केतकीगन्धबन्धुः
प्रसरदसमबाणप्राणवद्गन्धवाहः ॥ १० ॥

उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः
नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण-
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः ॥ ११ ॥

अनेकनारीपरिरम्भसम्भ्रमस्फुरन्मनोहारिविलासलालसम् ।
मुरारिमारादुपदर्शयन्त्यसौ सखी समक्षं पुनराह राधिकाम् ॥ १ ॥

रामकिरीरागयतितालाभ्यां गीयते ।

चन्दनचर्चितनीलकलेवरपीतवसनवनमाली
केलिचलन्मणिकुण्डलमण्डितगण्ड-
युगस्मितशाली 'हरिरिह मुग्धवधूनिकरे'
विलासिनि विलसति केलिपरे ध्रुवम् ॥ २ ॥

पीनपयोधरभारभरेण हरिं परिरभ्य सरागं
गोपवधूरनुगायति काचिदुदञ्चितपञ्चमरागं 'हरिरिह' ॥ ३ ॥

कापि विलासविलोलविलोचनखेलनजनितमनोजम् ।
ध्यायति मुग्धवधूरधिकं मधुसूदनवदनसरोजं 'हरिरिह' ॥ ४ ॥

कापि कपोलतले मिलिता लपितुं किमपि श्रुतिमूले ।
चारु चुचुम्ब नितम्बवती दयितं पुलकैरनुकूले 'हरिरिह' ॥ ५ ॥

केलिकलाकुतुकेन च काचिदमुं यमुनाजलकूले
मञ्जुलवञ्जलकुञ्जगतं विचकर्ष करेण दुकूले 'हरिरिह'॥ ६ ॥
करतलतालतरलवलयावलिकलितकलस्वनवंशे।
रासरसे सह नृत्यपरा हरिणा युवतिः प्रशशंसे 'हरिरिह'॥७॥
श्लिष्यति कामपि चुम्बति कामपि कामपि रमयति रामाम्।
पश्यति सस्मितचारुपरामपरामनुगच्छति वामां 'हरिरिह'॥८॥
श्रीजयदेवभणितमिदमद्भुतकेशवकेलिरहस्यम्।
वृन्दावनविपिने ललितं वितनोतु शुभानि यशस्यं 'हरिरिह'॥ ९॥
विश्वेषामनुरञ्जनेन जनयन्नानन्दमिन्दीवर-
श्रेणीश्यामलकोमलैरुपनयन्नङ्गैरनङ्गोत्सवम्।
स्वच्छन्दं व्रजसुन्दरीभिरभितः प्रत्यङ्गमालिङ्गितः
शृङ्गारः सखि! मूर्त्तिमानिव मधौ मुग्धो हरिः क्रीड़ति ॥१०॥
अद्योत्सङ्गवसद्भुजङ्गकवलक्लेशादिवेशाचलं
प्रालेयप्लवनेच्छयानुसरति श्रीखण्डशैलानिलः।
किञ्च स्निग्धरसालमौलिमुकुलान्यालोक्य हर्षोदया-
दुन्मीलन्ति कुहूःकुहूरितिकलोत्तालाः पिकानां गिरः ॥११॥
रासोल्लासभरेण विभ्रमभृतामाभीरवामभ्रुवा-
मभ्यर्णे परिरभ्य निर्भरमुरःप्रेमान्धया राधया।
साधु त्वद्वदनं सुधामयमिति व्याहृत्य गीतस्तुति-
व्याजादुद्भटचुम्बितस्मितमनोहारी हरिः पातु वः ॥१२॥

इति श्रीगीतगोविन्दे सामोददामोदरो नाम प्रथमः सर्गः।

# अक्लेशकेशवः।

विहरति वने राधा साधारणप्रणये हरौ
विगलितनिजोत्कर्षादीर्ष्यावशेन गतान्यतः।
क्वचिदपि लताकुञ्जगुञ्जन्मधुव्रतमण्डली
मुखरशिखरे लीना दीनाप्युवाच रहः सखीम् ॥१॥

गुर्जरीरागेण यतितालेन च गीयते।

सञ्चरदधरसुधामधुरध्वनिमुखरितमोहनवंशं
चलितदृगञ्चलचञ्चलमौलिकपोलविलोलवतंसम्।
"रासे हरिमिह विहितविलासं
स्मरति मनो मम कृतपरिहासं 'ध्रुवम्' ॥२॥
चन्द्रकचारुमयूरशिखण्डकमण्डलवलयितकेशं
प्रचुरपुरन्दरधनुरनुरञ्जितमेदुरमुदिरसुवेशं "रासे" ॥३॥
गोपकदम्बनितम्बवतीमुखचुम्बनलम्भितलोभम्।
बन्धुजीवमधुराधरपल्लवमुल्लसितस्मितशोभं "रासे" ॥४॥
विपुलपुलकभुजपल्लववलयितवल्लवयुवतिसहस्रम्।
करचरणोरसि मणिगणभूषणकिरणविभिन्नतमिस्रं "रासे" ॥५॥
जलदपटलचलदिन्दुविनिन्दकचन्दनतिलकललाटम्।
पीनपयोधरपरिसरमर्दननिर्दयहृदयकपाटं "रासे" ॥६॥
मणिमयमकरमनोहरकुण्डलमण्डितगण्डमुदारम्।
पीतवसनमनुगतमुनिमनुजसुरासुरवरपरिवारं "रासे" ॥७॥

विश्रद्दकदम्बतले मिलितं कलिकलुषभयं शमयन्तम्।
मामपि किमपि तरङ्गदनङ्गदृशा मनसा रमयन्तं 'रासे' ॥८॥
श्रीजयदेवभणितमतिसुन्दरमोहनमधुरिपुरूपम्।
हरिचरणस्मरणं प्रति सम्प्रति पुण्यवतामनुरूपम् 'रासे' ॥९॥

गणयति गुणग्रामं भ्रामं भ्रमादपि नेहते
वहति च परितोषं दोषं विमुञ्चति दूरतः।
युवतिषु वलत्तृष्णे कृष्णे विहारिणि मां विना
पुनरपि मनो वामं कामं करोति करोमि किम् ॥१॥

मालवगौड़रागेण एकतालीतालेन च गीयते।

निभृतनिकुञ्जगृहं गतया निशि रहसि निलीय वसन्तं
चकितविलोकितसकलदिशा रतिरभसभरेण हसन्तं।
"सखि हे केशिमथनमुदारं रमय मया सह
मदनमनोरथभावितया सविकार" ध्रुवम् ॥२॥
प्रथमसमागमलज्जितया पटुचाटुशतैरनुकूलम्।
मृदुमधुरस्मितभाषितया शिथिलीकृतजघनदुकूलं 'सखि हे' ॥३॥
किशलयशयननिवेशितया चिरमुरसि ममैव शयानम्।
कृतपरिरम्भणचुम्बनया परिरभ्य कृताधरपानं 'सखि हे' ॥४॥
अलसनिमीलितलोचनया पुलकावलिललितकपोलम।
श्रमजलसिक्तकलेवरया वरमदनमदादतिलोलम् 'सखि हे'॥ ५॥
कोकिलकलरवकूजितया जितमनसिजतन्त्रविचारम्।
श्लथकुसुमाकुलकुन्तलया नखलिखितघनस्तनभारम् 'सखि हे'॥६

चरणरणितमणिनूपुरया परिपूरितसुरतवितानम् ।
मुखरविशृङ्खलमेखलया सकचग्रहचुम्बनदानम् 'सखि हे'॥७॥
रतिसुखसमयरसालसया दरमुकुलितनयनसरोजम् ।
निःसहनिपतिततनुलतया मधुसूदनमुदितमनोजम् 'सखि हे'।८
श्रीजयदेवभणितमिदमतिशयमधुरिपुनिधुवनशीलम् ।
सुखमुत्कण्ठितगोपवधूकथितं वितनोतु सलीलम् 'सखि हे' ।९॥

हस्तस्रस्तविलासवंशमनृजुभ्रूवल्लिमद्बल्लवी
वृन्दोत्सारिदृगन्तवीक्षितमतिस्वेदार्द्रगण्डस्थलम् ।
मामुद्वीक्ष्य विलज्जितस्मितसुधामुग्धाननं कानने
गोविन्दं व्रजसुन्दरीगणवृतं पश्यामि हृष्यामि च ॥ १० ॥

दुरालोकस्तोकस्तवकनवकाशोकलतिका-
विकाशः कासारोपवनपवनोऽपि व्यथयति ।
अपि भ्राम्यद्भृङ्गीरणितरमणीया न मुकुल-
प्रसूतिश्चूतानां सखि ! शिखरिणीयं सुखयति ॥ ११ ॥

साकूतस्मितमाकुलाकुलगलद्धम्मिल्लमुल्लासित-
भ्रूवल्लीकमलीकदर्शितभुजामूलार्द्धदृष्टस्तनम् ।
गोपीनां निभृतं निरीक्ष्य दयिताकाङ्क्षश्चिरं चिन्तयन्
अन्तर्मुग्धमनोहरं हरतु वः क्लेशं नवः केशवः ॥१२॥

इति अक्लेशकेशवो नाम द्वितीयः सर्गः ।

---

# तृतीय सर्गः।

## मुग्ध मधुसूदनः।

कंसारिरपि संसारवासनाबद्धशृङ्खलाम्।
राधामाधाय हृदये तत्याज व्रजसुन्दरीः॥ १ ॥
इतस्ततस्तामनुसृत्य राधिकामनङ्गवाणव्रणखिन्नमानसः।
कृतानुतापः स कलिन्दनन्दिनीतटान्तकुञ्जे निषसाद माधवः॥२॥

गुर्ज्जरीरागयतितालाभ्यां गीयते।

मामियं चलिता विलोक्य वृतं वधूनिचयेन
सापराधतया मयापि न वारितातिभयेन।
"हरिहरि हतादरतया गता सा कुपितेव" ध्रुवम्॥३॥
किं करिष्यति किं वदिष्यति सा चिरं विरहेण।
किं धनेन जनेन किं मम जीवितेन गृहेण 'हरिहरि'॥४
चिन्तयामि तदाननं कुटिलभ्रु कोपभरेण।
शोणपद्मिवोपरि भ्रमताकुलं भ्रमरेण 'हरिहरि' ॥५ ॥
तामहं हृदि सङ्गतामनिशं भृशं रमयामि।
किं वनेऽनुसरामि तामिह किं वृथा विलपामि 'हरिहरि'॥६॥
तन्वि! खिन्नमसूयया हृदयं तवाकलयामि।
तन्न वेद्मि कुतो गतासि न तेन तेऽनुनयामि 'हरिहरि'॥ ७ ॥
दृश्यसे पुरतो गतागतमेव मे विदधासि।
किं पुरेव ससम्भ्रमं परिरम्भणं न ददासि 'हरिहरि' ॥८॥

क्षम्यतामपरं कदापि तवेदृशं न करोमि ।
देहि सुन्दरि ! दर्शनं मम मन्मथेन दुनोमि 'हरिहरि' ॥९॥
वर्णितं जयदेवकेन हरेरिदं प्रवणेन ।
केन्दुविल्वसमुद्रसम्भवरोहिणीरमणेन 'हरिहरि' ॥ १० ॥
हृदि बिसलताहारो नायं भुजङ्गमनायकः
कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः ।
मलयजरजो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्यानङ्ग ! क्रुधा किमु धावसि ॥११ ॥
पाणौ मा कुरु चूतसायकममुं मा चापमारोपय
क्रीडानिर्ज्जितविश्व ! मूर्च्छितजनाघातेन किं पौरुषम् ।
तस्या एव मृगीदृशो मनसिजप्रेङ्खत्कटाक्षाशुग
श्रेणीजर्ज्जरितं मनागपि मनो नाद्यापि सन्धुक्षते ॥ १२ ॥

भ्रूपल्लवं धनुरपाङ्गतरङ्गितानि
बाणा गुणः श्रवणपालिरिति स्मरेण ।
तस्यामनङ्गजयजङ्गमदेवताया-
मस्त्राणि निर्ज्जितजगन्ति किमर्पितानि ॥ १३ ॥

भ्रूचापे निहितः कटाक्षविशिखो निर्म्मातु मर्म्मव्यथां
श्यामात्मा कुटिलः करोतु कबरीभारोऽपि मारोद्यमम् ।
मोहं तावदयञ्च तन्वि ! तनुतां बिम्बाधरो रागवान्
सद्वृत्तस्तनमण्डलस्तव कथं प्राणैर्मम क्रीड़ति ॥ १४ ॥
तानि स्पर्शसुखानि ते च तरलाः स्निग्धादृशो-
र्विभ्रमास्तद्वक्त्राम्बुजसौरभं स च सुधास्यन्दी गिरां वक्रिमा ।

सा बिम्बाधरमाधुरीति विषयासङ्गेऽपि चेन्मानसम् ।
तस्यां लग्नसमाधि हन्त विरहव्याधिः कथं वर्त्तते ॥ १५ ॥
तिर्य्यक्कण्ठविलोलमौलितरलोत्तंसस्य वंशोच्चरद्
गीतस्थानकृतावधानललनालक्षैर्न संलक्षिताः ।
संमुग्धं मधुसूदनस्य मधुरे राधामुखेन्दौ मृदु-
स्पन्दं कन्दलिताश्चिरं दधतु वः क्षेमं कटाक्षोर्म्मयः ॥ १६ ॥
इति श्रीगीतगोविन्दे मुग्धमधुसूदनो नाम तृतीय सर्गः ।

---

## स्निग्धमधुसूदनः ।

यमुनातीरवानीरनिकुञ्जे मन्दमास्थितम् ।
प्राह प्रेमभरोद्भ्रान्तं माधवं राधिकासखी ॥ १ ॥
कर्णाटरागैकतालीतालाभ्यां गीयते ॥

निन्दति चन्दनमिन्दुकिरणमनुविन्दति खेदमधीरं
व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीरं
"सा विरहे तव दीना ।
माधव मनसिजविशिखभयादिव भावनया त्वयि लीना" "ध्रुवम्"
अविरलनिपतितमदनशरादिव भवदवनाय विशालम् ।
स्वहृदयमर्म्मणि वर्म्म करोति सजलनलिनीदलजालं "सा विरहे"
कुसुमविशिखशरतल्पमनल्पविलासकलाकमनीयम् ।
व्रतमिव तव परिरम्भसुखाय करोति कुसुमशयनीयं "सा वि रहे"

वहति च वलितविलोचनजलधरमाननकमलमुदारम् ।
विधुमिव विकटविधुन्तुददन्तदलनगलितामृतधारं "सा विरहे"
विलिखति रहसि कुरङ्गमदेन भवन्तमसमशरभूतम् ।
प्रणमति मकरमधो विनिधाय करे च शरं नवचूतं "सा विरहे"
प्रतिपदमिदमपि निगदति माधव तव चरणे पतिताहम् ।
त्वयि विमुखे मयि सपदि सुधानिधिरपि तनुते तनुदाहं "सा विरहे"

ध्यानलयेन पुरः परिकल्प्य
भवन्तमतीव दुरापम् ।
विलपति हसति विषीदति रोदिति
चञ्चति मुञ्चति तापं "सा विरहे" ॥ ८ ॥

श्रीजयदेवभणितमिदमधिकं यदि मनसा नटनीयम् ।
हरिविरहाकुलवल्लवयुवतिसखीवचनं पठनीयं "सा विरहे" ॥

आवासो विपिनायते प्रियसखीमालापि जालायते
तापोऽपि श्वसितेन दावदहनज्वाला कलापायते ।
सापि त्वद्विरहेण हन्त हरिणीरूपायते हा कथं
कन्दर्पोऽपि यमायते विरचयन् शार्दूलविक्रीडितम् ॥ १० ॥

देशाखरागैकतालीतालाभ्यां गीयते ॥

स्तनविनिहितमपि हारमुदारम् ।
सा मनुते कृशतनुरिव भारम् ।
"राधिका तव विरहे केशव" ध्रुवम् ॥ ११ ॥
सरसमसृणमपि मलयजपङ्कम् ।
पश्यति विषमिव वपुषि सशङ्कं "राधिका" ॥ १२ ॥

श्वसितपवनमनुपमपरिणाहम् ।
मदनदहनमिव वहति सदाहं "राधिका" ॥ १३ ॥
दिशि दिशि किरति सजलकणजालम् ।
नयननलिनमिव विगलितनालं "राधिका" ॥१४॥
नयनविषयमपि किशलयतल्पम् ।
गणयति विहितहुताशविकल्पं "राधिका" ॥ १५ ॥
त्यजति न पाणितलेन कपोलम् ।
बालशशिनमिव सायमलोलं "राधिका" ॥ १६ ॥
हरिरिति हरिरिति जपति सकामम् ।
विरहविहितमरणेव निकामं "राधिका" ॥ १७ ॥
श्रीजयदेवभणितमिति गीतम् ।
सुखयतु केशवपदमुपनीतं "राधिका" ॥ १८ ॥

सा रोमाञ्चति सीत्करोति विलपत्युत्कम्पते ताम्यति
ध्यायत्युद्भ्रमति प्रमीलति पतत्युद्याति मूर्च्छत्यपि ।
एतावत्यतनुज्वरे वरतनुर्जीवेन्न किं ते रसात्
स्वर्वैद्यप्रतिम प्रसीदसि यदि त्यक्तोऽन्यथा हस्तकः ॥१९॥

स्मरातुरां दैवतवैद्यहृद्य
त्वदङ्गसङ्गामृतमात्रसाध्याम् ।
विमुक्तबाधां कुरुषे न राधाम्
उपेन्द्रवज्रादपि दारुणोऽसि ॥ २० ॥

कन्दर्पज्वरसंज्वरातुरतनोराश्चर्य्यमस्याश्चिरं
चेतश्चन्दनचन्द्रमःकमलिनीचिन्तासु सन्ताम्यति ।

किन्तु क्षान्तिवशेन शीतलतनुं त्वामेकमेव प्रियं
ध्यायन्ती रहसि स्थिता कथमपि क्षीणाक्षणं प्राणिति॥२१॥

क्षणमपि विरहः पुरा न सेहे
नयननिमीलनखिन्नया यया ते ।
श्वसिति कथमसौ रसालशाखां
चिरविरहेण विलोक्य पुष्पिताग्राम् ॥ २२ ॥

वृष्टिव्याकुलगोकुलावनवशादुद्धृत्य गोवर्द्धनं
बिभ्रद्बल्लवबल्लभाभिरधिकानन्दाच्चिरं चुम्बितः ।
दर्पेणेव तदर्पिताधरतटीसिन्दूरमुद्राङ्किती
बाहुर्गोपतनोस्तनोतु भवतां श्रेयांसि कंसद्विषः ॥ २३ ॥

इति श्रीगीतगोविन्दे स्निग्धमधुसूदनो
नाम चतुर्थः सर्गः ॥ ४ ॥

---

## साकांक्षपुण्डरीकाक्षः ।

अहमिह निवसामि याहि राधां
अनुनय मद्वचनेन चानयेथाः ।
इति मधुरिपुणा सखी नियुक्ता
स्वयमिदमेत्य पुनर्जगाद राधाम् ॥ १ ॥

देशीवराडीरागेण रूपकतालेन गीयते ।

वहतिमलयसमीरे मदनमुपनिधाय

स्फुटति कुसुमनिकरे विरहिहृदयदलनाय

"तव विरहे वनमाली सखि! सीदति" ध्रुवम्॥ २ ॥

दहति शिशिरमयूखे मरणमनुकरोति

पतति मदनविशिखे विलपति विकलतरोऽति "तव विरहे" ॥३॥

ध्वनति मधुपसमूहे श्रवणमपिदधाति ।

मनसि वलितविरहे निशि निशि रुजमुपयाति "तव विरहे" ४

वसति विपिनविताने त्यजति ललितधाम ।

लुठति धरणिशयने बहु विलपति तव नाम "तव विरहे" ॥५॥

भणति कविजयदेवे विरहिविलसितेन ।

मनसि रभसविभवे हरिरुदयतु सुकृतेन "तव विरहे" ॥६॥

पूर्वं यत्र समं त्वया रतिपतेरासादिताः सिद्धय-

स्तस्मिन्नेव निकुञ्जमन्मथमहातीर्थे पुनर्माधवः ।

ध्यायंस्त्वामनिशं जपन्नपि तवैवालापमन्त्रावलीं

भूयस्त्वत्कुचकुम्भनिर्भरपरीरम्भामृतं वाञ्छति ॥ ७ ॥

गुर्जरीरागेण एकतालीतालेन गीयते ।

रतिसुखसारे गतमभिसारे मदनमनोहरवेशम् ।

न कुरु नितम्बिनि! गमनविलम्बनमनुसर तं हृदयेशम् ।

"धीरसमीरे यमुनातीरे वसति वने वनमाली" ध्रुम् ॥ ८ ॥

नामसमेतं कृतसङ्केतं वादयते मृदु वेणुम् ।

बहु मनुते ननु ते तनुसङ्गतपवनचलितमपि रेणुं "धीरसमीरे" ९

पतति पतत्रे विचलति पत्रे शङ्कितभवदुपयानम् ।

रचयति शयनं सचकितनयनं पश्यति तव पन्थानं "धीरसमीरे"

मुखरमधीरं त्यज मञ्जीरं रिपुमिव केलिसुलोलम् ।
चल सखि कुञ्जं सतिमिरपुञ्जं शीलय नीलनिचोलं"धीरसमीरे"
उरसि मुरारेरुपहितहारे घन इव तरलबलाके ।
तड़िदिव पीते रतिविपरीते राजसि सुकृतविपाके"धीरसमीरे"
विगलितवसनं परिहृतरसनं घटय जघनमपिधानम् ।
किशलयशयने पङ्कजनयने निधिमिव हर्षनिधानं"धीरसमीरे"
हरिरभिमानी रजनिरिदानीमियमपि याति विरामम् ।
कुरु मम वचनं सत्वररचनं पूरय मधुरिपुकामं"धीरसमीरे"
श्रीजयदेवे कृतहरिसेवे भणति परमरमणीयम् ।
प्रमुदितहृदयं हरिमतिसदयं नमत सुकृतकमनीयं"धीरसमीरे"

विकिरति मुहुःश्वासानाशाः पुरो मुहुरीक्षते
प्रविशति मुहुः कुञ्जं गुञ्जन्मुहुर्बहु ताम्यति ।
रचयति मुहुः शय्यां पर्य्याकुलं मुहुरीक्षते
मदनकदनक्लान्तः कान्ते प्रियस्तव वर्त्तते ॥ १६ ॥

त्वद्वाक्येन समं समग्रमधुना तिग्मांशुरस्तं गतो
गोविन्दस्य मनोरथेन च समं प्राप्तं तमः सान्द्रताम् ।
कोकानां करुणस्वनेन सदृशी दीर्घा मदभ्यर्थना
तन्मुग्धे विफलं विलम्बनमसौ रम्योऽभिसारक्षणः ॥१७॥

आश्लेषादनु चुम्बनादनु नखोल्लेखादनु स्वान्तज-
प्रोद्बोधादनु सम्भ्रमादनु रतारम्भादनु प्रीतयोः ।
अन्यार्थं गतयोर्भ्रमान्मिलितयोः सम्भाषणैर्जानतो-
र्दम्पत्योरिह को न को न तमसि व्रीड़ाविमिश्रो रसः १८

सभयचकितं विन्यस्यन्तीं दृशौ तिमिरे पथि
प्रतितरु मुहुः स्थित्वा मन्दं पदानि वितन्वतीम् ।
कथमपि रहः प्राप्तामङ्गैरनङ्गतरङ्गिभिः
सुमुखिसुभगः पश्यन् स त्वामुपैतु कृतार्थाम् ॥ १९ ॥
राधामुग्धमुखारविन्दमधुपस्त्रैलोक्यमौलिस्थली
नेपथ्योचितनीलरत्नमवनीभारावतारान्तकः ।
स्वच्छन्दं व्रज सुन्दरीजनमनस्तोषप्रदोषश्चिरं
कंसध्वंसनधूमकेतुरवतु त्वां देवकीनन्दनः ॥ २० ॥

इति श्रीगीतगोविन्देऽभिसारिकावर्णने साकाङ्क्ष
पुण्डरीकाक्षो नाम पञ्चमः सर्गः ॥ ५ ॥

---

## धृष्टवैकुण्ठः ।

अथ तां गन्तुमशक्तां चिरमनुरक्तां लतागृहे दृष्ट्वा
तच्चरितं गोविन्दे मनसिजमन्दे सखी प्राह ॥ १ ॥

गोण्डकिरीरागेण रूपकतालेन गीयते

पश्यति दिशि दिशि रहसि भवन्तम् ।
तदधरमधुरमधूनि पिवन्तं
"नाथ हरे सीदति राधा वासगृहे" । ध्रुवम् ॥ २ ॥
त्वदभिसरणरभसेन वलन्ती
पतति पदानि कियन्ति चलन्ती "नाथ हरे" ॥ ३ ॥

विहितविशदविसकिसलयवलया।
जीवति परमिह तव रतिकलया। "नाथ हरे" ॥ ४ ॥
मुहुरवलोकितमण्डनलीला।
मधुरिपुरहमिति भावनशीला। "नाथ हरे" ॥ ५ ॥
त्वरितमुपैति न कथमभिसारम्।
हरिरिति वदति सखीमनुवारम्। "नाथ हरे" ॥ ६ ॥
श्लिष्यति चुम्बति जलधरकल्पम्।
हरिरुपगत इति तिमिरमनल्पम्। "नाथ हरे" ॥ ७ ॥
भवति विलम्बिनि विगलितलज्जा।
विलपति रोदिति वासकसज्जा। "नाथ हरे" ॥ ८ ॥
श्रीजयदेवकवेरिदमुदितम्।
रसिकजनं तनुतामतिमुदितम् "नाथ हरे" ॥ ९ ॥

विपुलपुलकपालिः स्फीतसीत्कारमन्त-
र्जनितजड़िम काकुव्याकुलं व्याहरन्ती।
तव कितव विधायामन्दकन्दर्पचिन्तां
रसजलधिनिमग्ना ध्यानलग्ना मृगाक्षी ॥ १० ॥

अङ्गेष्वाभरणं करोति बहुशः पत्रेऽपि सञ्चारिणि
प्राप्तं त्वां परिशङ्कते वितनुते शय्यां चिरं ध्यायति।
इत्याकल्पविकल्पतल्परचनासङ्कल्पलीलाशत-
व्यासक्तापि विना त्वया वरतनुर्नैषा निशां नेष्यति ॥ ११ ॥

किं विश्राम्यसि कृष्णभोगिभवने भाण्डीरभूमीरुहि
भ्रातर्याहि न दृष्टिगोचरमितः सानन्दनन्दास्पदम्।

राधाया वचनं तदध्वगमुखान्नन्दान्तिके गोपतो
गोविन्दस्य जयन्ति सायमतिथेः सुस्निग्धगर्भा गिरः ॥१२॥
इति श्रीगीतगोविन्दे वासकसज्जावर्णने धृष्टवैकुण्ठो
नाम षष्ठः सर्गः ॥ ६ ॥

---

## नागरनारायणः ।

अत्रान्तरे च कुलटाकुलवर्त्मपात
सञ्जातपातक इव स्फुटलाञ्छनश्रीः ।
वृन्दावनान्तरमदीपयदंशुजालै
र्दिक्सुन्दरीवदनचन्दनविन्दुरिन्दुः ॥ १ ॥
प्रसरति शशधरबिम्बे विहितविलम्बे च माधव विधुरा
विरचित विविधविलापं सा परितापं चकारोच्चैः ॥ २ ॥
मालवरागयतितालाभ्यां गीयते ।
कथितसमयेऽपि हरिरहह ! न ययौ वनं
मम विफलमिदममलरूपमपि यौवनम् ।
"यामि हे कमिह शरणं
सखीजनवचनवञ्चिता" । ध्रुवं ॥ ३ ॥
यदनुगमनाय निशि गहनमपि शीलितं
तेन मम हृदयमिदमसमशरकीलितं "यामि हे" ॥ ४ ॥
मम मरणमेव वरमतिवितथकेतना

किमिह विषहामि विरहानलमचेतना "यामि हे" ॥५॥
मामहह विधुरयति मधुरमधुयामिनी
कापि हरिमनुभवति कृतसुकृतकामिनी "यामि हे" ॥६॥
अहह ! कलयामि वलयादिमणिभूषणम् ।
हरिविरहदहनवहनेन बहुदूषणं "यामि हे" ॥ ७ ॥
कुसुमसुकुमारतनुमतनुशरलीलया ।
स्रगपि हृदि हन्ति मामतिविषमशीलया "यामि हे" ॥८॥
अहमिह निवसामि नगणितवनवेतसा ।
स्मरति मधुसूदनो मामपि न चेतसा "यामि हे" ॥९॥
हरिचरणशरणजयदेवकविभारती
वसतु हृदि युवतिरिव कोमलकलावती "यामि हे" ॥१०॥
तत् किं कामपि कामिनीमभिसृतः किंवा कलाकेलिभि
र्बद्धो बन्धुभिरन्धकारिणि वनाभ्यर्णे किमुद्भ्राम्यति ।
कान्तः क्लान्तमना मनागपि पथि प्रस्थातुमेवाक्षमः
सङ्केतीकृतमञ्जुवञ्जुललताकुञ्जेऽपि यन्नागतः ॥ ११ ॥
अथागतां माधवमन्तरेण सखीमियं वीक्ष्य विषादमूकाम् ।
विशङ्कमाना रमितं कयापि जनार्दनं दृष्टवदेतदाह ॥१२॥
वसन्तरागयतितालाभ्यां गीयते ।
स्मरसमरोचितविरचितवेशा गलितकुसुमदरविलुलितकेशा ।
कापि मधुरिपुणा विलसति युवतिरधिकगुणा ॥ १२ ॥
हरिपरिरम्भणवलितविकारा
कुचकलशोपरितरलितहारा । "कापि" ॥ १४ ॥

विचलदलकललितानन्दचन्द्रा।
तदधरपानरभसकृततन्द्रा। "कापि" ॥ १५ ॥
चञ्चलकुण्डलदलितकपोला।
मुखरितरसनजघनगतिलोला। "कापि" ॥ १६ ॥
दयितविलोकितलज्जितहसिता।
बहुविधकूजितरतिरसरसिता। "कापि" ॥ १७ ॥
विपुलपुलकपृथुवेपथुभङ्गा।
श्वसितनिमीलितविकसदनङ्गा। "कापि" ॥ १८ ॥
श्रमजलकणभरसुभगशरीरा।
परिपतितोरसि रतिरणधीरा। "कापि" ॥ १९ ॥
श्रीजयदेवभणितहरिरमितम्।
कलिकलुषं जनयतु परिशमितं। "कापि" ॥ २० ॥

विरहपाण्डुमुरारिमुखाम्बुज द्युतिरयं तिरयन्नपि वेदनाम्।
विधुरतीव तनोतिमनोभुवः सुहृदये हृदये मदनव्यथाम् ॥२१॥

गुर्जरीरागैकतालीतालेन गीयते।

समुदितमदने रमणीवदने चुम्बनवलिताधरे।
मृगमदतिलकं लिखति सपुलकं मृगमिव रजनीकरे।
"रमते यमुनापुलिनबने विजयी मुरारिरधुना"। "ध्रुवं"॥२२॥
घनचयरुचिरे रचयति चिकुरे तरलिततरुणानने।
कुरवककुसुमं चपलासुषमं रतिपतिमृगकानने 'रमते' २३
घटयति सुघने कुचयुगगगने मृगमदरुचिरूषिते।
मणिसरममलं तारकपटलं नखपदशशिभूषिते "रमते" ॥२४॥

जितविसशकले मृदुभुजयुगले करतलनलिनीदले ।
मरकतवलयं मधुकरनिचयं वितरति हिमशीतले "रमते" २५
रतिगृहजघने विपुलापघने मनसिजकनकासने ।
मणिमयरसनं तोरणहसनं विकिरति कृतवासने "रमते" २६
चरणकिशलये कमलानिलये नखमणिगणपूजिते ।
बहिरपवरणं यावकभरणं जनयति हृदि योजिते "रमते" २७
रमयतिसुदृशं कामपिसुभृशं खलहलधरसोदरे ।
किमफलमवसं चिरमिह विरस वद सखि ! विटपोदरे "रमते"
इह रसभणने कृतहरिगुणने मधुरिपुपदसेवके ।
कलियुगचरितं न वसतु दुरितं कविनृपजयदेवके "रमते" २८
नायातः सखि ! निर्दयो यदि शठस्त्वं दूति ! किं दूयसे
स्वच्छन्दं बहु वल्लभः स रमते किं तत्र ते दूषणम् ।
पश्याद्य प्रियसङ्गमाय दयितस्याकृष्यमाणं गुणै-
रुत्कण्ठार्तिभरादिव स्फुटदिदं चेतः स्वयं यास्यति ॥ ३० ॥

देशवराड़ीरागेण रूपकतालेन गीयते ।

अनिलतरलकुवलयनयनेन तपति न सा किशलयशयनेन ।
"सखि या रमिता वनमालिना" । ध्रुवम् ॥ ३१ ॥
विकसितसरसिजललितमुखेन ।
स्फुटति न सा मनसिजविशिखेन । "सखि या" ३२
अमृतमधुरमृदुतरवचनेन ।
ज्वलति न सा मलयजपवनेन । "सखि या" ॥३३॥
स्थलजलरुहरुचिकरचरणेन ।

लुठति न सा हिमकरकिरणेन । 'सखि या' ॥२४॥
सजलजलदसमुदयरुचिरेण ।
दलति न सा हृदि विरहभरेण । 'सखि या' ॥२५॥
कनकनिकषरुचिशुचिवसनेन ।
श्वसिति न सा परिजनहसनेन । 'सखि या' ॥२६॥
सकलभुवनजनवरतरुणेन ।
वहति न सा रुजमतिकरुणेन । 'सखि या'॥ २७॥
श्रीजयदेवभणितवचनेन ।
प्रविशतु हरिरपि हृदयमनेन । 'सखि या' ॥ २८ ॥

मनोभवानन्दनचन्दनानिल
प्रसीद रे दक्षिण मुञ्च वामताम् ।
क्षणं जगत्प्राण विधाय माधवं
पुरो मम प्राणहरो भविष्यसि ॥ ३९ ॥

रिपुरिव सखीसम्बासोऽयं शिखीव हिमानिलो
विषमिव सुधारश्मिर्यस्मिन् दुनोति मनोगते ।
हृदयमदये तस्मिन्नेवं पुनर्वलते बलात्
कुवलयदृशां वामः कामो निकामनिरङ्कुशः ॥ ४० ॥

वाधां विधेहि मलयानिल पञ्चवाण
प्राणान् गृहाण न गृहं पुनराश्रयिष्ये ।
किं ते कृतान्तभगिनि क्षमया तरङ्गै-
रङ्गानि सिञ्च मम शाम्यतु देहदाहः ॥ ४१ ॥

सान्द्रानन्दपुरन्दरादिदिविषद्वृन्दैरमन्दादराद्

मानव्रैमुकुटेन्द्रनीलमणिभिः सन्दर्शितेन्दीवरम् ।
स्वच्छन्दं मकरन्दसुन्दरगलन्मन्दाकिनीमेदुरम्
श्रीगोविन्दपदारविन्दमशुभस्कन्दाय वन्दामहे ॥ ४२ ॥
इति श्रीगीतगोविन्दे विप्रलब्धावर्णने नागरनारायणो
नाम सप्तमः सर्गः ॥ ७ ॥

---

## विलक्षलक्ष्मीपतिः ।

अथ कथमपि यामिनीं विनीय स्मरशरजर्जरितापि सा प्रभाते ।
अनुनयवचनं वदन्तमग्रे प्रणतमपि प्रियमाह साभ्यसूयम् ॥१॥

भैरवीरागयतितालाभ्यां गीयते ।

रजनिजनितगुरुजागररागकषायितमलसनिमेषं
वहति नयनमनुरागमिव स्फुटमुदितरसाभिनिवेशम् ।
हरिहरि याहि माधव याहि केशव मा वद कैतववादं
तामनुसर सरसीरुहलोचन या तव हरति विषादम् ॥ २ ॥
कज्जलमलिनविलोचनचुम्बनविरचितनीलिमरूपम् ।
दशनवसनमरुणं तव कृष्ण तनोति तनोरनुरूपम् ॥
'हरिहरि याहि' ॥ ३ ॥
वपुरनुहरति तव स्मरसङ्गरखरनखरक्षतरेखम् ।
मरकतसकलकलितकलधौतलिपेरिव रतिजयलेखम् ॥
'हरिहरि याहि' ॥ ४ ॥

चरणकमलगलदलक्तसिक्तमिदं तव हृदयमुदारं ।
दर्शयतीव बहिर्मदनद्रुमनवकिशलयपरिवारम् ।
'हरिहरि याहि' ॥ ५ ॥

दशनपदं भवदधरगतं मम जनयति चेतसि खेदम् ।
कथयति कथमधुनापि मया सह तववपुरेतदभेदम् ॥
'हरिहरि याहि' ॥ ६ ॥

बहिरिव मलिनतरं तव कृष्ण मनोऽपि भविष्यति नूनम् ।
कथमथ वञ्चयसे जनमनुगतमसमशरज्वरदूनम् ।
'हरिहरि याहि' ॥ ७ ॥

भ्रमति भवानबलाकवलाय वनेषु किमत्र विचित्रम् ।
प्रथयति पूतनिकैव बधूबधनिर्दयबालचरित्रम् ।
'हरिहरि याहि' ॥ ८ ॥

श्रीजयदेवभणितरतिवञ्चितखण्डितयुवतिविलापम् ।
शृणुत सुधामधुरं विबुधा विबुधालयतोऽपि दुरापम् ।
'हरिहरि याहि' ॥ ९ ॥

तवेदं पश्यन्त्याः प्रसरदनुरागं बहिरिव
प्रियापादालक्तच्छुरितमरुणच्छायहृदयम् ।
ममाद्य प्रख्यातप्रणयभरभङ्गेन कितव
त्वदालोकः शोकादपि किमपि लज्जां जनयति ॥ १० ॥

प्रातर्नीलनिचोलमच्युतमुरः संवीतपीतांशुकं
राधायाश्चकितं विलोक्य हसति स्वैरं सखीमण्डले ।

व्रीडाचञ्चलमञ्चलं नयनयोराधाय राधानने
स्मेरः स्मेरमुखोऽयमस्तु जगदानन्दाय नन्दात्मजः ॥११॥

इति श्रीगीतगोविन्दे खण्डितावर्णने विलक्ष-
लक्ष्मीपतिर्नाम अष्टमः सर्गः ॥ ८ ॥

---

## मुग्धमुकुन्दः ।

अथ तां मन्मथखिन्नां रतिरसभिन्नां विषादसम्पन्नां
अनुचिन्तितहरिचरितां कलहान्तरितामुवाच रहः सखी ॥१॥

रामकिरीरागयतितालाभ्यां गीयते ।

हरिरभिसरति वहति मधुपवने
किमपरमधिकसुखं सखि भवने ।
'माधवे मा कुरु मानिनि मानमये' । ध्रुवं ॥ २ ॥
तालफलादपि गुरुमतिसरसम् ।
किं विफलीकुरुषे कुचकलसम् । 'माधवे' ॥ ३ ॥
कति न कथितमिदमनुपदमचिरम् ।
मा परिहर हरिमतिशयरुचिरम् । 'माधवे' ॥ ४ ॥
किमिति विषीदसि रोदिषि विकला
विहसति युवतिसभा तव सकला । 'माधवे' ॥ ५ ॥
सजलनलिनीदलशीलितशयने ।
हरिमवलोकय सफलय नयने । 'माधवे' ॥ ६ ॥

जनयसि मनसि किमिति गुरुखेदम् ।
शृणु मम वचनमनीहितभेदम् । 'माधवे' ॥ ७ ॥
हरिरुपयातु वदतु बहुमधुरम् ।
किमिति करोषि हृदयमतिविधुरम् । 'माधवे' ॥८॥
श्रीजयदेवभणितमतिललितं
सुखयतु रसिकजनं हरिचरितम् । 'माधवे' ॥९॥

स्निग्धयत्परुषासि यत्प्रणमसि स्तब्धासि यद्रागिणि
द्वेषस्थासि यदुन्मुखे विमुखतां यातासि तस्मिन् प्रिये ।
तद्युक्तं विपरीतकारिणि तव श्रीखण्डचर्चा विषं
शीतांशुस्तपनो हिमं हुतवहः क्रीडामुदो यातनाः ॥ १० ॥

अन्तर्मोहनमौलिघूर्णनचलन्मन्दारविस्रंसन
स्तब्धाकर्षणदृष्टिहर्षणमहामन्त्रः कुरङ्गीदृशाम् ।
दृप्यद्दानवदूयमानदिविषद्दुर्वारदुःखापदां
भ्रंशः कंसरिपोर्व्यपोहतु स वोऽश्रेयांसि वंशीरवः ॥ ११ ॥

इति श्रीगीतगोविन्दे कलहान्तरितावर्णने ।
मुग्धमुकुन्दो नाम नवमः सर्गः ॥ ९ ॥

---

## चतुरचतुर्भुजः ।

अत्रान्तरे मसृणरोषवशामसीम
निश्वासनिःसहमुखीं सुमुखीमुपेत्य ।

सव्रीडमीलितसखीवदनां दिनान्ते
सानन्दमन्दपदं हरिरित्युवाच ॥ १ ॥

देशवराडीरागाष्टतालाभ्यां गीयते ।

वदसि यदि किञ्चिदपि दन्तरुचिकौमुदी
हरति दरतिमिरमतिघोरम् ।
स्फुरदधरसीधवे तव वदनचन्द्रमा
रोचयति लोचनचकोरम् ।
'प्रिये चारुशीले मुञ्च मयि मानमनिदानं
सपदि मदनानलो दहति मम मानसम् ।
देहि मुखकमलमधुपानम्' । ध्रुवम् ॥ २ ॥
सत्यमेवासि यदि सुदति मयि कोपिनी
देहि खरनयनशरघातम् ।
घटय भुजबन्धनं जनय रदखण्डनं
येन वा भवति सुखजातम् । 'प्रिये' ॥ ३ ॥
त्वमसि मम भूषणं त्वमसि मम जीवनं
त्वमसि मम भवजलधिरत्नम् ।
भवतु भवतीह मयि सततमनुरोधिनी
तत्र मम हृदयमतियत्नम् । "प्रिये" ॥ ४ ॥
नीलनलिनाभमपि तन्वि तव लोचनं
धारयति कोकनदरूपम् ।
कुसुमशरबाणभावेन यदि रञ्जयसि
कृष्णमिदमेतदनुरूपम् । "प्रिये" ॥ ५ ॥

स्फुरतु कुचकुम्भयोरुपरि मणिमञ्जरी
रञ्जयतु तव हृदयदेशम्।
रसतु रसनापि तव घनजघनमण्डले
घोषयतु मन्मथनिदेशम्। "प्रिये" ॥ ६ ॥
स्थलकमलगञ्जनं मम हृदयरञ्जनं
जनितरतिरङ्गपरभागम्।
भण मसृणवाणि करवाणि चरणद्वयं
सरसलसदलक्तकरागम्। "प्रिये" ॥ ७ ॥
स्मरगरलखण्डनं मम शिरसि मण्डनं
देहि पदपल्लवमुदारम्।
ज्वलति मयि दारुणो मदनकदनानलो
हरतु तदुपाहितविकारम्। "प्रिये" ॥ ८ ॥
इति चटुलचाटुपटुचारु मुरवैरिणो
राधिकामधिवचनजातम्।
जयति पद्मावतीरमणकविभारती
जयदेवभणितमतिशातम्। "प्रिये" ॥ ९ ॥
परिहर कृतातङ्के शङ्कां त्वया सततं घन-
स्तनजघनयाक्रान्ते स्वान्ते परानवकाशिनि।
विशति वितनोरन्यो धन्यो न कोऽपि ममान्तरं
स्तनभरपरीरम्भारम्भे विधेहि विधेयताम् ॥ १० ॥
मुग्धे विधेहि मयि निर्दयदन्तदंशं
दोर्वल्लिबन्धनिबिडस्तनपीडनानि।

चण्डि त्वमेवं मुदमञ्चय पञ्चबाण
चाण्डालकाण्डदलनादसवः प्रयान्ति ॥ ११ ॥

शशिमुखि तव भाति भङ्गुरभ्रूर्युवजनमोहकरालकालसर्पः ।
तदुदितभयभञ्जनाय यूनां त्वदधरसीधुसुधैव सिद्धमन्त्रः ॥ १२ ॥

व्यथयति वृथा मौनं तन्वि प्रपञ्चय पञ्चमं
तरुणि मधुरालापैस्तापं विनोदय दृष्टिभिः ।
सुमुखि विमुखीभावं तावद्विमुञ्च न मुञ्च मां
स्वयमतिशयस्निग्धे मुग्धे प्रियोऽहमुपस्थितः ॥ १३ ॥

बन्धूकद्युतिबान्धवोऽयमधरः स्निग्धो मधूकच्छवि
र्गण्डश्चण्डि चकास्ति नीलनलिनश्रीमोचनं लोचनम् ।
नासाभ्येति तिलप्रसूनपदवीं कुन्दाभदन्ति प्रिये
प्रायस्त्वन्मुखसेवया विजयते विश्वं स पुष्पायुधः ॥ १४ ॥

दृशौ तव मदालसे वदनमिन्दुसन्दीपकं
गतिर्जनमनोरमा विजितरम्भमूरुद्वयम् ।
रतिस्तव कलावती रुचिरचित्रलेखे भ्रुवौ
अहो विबुधयौवतं वहसि तन्वि पृथ्वीगता ॥ १५ ॥

प्रीतिं वस्तनुतां हरिः कुवलयापीडेन सार्द्धं रणे
राधापीनपयोधरस्मरणकृत्कुम्भेन सम्भेदवान् ।
यत्र स्विद्यति मीलति क्षणमथ क्षिप्ते द्विपे तत्क्षणात्
कंसस्यालमभूज्जितं जितमिति व्यामोहकोलाहलः ॥ १६ ॥

इति श्रीगीतगोविन्दे मानिनीवर्णने चतुरचतुर्भुजो
नाम दशमः सर्गः ॥ १० ॥

# सानन्ददामोदरः ।

सुचिरमनुनयेन प्रीणयित्वा मृगाक्षीं
गतवति कृतवेषे केशवे कुञ्जशय्याम् ।
रचितरुचिरभूषां दृष्टिमोषे प्रदोषे
स्फुरति निरवसादां कापि राधां जगाद ॥ १ ॥

वसन्तरागयतितालाभ्यां गीयते ।

विरचितचाटुवचनरचनं चरणे रचितप्रणिपातम् ।
संप्रति मंजुलवंजुलसीमनि केलिशयनमनुयातम् ।
"मुग्धे मधुमथनमनुगतमनुसर राधिके" । ध्रुवम् ॥ २ ॥
घनजघनस्तनभारभरे दरमन्थरचरणविहारम् ।
मुखरितमणिमञ्जीरमुपैहि विधेहि मरालविकारम् "मुग्धे" ३
शृणु रमणीयतरं तरुणीजनमोहनमधुरिपुरावम् ।
कुसुमशरासनशासनवन्दिनि पिकनिकरे भज भावं "मुग्धे" ४
अनिलतरलकिशलयनिकरेण करेण लतानिकुरम्बं
प्रेरणमिव करभोरु करोति गतिं प्रतिमुञ्च विलम्बं "मुग्धे" ५
स्फुरितमनङ्गतरङ्गवशादिव सूचितहरिपरिरम्भम् ।
पृच्छ मनोहरहारविमलजलधारममुं कुचकुम्भम् "मुग्धे" ॥६॥
अधिगतमखिलसखीभिरिदं तव वपुरपि रतिरणसज्जम् ।
चण्डि रणितरसनारवडिण्डिममभिसर सरसमलज्जम् "मुग्धे"
स्मरशरसुभगनखेन करेण सखीमवलम्ब्य सलीलम् ।
चलवलयक्वणितैरवबोधय हरिमपि निजगतिशीलम् 'मुग्धे' ।८॥

श्रीजयदेवभणितमधरीकृतहारमुदासितवामम् ।
हरिविनिहित मनसामधितिष्ठतु कण्ठतटीमविरामम् 'मुग्धे'
सा मां द्रक्ष्यति वक्ष्यति स्मरकथां प्रत्यङ्गमालिङ्गनैः
प्रीतिं यास्यति रंस्यते सखि समागत्येति चिन्ताकुलः ।
स त्वां पश्यति कम्पते पुलकयत्यानन्दति स्विद्यति
प्रत्युद्गच्छति मूर्च्छति स्थिरतमः पुञ्जे निकुञ्जे प्रियः ॥ १० ॥
अक्ष्णोर्निक्षिपदञ्जनं श्रवणयोस्तापिच्छगुच्छावलीं
मूर्ध्नि श्यामसरोजदाम कुचयोः कस्तूरिकापत्त्रकम् ।
धूर्त्तानामभिसारसत्वरहृदां विष्वङ्निकुञ्जे सखि
ध्वान्तं नीलनिचोलचारु सुदृशां प्रत्यङ्गमालिङ्गति ॥ ११ ॥

काश्मीरगौरवपुषामभिसारिकाणा-
माबद्धरेखमभितो रुचिमञ्जरीभिः ।
एतत्तमालदलनीलतमं तमिस्रं
तत्प्रेमहेमनिकषोपलतां तनोति ॥ १२ ॥
हारावलीतरलकाञ्चनकाञ्चिदाम
केयूरकङ्कणमणिद्युतिदीपितस्य ।
द्वारे निकुञ्जनिलयस्य हरिं निरीक्ष्य
व्रीडावतीमथ सखी निजगाद राधाम् ॥ १३ ॥

वराड़ीरागरूपकतालाभ्यां गीयते ।

मञ्जुतरकुञ्जतलकेलिसदने ।
'प्रविश राधे माधवसमीपमिह' ।
विलस रतिरभसहसितवदने ॥ १४ ॥

नवभवदशोकदलशयनसारे ।
'प्रविश राधे माधवसमीपमिह' ।
विलस कुचकलसतरलहारे ॥ १५ ॥
कुसुमचयरचितशुचिवासगेहे ।
'प्रविश राधे माधवसमीपमिह' ।
विलस कुसुमसुकुमारदेहे ॥ १६ ॥
चलमलयवनपवनसुरभिशीते ।
'प्रविश राधे माधवसमीपमिह' ।
विलस रतिवलितललितगीते ॥ १७ ॥
विततबहुवल्लिनवपल्लवघने ।
'प्रविश राधे माधवसमीपमिह' ।
विलस चिरमलसपीनजघने ॥ १८ ॥
मधुमुदितमधुपकुलकलितरावे ।
'प्रविश राधे माधवसमीपमिह' ।
विलस मदनरभसरसभावे ॥ १९ ॥
मधुतरलपिकनिकरनिनदमुखरे ।
'प्रविश राधे माधवसमीपमिह'
विलस दशनरुचिरुचिरशिखरे ॥ २० ॥
विहितपद्मावतीसुखसमाजे ।
कुरु मुरारे मङ्गलशतानि ।
भणति जयदेवकविराजराजे ॥ २१ ॥
त्वां चित्तेन चिरं वहन्नयमिति श्रान्तो भृशं तापितः

कन्दर्पेण च पातुमिच्छति सुधासंबाधबिम्बाधरम् ।
अस्याङ्कं तदलं कुरु क्षणमिह भ्रूक्षेपलक्ष्मीलव-
क्रीते दासइवोपसेवितपदाम्भोजे कुतः सम्भ्रमः ॥ २२ ॥
सा ससाध्वससानन्दं गोविन्दे लोललोचना ।
सिञ्जाना मंजु मंजीरं प्रविवेश निकेतनम् ॥ २३ ॥

वराडीरागयतितालाभ्यां गीयते ॥

राधावदनविलोकनविकसितविविधविकारविभङ्गं
जलनिधिमिव विधुमण्डलदर्शनतरलिततुङ्गतरङ्गम् ।
हरिमेकरसं चिरमभिलषितविलासं
'सा ददर्श गुरुहर्षवशम्वदवदनमनङ्गविकाशम्' ध्रुवं २४॥
हारममलतरतारमुरसि दधतं परिलम्ब्य विदूरम् ।
स्फुटतरफेनकदम्बकरम्बितमिव यमुनाजलपूरं 'हरिमेकरसं'
श्यामलमृदुलकलेवरमण्डलमधिगतगौरदुकूलम् ।
नीलनलिनमिव पीतपरागपटलभरवलयितमूलं 'हरिमेकरसं'
तरलदृगञ्चलचलनमनोहरवदनजनितरतिरागम् ।
स्फुटकमलोदरखेलितखञ्जनयुगमिव शरदि तडागम् ।
'हरिमेकरसं' ॥ २७ ॥
वदनकमलपरिशीलनमिलितमिहिरसमकुण्डलशोभम् ।
स्मितरुचिरुचिरसमुल्लसिताधरपल्लवकृतरतिलोभं 'हरिमेकरसं'
शशिकिरणच्छुरितोदरजलधरसुन्दरसकुसुमकेशम् ।
तिमिरोदितविधुमण्डलनिर्मलमलयजतिलकनिवेशम् ।
'हरिमेकरसम्' । २८ ॥

विपुलपुलकभरदन्तुरितं रतिकेलिकलाभिरधीरम् ।
मणिगणकिरणसमूहसमुज्ज्वलभूषणसुभगशरीरम् ।
'हरिमेकरसम्' ॥ ३० ॥

श्रीजयदेवभणितविभवद्विगुणीकृतभूषणभारम् ।
प्रणमत हृदि विनिधाय हरिं सुचिरं सुकृतोदयसारम् ।
'हरिमेकरसम्' ॥ ३१ ॥

अतिक्रम्यापाङ्गं श्रवणपथपर्य्यन्तगमन-
प्रयासेनैवाक्ष्णोस्तरलतरतारं पतितयोः ।
इदानीं राधायाः प्रियतमसमालोकसमये
पपात स्वेदाम्बुप्रसर इव हर्षाश्रुनिकरः ॥ ३२ ॥

भजन्त्यास्तल्पान्तं कृतकपटकण्डूतिपिहित
स्मिते याते गेहाद्बहिरवहितालीपरिजने ।
प्रियास्यं पश्यन्त्याः स्मरशरवशाकूतसुभगं
सलज्जा लज्जापि व्यगमदिव दूरं मृगदृशः ॥ ३३ ॥

जयश्रीविन्यस्तैर्महित इव मन्दारकुसुमैः
स्वयंसिन्दूरेण द्विपरणमुदा मुद्रित इव ।
भुजापीड़क्रीड़ाहतकुवलयापीड़करिणः
प्रकीर्णासृग्बिन्दुर्जयति भुजदण्डो मुरजितः ॥ ३४ ॥

इति श्रीगीतगोविन्दे राधिकामिलने सानन्ददामोदरो
नाम एकादशः सर्गः ॥ ११ ॥

---

## सुप्रीतपीताम्बरः ।

गतवति सखीवृन्दे मन्दत्रपाभरनिर्भर-
स्मरशरवशाकूतस्फीतस्मितस्नपिताधराम् ।
सरसमनसां दृष्ट्वा राधां मुहुर्नवपल्लव
प्रसवशयने निक्षिप्ताक्षीमुवाच हरिः प्रियाम् ॥ १ ॥

विभासरागैकतालीतालाभ्यां गीयते ।

किसलयशयनतले कुरु कामिनि चरणनलिनविनिवेशम् ।
तव पदपल्लववैरिपराभवमिदमनुभवतु सुवेशम् ।
'क्षणमधुना नारायणमनुगतमनुसर राधिके' । ध्रुवं ॥ २ ॥
करकमलेन करोमि चरणमहमागमितासि विदूरम् ।
क्षणमुपकुरु शयनोपरि मामिव नूपुरमनुगतिशूरं 'क्षणमधुना'
वदनसुधानिधिगलितममृतमिव रचय वचनमनुकूलम् ।
विरहमिवापनयामि पयोधररोधकमुरसि दुकूलं 'क्षणमधुना'
प्रियपरिरम्भणरभसवलितमिव पुलकितमतिदुरवापम् ।
मदुरसि कुचकलशं विनिवेशय शोषय मनसिजतापं 'क्षणमधुना'
अधरसुधारसमुपनय भामिनि जीवय मृतमिव दासम् ।
त्वयि विनिहितमनसं विरहानलदग्धवपुषमविलासम् ।
'क्षणमधुना' ॥ ६ ॥
शशिमुखि मुखरय मणिरसनागुणमनुगुणकण्ठनिनादम् ।
श्रुतियुगले पिकरुतविकले मम शमय चिरादवसादम् ।
'क्षणमधुना' ॥ ७ ॥

मामतिविफलरुषा विकलीकृतमवलोकितुमधुनेदम् ।
मीलितलज्जितमिव नयनं तव विरम विसृज रतिखेदम् ।
'क्षणमधुना' ॥ ८ ॥

श्रीजयदेवभणितमिदमनुपदनिगदितमधुरिपुमोदम् ।
जनयतु रसिकजनेषु मनोरमरतिरसभावविनोदम् ।
'क्षणमधुना' ॥ ९ ॥

प्रत्यूहः पुलकाङ्कुरेण निविडाश्लेषे निमेषेण च
क्रीड़ाकूतविलोकितेऽधरसुधापाने कथाकेलिभिः ।
आनन्दाधिगमेन मन्मथकलायुद्धेऽपि यस्मिन्नभूत्
उद्भूतः स तयोर्बभूव सुरतारम्भः प्रियम्भावुक ॥ १० ॥
दोर्भ्यां संयमितः पयोधरभरेणापीड़ितः पाणिजै
राविद्धो दशनैः क्षताधरपुटः श्रोणीतटेनाहतः ।
हस्तेनानमितः कचेऽधरमधुस्यन्देन सम्मोहितः
कान्तः कामपि तृप्तिमाप तदहो कामस्य वामा गतिः ॥ ११ ॥
मारङ्के रतिकेलिसङ्कुलरणारम्भे तया साहस
प्रायं कान्तजयाय किञ्चिदुपरि प्रारम्भि यत्सम्भ्रमात् ।
निष्पन्दा जघनस्थली शिथिलिता दोर्वल्लिरुत्कम्पितं
वक्षो मीलितमक्षि पौरुषरसः स्त्रीणां कुतः सिद्ध्यति ॥१२॥
तस्याः पाटलपाणिजाङ्कितमुरो निद्राकषाये दृशौ
निर्धूतोऽधरशोणिमा विलुलितस्रस्तस्रजो मूर्द्धजाः ।
काञ्चीदाम दरश्लथाञ्चलमिति प्रातर्निखातैर्दृशोः
एभिः कामशरैस्तदद्भुतमभूत्पत्युर्मनः कीलितम् ॥ १३ ॥

त्वामप्राप्य मयि स्वयंवरपरां क्षीरोदतीरोदरे
शङ्के सुन्दरि कालकूटमपिबन्मूढो मृडानीपतिः ।
इत्थं पूर्व्वकथाभिरन्यमनसो निक्षिप्य वामाञ्चलं
राधायाः स्तनकोरकोपरिचलन्नेत्रो हरिः पातु वः ॥ १४ ॥
व्यालोलः केशपाशस्तरलितमलकैः स्वेदलोलौ कपोलौ
स्पष्टा दष्टाधरश्रीः कुचकलशरुचा हारिता हारयष्टिः ।
काञ्ची काञ्चिद्गताशां स्तनजघनपदं पाणिनाच्छाद्य सद्यः
पश्यन्ती चात्मरूपं तदपि विलुलितस्रग्धरेयं धिनोति ॥ १५ ॥
ईषन्मीलितदृष्टि मुग्धहसितं शीत्कारधारावशाद्
अव्यक्ताकुलकेलिकाकुविकसद्दन्तांशुधौताधरम् ।
श्वासोन्नद्धपयोधरं परिपरिष्वङ्गात् कुरङ्गीदृशो
हर्षोत्कर्षविमुक्तिनिःसहतनोर्धन्यो धयत्याननम् ॥ १६ ॥
अथ सहसा सन्तुष्टं सुरतान्ते सा नितान्तखिन्नाङ्गी
राधा जगाद सादरमिदमानन्देन गोविन्दम् ॥ १७ ॥

रामकिरीरागयतितालाभ्यां गीयते ।

कुरु यदुनन्दन चन्दनशिशिरतरेण करेण पयोधरे
मृगमदपत्रकमत्र मनोभवमङ्गलकलससहोदरे ।
निजगाद सा यदुनन्दने क्रीडति हृदयानन्दने ॥ १८ ॥
अलिकुलगञ्जनमञ्जनकं रतिनायकशायकमोचने
त्वदधरचुम्बनलम्बितकज्जलमुज्ज्वलय प्रिय लोचने ।
'निजगाद सा' ॥ १९ ॥
नयन कुरङ्गतरङ्गविकाशनिरासकरे श्रुतिमण्डले ।

मनसिजपाशविलासधरे शुभवेशनिवेशय कुण्डले ॥

'निजगाद सा' ॥ २० ॥

भ्रमरचयं रचयन्तमुपरि रुचिरं सुचिरं मम सम्मुखे ।
जितकमले विमले परिकर्मय नर्मजनकमलकं मुखे ॥

'निजगाद सा' ॥ २१ ॥

मृगमदरसवलितं ललितं कुरु तिलकमलिकरजनीकरे ।
विहितकलङ्ककलं कमलानन विश्रमितश्रमशीकरे ॥

'निजगाद सा' ॥ २२ ॥

मम रुचिरे चिकुरे कुरु मानद मानसजध्वजचामरे ।
रतिगलिते ललिते कुसुमानि शिखण्डिशिखण्डकडामरे ॥

'निजगाद सा' ॥ २३ ॥

सरसघने जघने मम शम्बरदारणवारणकन्दरे ।
मणिरसनावसनाभरणानि शुभाशय वासय सुन्दरे

"निजगाद सा" ॥ २३ ॥

श्रीजयदेववचसि जयदे हृदयं सदयं कुरु मण्डने ।
हरिचरणस्मरणामृतकृतकलिकलुषज्वरखण्डने

"निजगाद सा" ॥ २४ ॥

रचय कुचयोः पत्रं चित्रं कुरुष्व कपोलयो
र्घटय जघने काञ्चीमञ्च स्रजा कवरीभरम् ।
कलयवलयश्रेणीं पाणौ पदे कुरु नूपुरौ
इति निगदितः प्रीतः पीताम्बरोऽपि तथाकरोत् ॥२५॥

पर्य्यङ्कीकृतनागनायकफणाश्रेणीमणीनाङ्गणे

संक्रान्तप्रतिबिम्बसंवलनया बिभ्रद्विभुप्रक्रियाम् ।
पादाम्भोरुहधारिवारिधिसुतामक्ष्णां दिदृक्षुः शतैः
कायव्यूहमिवाचरन्नुपचितीभूतो हरिः पातु वः ॥ २६ ॥

यद्गान्धर्वकलासु कौशलमनुध्यानञ्च यद्वैष्णवं
यच्छृङ्गारविवेकतत्त्वमपि यत् काव्येषु लीलायितम् ।
तत्सर्व्वं जयदेवपण्डितकवेः कृष्णैकतानात्मनः
सानन्दाः परिशोधयन्तु सुधियः श्रीगीतगोविन्दतः ॥२७॥

श्रीभोजदेवप्रभवस्य रामादेवीसुतश्रीजयदेवकस्य ।
पराशरादिप्रियवर्गकण्ठे श्रीगीतगोविन्दकवित्वमस्तु॥२८॥

इति श्रीगीतगोविन्दे स्वाधीनभर्त्तृकावर्णने सुप्रीत
पीताम्बरो नाम द्वादश सर्गः ॥ १२ ॥

---

सम्पूर्णम् ।

२४ कुमारसम्भव—उत्तरखण्ड ... ॥

२५ अष्टकम् पाणिनीयम् ... ।॥

२६ वाचस्पत्यम् [संस्कृत-बृहदभिधान] ... ६०

२७ कादम्बरी—सटीक ... ४

२८ राजप्रशस्ति ... =

२९ अनुमानचिन्तामणि तथा अनुमानदीधिति ४

३० सर्वदर्शनसंग्रह ... २

३१ भामिनीविलास—सटीक ... १

३२ हितोपदेश—सटीक ... १

३३ भाषापरिच्छेद मुक्तावलीसहित ... १

३४ बहुविवाहवाद ... ।

३५ दशकुमारचरित—सटीक ... १॥

३६ परिभाषेन्दुशेखर ... १॥

३७ कविकल्पद्रुम (वोपदेवकृत धातुपाठ) ... ॥

३८ चक्रदत्त (वैद्यक) ... २॥

३९ उणादिसूत्र—सटीक ... २

४० मेदिनी कोष ... २॥

४१ पञ्चतन्त्रम् [श्रीविष्णु-शर्म्म-सङ्कलितम्] ... २॥

४२ विद्वन्मोदतरङ्गिणी (चम्पूकाव्य) ... ॥

४३ माधवचम्पू ... ।=

४४ तर्कसंग्रह (इंराजी अनुवाद सहित) ... ॥

४५ प्रसन्नराघवनाटक (श्रीजयदेवकविरचित) १॥

४६ विवेकचूड़ामणि [श्रीमत्शङ्कराचार्य्य विरचित] ।=

४७ काव्यसंग्रह [सम्पूर्ण] ... ५

४८ लिङ्गानुशासन (सटीक) ... ।

४९ ऋतुसंहार—सटीक ... ।=